दानवा यस्मिन् जजनेषु विनेशुः। यस्मिन् व्रजे। जजनेषु युद्धेषु। कीदृशा इत्यत्राह – विस्फूर्जदक्षीणघनाघनोपमक्षीजाः। विस्फूर्जद्भिः स्तनयद्भिः [1]अक्षीणैः पूर्णैः घनाघनैः [2]मेघैः उपमा यस्य तादृशः क्षीजः अव्यक्तशब्दः येषां ते। अलाञ्जितान् कैरप्यभर्त्सितान् त्रिदशान् लजन्तो भर्त्सयन्तः। लाजादिहोतृष्वपि लञ्जनप्रदा भर्त्सनप्रदाः॥

विस्फूर्जदिति। टु ओ **स्फूर्जा** [3]वज्रनिर्घोषे। शता। अक्षीणेति। **क्षि** क्षये। कर्तरि क्तः। 'निष्ठायामण्यदर्थे' [६.४.६०] इति दीर्घे 'क्षियो दीर्घात्' [८.२.४६] इति निष्ठानत्वम्। क्षीजेति। **क्षीज** अव्यक्ते शब्दे। घञ्। लजन्त इति। **लज** [4]**लाजि** भर्त्सने **लाज** [5]**लजि** भर्त्सने। भर्जने चेति लीलाशुकः[6]। लजेः शता। अलाञ्जितान्। [7]लाञ्जेः कर्मणि क्तः। लाजेति। [8]लाजेः कर्मणि घञ्। लञ्जनेति। लञ्जेर्ल्युट्। जजनेषु **जज जजि** युद्धे। जजेर्ल्युट्॥

**जहर्ष जञ्जातुजितस्थलैरसौ**
**वृषैरतुञ्जैर्गजगञ्जिभिर्वृतम्।**
**गर्जत्खरं गृञ्जितधेनुमोमुज-**
**द्वत्सोत्करं मुञ्जदजं वजन्व्रजम्॥३३॥**

असौ व्रजं वजन् जहर्ष। वजन् प्राप्नुवन्। कीदृशं व्रजम्[9]। वृषैर्वृतं व्याप्तम्। कीदृशैर्वृषैः[10]। जञ्जातुजितस्थलैः जञ्जया परस्परयुद्धेन तुजितानि पीडितानि स्थलानि यैस्तैः। अतुञ्जैः नराणामहिंसकैः। गजगञ्जिभिः [11]गज इव शब्दायमानैः। कीदृशं व्रजम्। गर्जत्खरं गर्जन्तः शब्दायमानाः खरा यस्मिंस्तम्। गृञ्जितधेनुमोमुजद्वत्सोत्करं गृञ्जिता [12]हुम्फारवं [13]कुर्वत्यो [14]धेनवो

1 K 2 om. this word.
2 K 5.6 om. this word.
3 K 1.2 वज्रनिष्पेषे.
4 E लजि.
5 E लाजि.
6 लज लाजि भर्जने, लाज लजि भर्त्सने च – *Puruṣakāra* under *Daiva* 69.
7 E लाजेः.
8 K 1.3–5 om. this word.
9 K 2–6 add इत्यत्राह.
10 K 2 adds अत्राह, K 6 तत्राह.
11 K 2 गजा.
12 K 1.3.4 E हुंकाररवं.
13 K 1.3.4 E कुर्वाणा.
14 K 5.6 om. this word.

नवप्रसूता गावो यस्मिंस्तं च[1]। मोमुजतः पुनः पुनः शब्दायमाना वत्सोत्करा यस्मिंस्तं च[2]। मुञ्जदजं मुञ्जन्तः नदन्तः [3]अजाः छागा यस्मिंस्तं च॥

जञ्जेति। जञ्जेः 'गुरोश्च'–[३.३.१०३] इत्यकारः। तुजितेति। **तुज** हिंसायाम्। कर्मणि क्तः। अतुञ्जैः। **तुजि** पालने च। प्राणने च द्रुमे[4]। अच्। गजेति। **गज गजि गृज गृजि मुज मुजि** शब्दार्थाः। गज मदने च। मज मजि इत्यप्येके। शब्दायते माद्यति वेत्यर्थे गजेरच्। गञ्जीति। गञ्जेः 'कर्तर्युपमाने' [३.२.७९] इति णिनिः। गर्जदिति। गृजेः शता। गृञ्जितेति। गृञ्जेः कर्तरि क्तः। मोमुजदिति। मुजेर्यङ्लुकि शता। मुञ्जदिति मुञ्जेः शता। वजन्। **वज व्रज** गतौ। वजेः शता। व्रजेः 'गोचरसंचर–' [३.३.११९] इत्यादिना घः॥

**मार्गात् स दृष्ट्वा हरिपादलाञ्छनं**
**व्यवेष्टतोर्व्यां महनीयचेष्टितः।**
**तत्केलिसंगोष्टितलोष्टमानमद्**
**वने मरुद्धट्टितपोस्फुटद्द्रुमे ॥३४॥**

मार्गात् स हरिपादलाञ्छनं दृष्ट्वा उर्व्यां [5]व्यवेष्टत। मार्गात् मार्गमतिक्रान्तवान्। व्यवेष्टत विलुठितवान्। महनीयचेष्टितो महनीयं चेष्टितं व्यापारो यस्य सः। वने तत्केलिसंगोष्टितलोष्टमानमत्। तस्य भगवतः केल्या संगोष्टितं संघातीकृतं लोष्टमिष्टकाखण्डम्। कीदृशे वने। मरुद्धट्टितपोस्फुटद्द्रुमे मरुद्धट्टिता वायुभिः कम्पिताः। अत एव पोस्फुटतः अत्यर्थं दलन्तो द्रुमा यस्मिंस्तस्मिन्॥

मार्गादिति। **अट्ट** अतिक्रमहिंसयोः[6]। शाङ्न्ता उदात्ता अनुदात्तेतः। दोपधस्तोपधो वायम्। टोपधोऽपि द्रुमे[7]। अस्मात् क्विपि संयोगान्तलोपः। व्यवेष्टत। **वेष्ट** [8]वेष्टने। विलुठनेऽकर्मकः। [9]अस्माल्लङ्। चेष्टितेति।

1, 2 K 5. 6 E तच्च.
3 K 5. 6 om. this word.
4 तुजि प्राणेऽवने – *KK*. 120.
5 E adds महनीयचेष्टितः before.
6 E हिंसनयोः.
7 अट्ट अत्ट अद्ट ङ् अतिक्रमे वधे– *KK*. 133.
8 K 1. 3. 4 E om. this word.
9 K 1. 3. 4 E om. अस्मात्.

चेष्ट चेष्टायाम्। अस्मात् सिद्धभावे क्तः। गोष्टितेति। गोष्ट लोष्ट संघाते। गोष्टेर्णिजन्तात् कर्मणि क्तः। लोष्टमिति। पचाद्यच्। घट्टितेति। घट्ट चलने। कर्तरि क्तः। पोस्फुटदिति। स्फुट विकसने। यङ्लुगन्तात् शता ॥

अनन् कुमार्गेषु शुभाध्वनैव वन्
प्रमन् भृशोत्कण्ठितगोपिके हरौ ।
स पापमुन्भिर्बुधहेड्भिरुन्मदै-
रनेठितां क्ष्मां पुनरप्यहिण्डत ॥३५॥

स उन्मदैरनेठितां क्ष्मां पुनरप्यहिण्डत। उन्मदैः उद्भूतमदैः अनेठिताम् अपीडिताम् अहिण्डत अगच्छत्। कीदृशः[1]। कुमार्गेषु [2]अनन् अगच्छन्। शुभाध्वना एव वन् असहाय एव गच्छन्। भृशोत्कण्ठितगोपिके हरौ प्रमन् भृशमुत्कण्ठिता [3]उत्सुका गोपिका यस्मिंस्तस्मिन्। [4]प्रमन् सोत्कण्ठस्मृतिमान्। कीदृशैरुन्मदैः। पापमुन्भिः पापस्य पालकैः। बुधहेड्भिः बुधानां बाधकैः ॥

अनन्निति। अठि गतौ। अस्मात् क्विपि संयोगान्तलोपे अन्। तस्मान्नञ्समासे नुट्। वन्निति। वठि एकचर्यायाम्। सा चासहायगमनम्। प्राग्वत् क्विप्। प्रमन्निति। मठि कठि शोके। अत्र शोकः सोत्कण्ठस्मरणम्। उत्कण्ठामात्रे त्वकर्मकः। मण्ठेः प्राग्वत् क्विप् संयोगान्तलोपश्च। उत्कण्ठितेति। कण्ठेः कर्तरि क्तः। पापमुन्भिः। मुठि पालने। क्विप्। बुधहेड्भिः। हेठ [5]विबाधायाम्। एठ च। हेठेः क्विप्। अनेठिताम्। एठेः कर्मणि क्तः। अहिण्डत। हिडि गत्यनादरयोः। लङ् ॥

प्रहुण्डितानैक्षत चारुकुण्डलान्
प्रवण्डितार्थानविमण्डिताशयान् ।
स भण्डिलो भोजनृपालपिण्डभुक्
प्रमुण्डितांस्तत्र जनानतुण्डकान् ॥३६॥

---

1 K 2 adds इत्यत्राह.
2 K 1 adds अन् गच्छन् before.
3 K 1. 3. 4 E om. this word.
4 E om. this word.
5 K 1. 3. 4 D 2 om. वि-.

भण्डिलः स तत्र प्रहुण्डितान् जनान् ऐक्षत। भण्डिलो दूतः। प्रहुण्डितान् संघातीभूतान्। चारुकुण्डलान् चारूणि कुण्डलानि येषां तान्। प्रवण्डितार्थान् प्रवण्डिताः सम्यक् विभक्ता अर्थाः पुरुषार्था धनानि वा येषां तान्। अविमण्डिताशयान्। अविमण्डितोऽविभक्त आशयो येषां तान्। एकमनस्कानित्यर्थः। प्रमुण्डितान् अत्यन्तशुद्धान्। अतुण्डकान् अहिंसकान्। पिण्डमन्नम् ॥

प्रहुण्डितानिति। **हुडि** संघाते। कर्तरि क्तः। कुण्डलेति। **कुडि** दाहे। 'मृदिमण्डिकुण्डिकन्दिभ्योऽलच्'[1] इत्यलच्। प्रवण्डितेति। **वडि** विभाजने। **मडि** च। द्वौ वेष्टनेऽपीत्येके। वण्डेः कर्मणि क्तः। अविमण्डितेति। मण्डेः कर्मणि क्तः। भण्डिल इति। **भडि** परिभाषणे। तच्च परितो भाषणम्, सनिन्दवचनं वा। परिहास इत्येके। अस्मात् 'सलिकल्यनिभटिभण्डितण्डिभ्य इलच्' [उण्. १.५३] इतीलच्। पिण्डेति। **पिडि** संघाते। पचाद्यच्। प्रमुण्डितान्। **मुडि** मार्जने। शुद्धिन्यग्भावौ तत्। कर्तरि क्तः। अतुण्डकान्। **तुडि** तोडने। दारणं हिंसनं वा तत्। अस्मात् ण्वुल् ॥

**[2]अभुण्डितोच्चण्डगतीनशण्डनान्[3]**
**कुमार्गवैतण्डिकपण्डितावृतान्।**
**स तानकण्डान् दधिखण्डनादिक-**
**[4]स्वधर्मसक्तान् गतहेडमानमत् ॥३७॥**

स तान् [5]गतहेडमानमत्। गतहेडं गतावज्ञं यथा तथा नमस्कृतवान्। कीदृशान्। अभुण्डितोच्चण्डगतीन् अस्वीकृतक्रूरव्यापारान्। अशण्डनान् न शण्डनं [6]परिपीडा येषां तान्। कुमार्गवैतण्डिकपण्डितावृतान् असन्मार्गस्थ

1 *SKĀ*. 2.3.93.
2 V अहुण्डित.
3 D 1 अशण्डकान् for अशण्डनान्.
4 K 3 स्वकर्म.
5 K 5 om. गत......मत्.
6 K 1 परपीडा.

वैतण्डिकाः खण्डनैकपरा ये पण्डितास्तैरावृतान् मिश्रान्। अकण्डान् मद-रहितान्। दधिखण्डनादिकस्वधर्मसक्तान्[1] दधिखण्डनादिके [2]दधिमथनादिके स्वधर्मे [3]सक्तान् ॥

अभुण्डितेति। **भुडि** वरणे। स्वीकारस्तत्। हरण इत्येके। [4]कर्मणि क्तः। उच्चण्डेति। **चडि** कोपे। पचाद्यच्। क्रूरत्वार्थो लक्षणया। शण्ड-नेति। **शडि** रुजायां सङ्घाते च। ल्युट्। वैतण्डिकेति। **तडि** ताडने। अस्माद् 'गुरोश्च हलः' [३.३.१०३] इत्यकारे वितण्डा, [5]परपक्षस्य ताडनं निरसनम्, तया दीव्यति व्यवहरतीति वैतण्डिकः। पण्डितेति। **पडि** गतौ। प्राग्वदकारे पण्डा ज्ञानम्, गत्यर्थानां ज्ञानार्थत्वात्। अस्मात् तारकादित्वादि-तचि पण्डितः। अकण्डान्। **कडि** मदे। घञ्। खण्डनेति। **खडि** मन्थे। ल्युट्। हेडेति। **हेडृ होडृ** अनादरे। हेडैर्घञ् ॥

**अहोडनीयान् [6]पशुपालयानसा-**
**वपश्यदानन्दपयोधिबाडितः।**
**सुपाकविद्राळिफलाळिभिर्द्रुमैः**
**स्निग्धानविध्राडितचारुशालिकान् ॥३८॥**

असौ [7]पशुपालयानपश्यत्। कीदृश इत्यत्राह—आनन्दपयोधिबाडितः[8] मोदपयोधावाप्लुतः। कीदृशानित्यत्राह—अहोडनीयान् अनादर्तुमयोग्यान्। सुपाकविद्राळिफलाळिभिर्द्रुमैः स्निग्धान्। [9]सुपाकेनातिपक्वतया विशरण-शीलाः फलानां आळयो [10]येषां तैर्द्रुमैः स्निग्धान् निबिडान्। अविध्राडित-चारुशालिकान् अविध्राडिता अविशीर्णमञ्जरीयुक्ता अत एव चारवः शाल्यो येषु तान्। 'शेषाद्विभाषा' [५.४.१५४] इति कप् ॥

---

1 K 3 स्वकर्म.
2 K 3 om. दधि......धर्मं.
3 K 2. 5. 6 आसक्तान्.
4 K 2 adds अस्मात् before.
5 K 2. 5. 6 परपक्षताडनं.
6 K 2. 5. 6 पशुपालकान्, K 2, however, notes या beneath का.
7 K 5. 6 पशुपालकान्, K 2 inserts का beneath या.
8 K 2. 5. 6 बाधितः.
9 K 2. 5. 6 अत्यन्तपाकेन विद्रालिनां विशरणशीलानां for सुपाकेन...... शीलाः.
10 K 2. 5 येषु.

अहोडनीयानिति। होडेरनीयर्। [1]बाडितेति। [2]**बाडृ** आप्लाव्ये। आप्लवनं तत्। कर्तरि क्तः। विद्राळीति[3]। **द्राडृ ध्राडृ** विशरणे। द्राडेर्णिनिः। [4]'डलयोरुक्तिभेदस्तु [5]ळकारो नाक्षरान्तरम्' [6]इत्युक्त्या डस्य ळः। अविध्राडितेति। ध्राडेः कर्तरि क्तः। शालीति। **शाडृ** श्लाघायाम्। डलयोरभेदाल्लकारः[7]। अस्मादौणादिक इन्। अट्टादय उदात्ता अनुदात्तेतः ॥

पशुपाल्यानेव वर्णयति पञ्चदशभिः[8]—

**प्रशौटदुस्रागणयौटितान्तिकान्**
**मेटद्वृषाम्रेडितघोषमेदुरान् ।**
**अम्लेटकैश्चाकटुचाटुभाषितै-**
**रटैः पटत्संरटितान् जनोत्करैः ॥३९॥**

प्रशौटद्भिर्गर्वायमाणैरुस्रागणैर्गोगणैः। यौटितं सम्बद्धमन्तिकं येषां तान्। मेटतां माद्यतां वृषाणामाम्रेडितेन पुनः पुनः कृतेन घोषेण नर्दनेन मेदुरान् पूर्णान्। जनोत्करैः पटत्संरटितान् पटत् व्याप्नुवत् संरटितं शब्दो [9]येषु तान्। कीदृशैः। अम्लेटकैरमाद्यद्भिः। अकटु अतीक्ष्णं चाटु प्रियं भाषितं येषां तैः। अटैः सञ्चरद्भिः ॥

प्रशौटदिति। **शौटृ** गर्वे। गण्डयन्ता उदात्ता उदात्तेतः। अस्माच्छता। यौटितेति। **यौटृ** बन्धे। कर्मणि क्तः। मेटदिति। **मेटृ म्रेडृ म्लेटृ** उन्मादे। मेटेः शता। [10]आम्रेडितेति। म्रेडेः कर्मणि क्तः। आङ्पूर्वत्वादुक्त्यर्थः। अम्लेटकैरिति[11]। म्लेटेर्ण्वुल्। अकटु इति। **कटे** वर्षा-

---

1 K 2. 5. 6 बाधितः.
2 K 2. 5. 6 बाधृ.
3 K 3. 4 E om. इति.
4 E डळयो.
5 E डकारो.
6 *PS* Part I (TSS. 106) p. 11
7 डलयोर्बवयोश्चाहुरभेदं माधवादयः, ibid.
8 Actually only eight verses are devoted for this description. In E the reading अष्टभिः for पञ्चदशभिः is suggested.
9 E येषां.
10 E om. this word.
11 E om. इति.

वरणयोः। चटे इत्यप्येके[1]। कटेः [2]'कटिबिन्द्यन्धिभ्यश्च'[3] इति [4]भोजोक्ते-रुन् प्रत्ययः[5]। चाट्विति। 'दृसनिजनिचरिचटिरहिभ्यो ञुण्' [उण्.१.३.] [6]इति [7]ञुण्। अटैः। **अट पट** गतौ। अटेः पचाद्यच्। [8]पटदिति। पटेः शता। [9]संरटितेति। **रट** परिभाषणे। 'नपुंसके भावे क्तः' [३.३.११४]॥

**लाटार्हशाटीवटितैर्वटुव्रजै-**
**र्वृतान् खलैश्चाकिटितान्[10] प्रखेटकैः।**
**अशेटनीयैः सुधियामसेटकै-**
**र्युतान् जटाझाटधरैश्च कैश्चन ॥ ४० ॥**

वटुव्रजैर्वृतान् व्याप्तान्। कीदृशैः। [11]लाटार्हशाटीवटितैः। लाटार्हाभिः बाल्ययोग्याभिः शाटीभिः वस्त्रैः वटितैः वेष्टितैः। प्रखेटकैः खलैः [12]अकिटितांश्च। प्रखेटकैः त्रासकैः। [13]अकिटितान् अत्रासितान्। कैश्चन जटाझाटधरैश्च [14]युतान्। जटाझाटो जटासङ्घः। कीदृशैः। सुधियामशेटनीयै-रत्यन्तमादर्तव्यैः। स्वयं चान्येषामसेटकैरादर्तृभिः॥

लाटेति। **लट** बाल्ये। घञ्। शाटीति। **शट** रुजाविशरणगत्यवसादनेषु। घञन्तात् 'जातेरस्त्रीविषयाद्–' [४.१.६३] इति ङीष्। वटितैः। **वट** वेष्टने। कर्मणि क्तः। वट्विति। 'वटिचटिचञ्चिभ्यश्च'[15] इति भोजोक्त्या तस्मादेव उन्[16]। [17]अकिटितान् प्रखेटकैरिति। **किट खिट** [18]उत्त्रासे।

1 E om. अपि.
2 K 2 बन्दि E बन्धि for बिन्दि.
3 Vide *PS* Uṇādi 1. 10 – कटिबिन्द्यन्धिभ्यश्च भोजः, which is based on *SKĀ*. 2.1.10.
4 K 1-4 E om. भोजोक्तेः.
5 K 1. 3 कुन्, K 5 रुन्, E उत् for उन्.
6 E om. इति ञुण्.
7 K 2. 6 add चटेः before ञुण्.
8 K 1. 3-5 om. this word.
9 K 2 संरटितानिति.
10 K 5 –कटितान्.
11 K 2 om. this word.
12, 13 K 5 अकटितान्.
14 K 2 वृतान्.
15 vide *PS*. Uṇādi 1. 7 – वटिचटिचञ्चिभ्यश्च भोजः, which is a part of *SKĀ*. 2.1.7.
16 Both *PS* and *SKĀ* give उः.
17 K 5 अकटितान्.
18 E त्रासे.

त्रासनायामित्यर्थः। भीमार्थे च द्रुमे[1]। कर्मणि क्तः। ण्वुल् च। अशेटनीयैः। **शिट षिट** अनादरे। शिटेरनीयर्। असेटकैः[2]। षिटेर्ण्वुल्। जटाझाटेति। **जट झट** सङ्घाते। [3]जटेरच्। झटेर्घञ्॥

**क्वचिद्भटाधिष्ठितवेदिकातटान्**
**क्वचिच्च खट्वाविहरन्नटीजनान्।**
**क्वचिच्च [4]पेटीशतपूर्णहाटकान्**
**क्वचित्सटालोटनलोलघोटकान्[5] ॥४१॥**

भटैरधिष्ठित आस्थितो वेदिकानां तट उन्नतप्रदेशो येषु तान्[6]। खट्वायां विहरन्तः क्रीडन्तो नटीजना येषु तान्। पेटीशतेषु पूर्णानि हाटकानि [7]हेमानि येषु तान्। सटानां गलरोम्णां लोटनेन [8]क्षोभणेन लोलाश्चलन्तो घोटका अश्वा येषु तान्॥

भटेति। **भट** भृतौ। भृतिर्वेतनप्राप्तिः। अस्मात्पचाद्यच्। तटेति। **तट** उच्छ्राये। अच्। खट्वेति। **खट** काङ्क्षायाम्। [9]'अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन्' [उण्.१.१४०] इति क्वन्। नटीति। **णट** नृत्तौ। हिंसायां च द्रुमे[10]। नृत्तिर्नर्तनम्। तच्चात्र नटव्यापारः। अस्मादचि जातिङीष्। पेटीति। **पिट** शब्दसंघातयोः। घञन्ताद् गौरादिङीष्। हाटकानिति। **हट** दीप्तौ। [11]संज्ञायां ण्वुल्। बाहुलकात् स्त्रीत्वाभावः। सटेति। **षट** अवयवे। अजन्ताट्टाप्। लोटनेति। **लुट** विलोटने। **लुल** इत्यन्ये। लुटेर्ल्युट्। लोलेति। लुलेरच्॥

---

1 खिट् च भयभीमयोः. –*KK*. 135.
2 K 3 adds इति.
3 K 2. 5. 6 अजन्ताप् घञ् च for जटे.........घञ्.
4 D 1 पूर्व for पूर्ण.
5 D 1 लोष्टन for लोटन.
6 K 2 adds पशुपालयान्.
7 K 3 मोहनानि for हेमानि.
8 K 2 om. this word.
9 K 1. 3. 4 अशि.
10 णट् नृत्यहिंसयोः–*KK*. 138.
11 K 2. 5. 6 add अस्मात् before.

**चेटैर्विटैश्चानुगतानबेटकै-**
**रेटत्पशूत्केटिरजःकटन्मलान् ।**
**प्रकण्टिताशोदयदंशुमण्डितै-**
**रकुण्डरत्नैर्मुटितार्कदीधितीन्[1] ॥४२॥**

चेटैर्विटैश्च अनुगतान् व्याप्तान्[2]। कीदृशैः[3]। अबेटकैः अनाक्रोशकैः। परेषामनिन्दकैः। एटद्भ्यः [4]सञ्चरद्भ्यः पशुभ्य उत्केटिभिः [5]पुनः पुनः ऊर्ध्वं गच्छद्भिः रजोभिर्हेतुभिः[6] कटदपगच्छत् मलं पापं येभ्यस्तान्। अकुण्ड-रत्नैः [7]अकुण्डैः अविकलैः संपूर्णैः [8]रत्नैः [9]पद्मरागादिरत्नैः [10]मुटिता मर्दिता तिरस्कृता अर्कप्रभा येषु तान्। कीदृशै रत्नैः। [11]प्रकण्टिताशोदयदंशुमण्डितैः। प्रकण्टिताशं व्याप्तदिक्कं यथा तथोदयद्भिरुद्गच्छद्भिरंशुभिर्मण्डितैरलंकृतैः ॥

चेटैरिति। **चिट** परप्रेष्ये। अच्। विटैः। **विट** शब्दे। इगु-पधत्वात् कः। अबेटकैः। **बिट** आक्रोशे। ण्वुल्। एटदिति। **इट किट कटी** गतौ। इटेः शता। पशूत्केटीति। 'बहुलमाभीक्ष्ण्ये' [३.२.८१] इति णिनिः। कटदिति। कटेः शता। प्रकण्टितेति।

इदितं कटिमिच्छन्ति केचिदन्ये तमीदितम्[12]।
इधातुमत्र प्रश्लिष्टमीधातुं[13] वा परे जगुः ॥

इत्युक्तेः[14]। कटेरिदित्त्वपक्षे[15] कर्मणि क्तः। उदयदिति। [16]इधात्वीधातु-प्रश्लेषपक्षे शता। मण्डितैः। **मडि** भूषायाम्। कर्मणि क्तः। अकुण्डेति। **कुडि** वैकल्ये। अच्। [17]मुटितेति। [18]**मुट** प्रमर्दने। कर्मणि क्तः ॥

1 K 1. 3. 4 E मुडित.
2 K 2. 5. 6 add पशुपालयान्.
3 K 2 adds तैः.
4 K 3. 4 om. this word.
5 K 1. 3-6 E om. पुनः नुनः.
6 K 2 हेतुभूतैः.
7 K 2 om. this word.
8 K 2 om. this word.
9 K 3 रागादिभिः for रागादिरत्नैः.
10 K 1. 3. 4 E मुडिता.
11 K 2-5. 6 om. प्रक......तैः.
12 E एदितं for ईदितं.
13 E अधातुं for ईधातुं.
14 *PS* Dhātukhaṇḍa.
15 E इत्वपक्षे for इदित्त्वपक्षे.
16 E इधातुप्रश्लेष.
17 K 1. 3. 4 मुडितेति, E मुण्डितेति.
18 K 1 om. मुट...ने,
K 3. 4 E मुड मुडि मर्दने.

**अचुन्ननुन्मुण्डितपुण्डरीकभृत्-**
**सरःश्रियो [1]रुण्टकलुण्टनोज्झितान् ।**
**अस्फोटदग्र्यस्फटिकादिभाजनान्**
**पाठोत्सुकैश्चावठरैर्लसन्मठान् ॥४३॥**

अचुण्डि अनल्पीभवन्ति अनुन्मुण्डितानि अखण्डितानि। अविकसितानीति यावत्। पुण्डरीकाणि बिभ्रति यानि सरांसि तैः श्रीः शोभा येषां तान्। तथा [2]रुण्टकानां चोराणां [3]लुण्टनेन चौर्येण उज्झितान् त्यक्तान्। अस्फोटन्ति अभिन्नानि [4]अग्र्याणि श्रेष्ठानि स्फटिकादिभाजनानि [5]येषु तान् पशुपाल्यान्। अवठरैः अमूर्खैः पाठोत्सुकैः लसन्मठांश्च। पाठो विद्याभ्यासः। मठो गृहविशेषः ॥

अचुन्निति। **चुडि** अल्पीभावे। क्विप्। अनुन्मुण्डितेति। **मुडि** खण्डने, **पुडि** इत्येके। मुण्डेः कर्मणि क्तः। पुण्डरीकेति। 'पर्फरीकादयश्च' [उण्.४.२०] इत्यत्र 'मृद्वीक[6]तिन्तिडीकबाह्लीक[7]वल्मीककल्मलीकपुण्डरीकचञ्चरीकप्रतीकसभीकपूतीकादयश्च' इत्यत्र भोजेन[8] निपातितः। [9]रुण्टकलुण्टनेति। **रुटि लुटि** स्तेये[10]। ण्वुल्ल्युटौ। अस्फोटदिति। **स्फुटिर्** विशरणे। स्फुट स्फुटि [11]**स्फट** इत्येके। स्फुटेः शता। स्फटिकेति। 'अलिकलिदलिपुलिस्फटिपाभ्यश्च'[12] इति भोजोक्त्या[13] स्फटेः [14]किकन्। पाठेति। **पठ** व्यक्तायां वाचि। घञ्। अवठरैरिति। **वठ** स्थौल्ये। [15]अस्मादौणादिकोऽरप्रत्ययः[16]। मठेति। **मठ कठ** मदनिवासयोः। मठेर्घञर्थे कः ॥

1 E रुण्डकलुण्डनो–.
2 E रुण्डकानां.
3 E लुण्डनेन.
4 K1. 3-6 om. this word.
5 E येषां.
6 E तन्तिडीक.
7 E वलीक.
8 vide *SKĀ*, 2.2.20.
9 E रुण्डक लुण्डक.
10 E adds रुठि लुठि इत्येके, रुडि लुडि इत्यपरे.
11 E स्फटे.
12 K 1. 3. 4 om. पुलि, E स्फटिकाभ्यश्च.
13 vide *PS* Uṇādi 2.44–अलिकलिदलिपुलिस्फटिपाभ्यश्च भोजः which is based on *SKĀ*. 2.2.15.
14 K 3 इकन्.
15 K 2. 4-6 om. this sentence.
16 by *SKĀ*. 2.3.38 सुन्दिकन्दिमन्दि...वठि...वहिभ्यो ,नित्.

**वनाश्रयत्वेऽपि सकाठपर्यठ-**
**द्रठन्मृगालीहठकर्मवर्जितान् ।**
**रोठन्नृशंसालुठितैरनोठकै-**
**र्वृतान् धनाढ्यैर्मणिपीठसंश्रयैः ॥४४॥**

वनाश्रयत्वेऽपि[1] सकाठं समदं यथा तथा पर्यठन्त्याः चरन्त्याः रठन्त्याः शब्दायमानाया मृगाल्या हठकर्मणा क्रूरकर्मणा वर्जितान्। मणिपीठसंश्रयैर्धनाढ्यैर्वृतान्। कीदृशैः। रोठन्नृशंसालुठितैः। [2]रोठद्भिः हिंसकैः नृशंसैः क्रूरैः अलुठितैः अपीडितैः अनोठकैः अन्येषामहिंसकैः ॥

काठेति। कठेर्घञ्। पर्यठदिति। 'अठ गतौ' इत्यप्येके। शता। रठदिति। **रठ** परिभाषणे। शता। हठेति। **हठ** प्लुतिशठत्वयोः। बलात्कार इत्येके। पचाद्यच्। रोठदिति। **रुठ लुठ**[3] उपघाते। [4]**उठ** इत्येके। रुठेः शता। अलुठितैरिति। लुठेः कर्मणि क्तः। ओठकैरिति। उठेर्ण्वुल्। पीठेति। **पिठ** हिंसासंक्लेशनयोः। घञर्थे कः। 'अन्येषामपि दृश्यते' [६.३.१३७] इति दीर्घः ॥

**शठत्वमार्गे शुठितैरकुण्ठितै-**
**रलुण्ठिताशुण्ठितसौहृदान्वितैः ।**
**प्ररुण्ठिताघैरनुलुण्ठकैर्हरेः**
**प्रचुड्डबोधाड्डिरतीव[5] शोभितान् ॥४५॥**

हरेरनुलुण्ठकैरतीव शोभितान्। अनुलुण्ठकैरनुचरैः। अतीवात्यर्थम्। कीदृशैः[6]। शठत्वमार्गे शुठितैः प्रतिहतगतिभिः। अकुण्ठितैः स्वकृत्येष्वप्रतिहतैः। अलुण्ठितेन [7]अनलसेन [8]अप्रतिहतेन वा अशुण्ठितेन अशुष्केण

1 E om. अपि.
2 K 2. 5. 6 om. रोठद्भिः...... अलुठितैः.
3 E adds उठ.
4 E ऊठ.
5 R बोधाड्डिरतीव. (भ above ड्ड)
6 K 2. 5. 6 add इत्यत्राह.
7 K 1. 3 अनालस्येन, E अप्रयासेन.
8 E प्रतिहतेन.

[1]अक्षीणेन च सौहृदेनान्वितैः। प्ररुण्ठितं सम्यग्गतमघं येषां तैः। प्रचुड्डस्य अभिप्रायाविष्करणस्य बोधे अड्डिरभियुक्तैः ॥

शठत्वेति। **शठ** कैतवे च। अस्मात्पचाद्यजन्तात् त्वप्रत्ययः। शुठितैः। **शुठ** गतिप्रतीघाते। **कुठि** च। अयं प्रतीघातमात्र एवेति माधवः[2]। आलस्ये गतिप्रतिघाते [3]चास्ति द्रुमे[4]। शुठेः कर्मणि क्तः। अकुण्ठितैः। कुठेः कर्तरि क्तः। अलुण्ठितेति। **लुठि** आलस्ये प्रतीघाते च। कर्तरि क्तः। अशुण्ठितेति। **शुठि** शोषणे। प्राग्वत् क्तः। प्ररुण्ठितेति। **रुठि लुठि** गतौ। रुण्ठेः कर्तरि क्तः। [5]अनुलुण्ठकैः। लुण्ठेर्ण्वुल्। प्रचुड्डेति। **चुड्ड** भावकरणे। अभिप्रायाविष्करणं तत्। अस्माद् घञ्। [6]अड्डिरिति। **अड्ड** अभियोगे। दोपधादस्मात् क्विपि संयोगान्तलोपः ॥

**अकद्धरिक्रीडनधूततोडकान्**
**प्रहूडितान् होडदरोड्यभिक्षुकैः[7]।**
**प्ररोडकानङ्गविलोलितैर्वृतान्**
**रतावडद्भिर्ललनाजनैः कलैः[8] ॥४६॥**

अकड्डा अकर्कशेन हरिक्रीडनेन धूताः निरस्ताः तोडकाः पीडकाः येषु तान्। होडद्भिः सञ्चरद्भिः। अरोड्यैः आदरणीयैः भिक्षुकैः संन्यासिभिः प्रहूडितान् प्राप्तान्। ललनाजनैर्वृतान्। कीदृशैः। प्ररोडकेन सर्वोन्मादकेन अनङ्गेन विलोलितैः मादितैः। रतावडद्भिः उद्यच्छद्भिः। कलैर्मधुरैः ॥

---

1 E क्षीणेन.

2 This is really the view of Dhanapāla cited in *MDV*–प्रतिघात इत्येव धनपालः। तथा च कुठीत्युत्तरधातौ प्रतिहतिमात्रं प्रतीयते इत्यर्थ इति स एवाह·

3 K 5. 6 E वास्ति.

4 कुठि खोटनवैकल्यालस्ये–*KK*. 148.

5 E om. this word.

6 K 2. 5. 6 अदिति.

7 D 2 अरौड्य.

8 V कडैः.

अकदिति। **कड्ड** [1]कार्कश्ये। चुड्डादयस्त्रयो दोपधाः। डोपधाश्च द्रुमे[2]। कड्डेः प्राग्वत् क्विप्। क्रीडनेति। [3]**क्रीडृ** विहारे। ल्युट्। तोडकानिति। **तुडृ** तोडने। 'तूड' इत्येके। [दारणं हिंसनं च][4] तोडनमुक्तम्। तुडेर्ण्वुल्। प्रहूडितान्। **हूडृ होडृ** गतौ। हुडृ इत्येके। हूडेः कर्मणि क्तः। होडदिति। होडेः शता। [5]अरोड्येति। [6]**रोडृ** अनादरे। ण्यत्। प्ररोडकेति। **रोडृ लोडृ** उन्मादे। रोडेर्णिजन्ताद् ण्वुल्। विलोलितैः। लोडेर्णिजन्तात् कर्मणि क्तः। अडद्भिः। **अड** उद्यमे। शता। ललनेति। **लड** विलासे। लडेर्युच्। कलैः। **कड** मदे। कडि इत्येके। कडेरच्। शौटादय[7] उदात्ता अयतिवर्जं उदात्तेतः[8] ॥

अथ गोपगृहान् पश्यतोऽक्रूरस्य हर्षातिशयमाह –

**अतिप्त हर्षाश्रु धृतिश्च तेपिता**
**गृहानिमान् प्रस्तिपितार्ति पश्यतः ।**
**अस्तेपितानन्दरसस्य तस्य न**
**व्यग्लेपि चाङ्गैर्विपिनाध्वकेपनात् ॥४७॥**

इमान् गृहान् प्रस्तिपितार्ति पश्यतः तस्य हर्षाश्रु अतिप्त। प्रस्तिपिता क्षरिता गता आर्तिर्यथा[9] तथा पश्यतस्तस्याक्रूरस्य हर्षाश्रु अतिप्त अक्षरत्। धृतिश्च तेपिता गता। विपिनाध्वकेपनादङ्गैर्न व्यग्लेपि च। विपिनाध्वनो वनमार्गस्य केपनात् सञ्चरणाद् अङ्गैर्न व्यग्लेपि न विशेषतः ग्लानीभूतम्। कीदृशस्य। अस्तेपितः अगतः आनन्दातिशयो यस्य तस्य ॥

---

1 V कार्श्ये.

2 चुड्ड चुद्ड कृतौ हावे, कड्ड कद्ड कार्कश्ये, अड्ड अद्ड अभियोगे – *KK*. 158, 156, 154.

3 E क्रीड.

4 Cf. *MDV* – तोडनं दारणं हिंसनं चेत्युक्तम्.

5 E अरौड्य.

6 E रौडृ.

7 K 5. 6 transpose अयतिवर्जं and उदात्तेतः.

8 Two folios comprising the portion from this upto स्कभि प्रतिबन्धे under śloka 50 are lost in K 2.

9 K 1. 3. 4 E यस्मिन् for यथा.

अतितेपेति। **तिपृ तेपृ ष्टिपृ ष्टेपृ** क्षरणार्थाः। 'थिपृ थेपृ' इत्यप्येके[1]। तेपृ कम्पने च। स्तुभान्ता अनुदात्तेतः उदात्तास्तिपिवर्जम्। तिपेर्लुङ्। तेपितेति। प्रस्तिपितेति। अस्तेपितेति। तेप्यादीनां त्रयाणां कर्तरि क्तः। व्यग्लेपि। **ग्लेपृ** दैन्ये। भावे लुङि चिण्। विपिनेति। **टुवेपृ** कम्पने। 'वेपितुह्योर्ह्रस्वश्च' इतीनच्[2] [उण्.२.५२]। केपनात्। **केपृ गेपृ ग्लेपृ** च। चकारात् कम्पने गतौ च। केपेर्ल्युट् ॥

**अगेपनोऽग्लेपत स व्रजं यदा**
**रविस्तदामेपत पश्चिमां दिशम् ।**
**प्ररेपितात् कोरकतां सरोरुहा-**
**दलेपि भृङ्गैः कुमुदं त्रपान्वितैः ॥४८॥**

स यदा व्रजमग्लेपत तदा रविः पश्चिमां दिशममेपत गतवान्। अगेपनो निश्चलधीः। तदा च त्रपान्वितैर्भृङ्गैः कोरकतां प्ररेपितात् प्राप्तात् सरोरुहात् कुमुदमलेपि प्राप्तम् ॥

अगेपनेति। गेपेः 'अनुदात्तेतश्च–' [३.२.१४९] इति युच्। अग्लेपत। ग्लेपेर्लङ्। अमेपतेति। **मेपृ रेपृ लेपृ** गतौ। मेपेर्लङ्। प्ररेपितात्। रेपेः कर्तरि क्तः। अलेपि। लेपेः [3]कर्मणि लुङि चिण्। त्रपेति। **त्रपूष्** लज्जायाम्। 'षिद्भिदादिभ्योऽङ्' [३.३.१०४] [4]इत्यङि त्रपा ॥

सन्ध्यां वर्णयत्यष्टभिः –

**सकम्पहेरम्बसमानलम्बनाः**
**समाव्रजन्नम्बितघण्डिकास्तदा ।**
**प्रलम्बसास्नाः कबरत्विषो वृषा**
**अक्लीबिताः क्षीबतयातिशीभराः ॥४९॥**

---

1 E om. अपि.

2 The pratyaya is generally given as इनन्.

3 K 1 भावे for कर्मणि.

4 K 5. 6 इत्यङ्, om. त्रपा.

तदा वृषाः समाव्रजन् वनादागतवन्तः[1]। कीदृशा इत्यत्राह – [2]सकम्पेन हेरम्बेण गणेशेन समानं लम्बनं शब्दो येषां ते। अक्लीबिताः अतिप्रगल्भाः क्षीबतया मत्तत्वेन अतिशीभरा नितरां रम्याः। [3]अम्बिताः शब्दिताः घण्डिकाः [4]घण्टाः येषां ते। प्रलम्बाः सास्नाः येषां ते। प्रलम्बा अवस्रस्ताः। कबरा नानारूपा[5] त्विट् येषां ते। [6]अक्लीबिताः अतिप्रगल्भाः क्षीबतया मत्तत्वेन अतिशीफराः नितरां रम्याः ॥

सकम्पेति। **कपि** चलने। घञ्। हेरम्बेति। **रबि लबि अबि** शब्दे। **लबि** अवस्रंसने च। हे इत्येवं रम्बते इति हेरम्बः। रम्बेः कर्मण्यण्। लम्बनेति। लम्बेर्ल्युः। अम्बितेति। अम्बेः कर्तरि क्तः। [7]प्रलम्बेति। अवस्रंसनार्थात् लम्बेः पचाद्यच्। कबरेति। **कबृ** वर्णे। बाहुलकादरप्रत्ययः। अक्लीबिताः। **क्लीबृ** अधार्ष्ट्ये। कर्तरि क्तः। क्षीबतयेति। **क्षीबृ** मदे। 'अनुपसर्गात्फुल्लक्षीब–' [८.२.५५] इति निष्ठायामिडभावस्तलोपश्च[8] निपातितः। शीभराः। **शीभृ** कत्थने। **चीभृ** च। [9]पूर्ववदरप्रत्ययः ॥

**प्रचीभ्यरेभैः पशवोऽम्भसांनिधि-**
**प्ररम्भणस्तम्भिभिरागता व्रजम् ।**
**[10]अस्कम्भिताः प्राप्य शिशून् सजम्भना-**
**नुज्जृम्भहर्षा लिलिहुः सशल्भनम् ॥५०॥**

पशवः प्रचीभ्यरेभैः सह व्रजमागताः। [11]प्रचीभ्याः प्रशंसनीया रेभाः शब्दाः तैः। कीदृशैः [12]शब्दैः। अम्भसांनिधेः समुद्रस्य प्ररम्भणं शब्दं स्तम्भयितुं रोद्धुं शीलं येषां तैः। अस्कम्भिताः शिशून् प्राप्य उज्जृम्भहर्षाः

1 K 5. 6 आगता बभूवुः.
2 E सकम्पं.
3 K 4 om. अम्बिताः...त्विट् येषां ते.
4 K 1. 3 E om. this word.
5 K 5. 6 वर्णा for रूपा.
6 K 1. 3. 4 E om. अक्लीबिताः... रम्याः.
7 K 5. 6 om. प्रलम्बेति......अच्.
8 E – भावो लोपश्च.
9 K 4. 5. 6 बाहुलकादरः for पूर्ववदरप्रत्ययः.
10 M 2 अस्तम्भिताः.
11 K 4-6 प्रचीभ्यः प्रशंसनीयः रेभः शब्दः प्रचीभ्यरेभः तैः.
12 E om. this word.

सशल्भनं लिलिहुः। अस्कम्भिताः प्रतिबन्धरहिताः। उज्जृम्भो वर्धमानो हर्षो यासां ताः। सशल्भनं शल्भनेन सहितं यथा तथा। शल्भनं श्लाघा। लिलिहुः। शिशून् विशिनष्टि—सजम्भनान् जम्भनेन सहितान्। जम्भनं जृम्भा ॥

प्रचीभ्येति। चीभेर्ण्यत्। रेभैः। **रेभृ** शब्दे। **अभि रभि** इत्येके। रेभेर्घञ्। अम्भसामिति। अम्भेरसुन्। अम्भसांनिधीति 'तत्पुरुषे कृति बहुलम्' [६.३.१४] इत्यलुक्। प्ररम्भणेति। रम्भेर्ल्युट्। स्तम्भिभिरिति। **ष्टभि स्कभि** प्रतिबन्धे। स्तम्भेर्णिजन्ताण्णिनिः। अस्कम्भितः। स्कम्भेः कर्तरि क्तः। सजम्भनान्। [1]**जभ जृभि** गात्रविनामे। आद्य ईदिदित्येके। [2]जभेर्ल्युट्। 'रधिजभोरचि' [७.१.६१] इति नुम्। उज्जृम्भेति। जृम्भेः पचाद्यच्। सशल्भनम्। **शल्भ** कत्थने। ल्युट् ॥

**वल्भप्रगल्भाः पथिकाश्च तत्क्षणं**
**सुश्रम्भणस्तोभयुतानगुर्गृहान् ।**
**गोपायतां धर्ममधूपितात्मनां**
**जल्पान् विमुच्याभवदुद्यमो जपे ॥५१॥**

पथिकाश्च तत्क्षणं गृहान् अगुः। यथा गावस्तथा पान्था अपि तं कालमभिव्याप्य संध्यावसितिरितपर्यन्तं[3](?) आगताः। कीदृशाः। वल्भे भोजने प्रगल्भाः समर्थाः। कीदृशान् गृहान्। सुश्रम्भणस्तोभयुतान् समीचीनपाकव्यापारयुक्तान्। धर्मं गोपायतामधूपितात्मनां जल्पान् विमुच्य जपे उद्यमोऽभवत्। गोपायतां [4]परिरक्षताम्। अधूपितोऽसंतप्त आत्मा मनो येषां तेषां सतामित्यर्थात् ॥

वल्भेति। **वल्भ** भोजने। घञ्। प्रगल्भाः। **गल्भ** धार्ष्ट्ये। पचाद्यच्। सुश्रम्भणेति। **श्रन्भु** पाके। ल्युट्। स्तोभेति। [5]**ष्टुभु** स्तम्भे। अयं

---

1 E जभि.
2 E जम्भे–.
3 K 1.5 –वसितिरिति–.
4 K 2 स्वधर्मपरिपालकानाम् for परिरक्षताम्.
5 K 2.5.6 षट्टुभ.

[1]व्यापारार्थे प्रसिद्धः। अस्मात् घञ्। [2]तिप्यादयोऽनुदात्तेतः तिपिवर्ज-मुदात्ताः। गोपायतामिति। **गुपू** रक्षणे। [3]सुम्भान्ता उदात्ता उदात्तेतः। अस्मात् [4]'गुपूधूपविच्छिपणिपनिभ्य आयः' [३.१.२८] इत्यायप्रत्ययान्तात्[5] शता। अधूपितेति। **धूप** सन्तापे। कर्तरि क्तः। जल्पान्। **जल्प जप** व्यक्तायां वाचि। जप मानसे च। जल्पेर्घञ्। जप इति। 'व्यधजपोरनुपसर्गे' [३.३.६१] इत्यप्॥

**चेपुः सपन्तोऽसचितां प्रियां प्रियाः**
**संध्येति रेपुः कललापिनः[6] शुकाः।**
**श्येनाश्चुपित्वा तुतुपुः कपोतकान्**
**[7]काकानतुम्पन्नभितुतुपुः शशान् ॥५२॥**

प्रियाः सपन्तोऽसचितां प्रियां चेपुः। प्रियाः पादप्रणामादिभिर्मिलिताः [8]अरञ्जितां प्रियां सान्त्वयामासुः। कललापिनः शुकाः संध्या इति रेपुः व्यक्तमवदन्। श्येनाश्चुपित्वा कपोतकांस्तुतुपुः। पक्ष्याखेटाय विसृष्टाः श्येनाश्चुपित्वा मन्दं गत्वा तुतुपुः अपीडयन्। काकान् अतुम्पन् विव्यथुः। शशानभितुतुपुः अहिंसन्॥

चेपुरिति। **चप** सान्त्वने। लिट्। सपन्तः। **षप** समवाये। **षच** इत्येके। समवायः संबन्धः सम्यगवबोधो वा। सपेः शता। असचिताम्। सचेः कर्तरि क्तः। रेपुः। **रप लप** व्यक्तायां वाचि। रपेर्लिट्। कललापिनः। लपेर्णिनिः। चुपित्वा। **चुप** मन्दायां गतौ। अस्मात् 'समानकर्तृकयोः पूर्वकाले' [३.४.२१] इति क्त्वा। तुतुपुः। **तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ** हिंसार्थाः। तुपेर्लिट्। अतुम्पन्। तुम्पेर्लङ्। अभितुतुपुः। तुपेर्लिट्॥

1 K 2. 4-6 व्यापारे.
2 E तिपादयो.
3 E स्तम्भान्ताः.
4 E धप for धूपि. The Pāṇinīya-pāṭha as found in *Kāśikā* and *Siddhānta Kaumudī* is धूप. But Bhoja reads धूपि. (vide *SKĀ*. 1.3.65)
5 E प्रत्ययान्तः.
6 D 1 K 3 –लापिकाः.
7 M 1. 2 कङ्कान्.
8 K 2 अननुरञ्जिताम्.

**अत्रुम्प्यधामानमिनं प्रतोफितुं**
**प्रतुम्फशीलान् मिलतोऽथ राक्षसान् ।**
**अत्रोफकास्त्रुम्फितुमुद्यता[1] जलै-**
**र्वापीमपर्पन्नरफन् नदीं द्विजाः ॥५३॥**

अथ द्विजाः अत्रुम्प्यधामानमिनं प्रतोफितुं मिलतः राक्षसान् जलै-स्त्रुम्फितुमुद्यताः[2] वापीमपर्पन्। नदीमरफन्। अत्रुम्प्यमहिंस्यं धाम तेजो यस्य तमिनं सूर्यं प्रतोफितुं हिंसितुं मिलतः संघीभवतो राक्षसान् मन्देहनाम्नो जलैः संध्याञ्जलिभिः त्रुम्फितुं हन्तुमपर्पन् अगच्छन्। केचित् नदीमरफन् अगच्छन्। कीदृशाः द्विजाः। अत्रोफका अहिंसकाः। कीदृशान् राक्षसान्। [3]प्रतुम्फशीलान्। प्रतुम्फो हिंसनं शीलं येषां तान्॥

अत्रुम्प्येति। त्रुम्पेर्ण्यत्। प्रतोफितुम्। तुफेस्तुमुन्। प्रतुम्फेति। तुम्फेर्घञ्। अत्रोफकाः। त्रुफेर्ण्वुल्। [4]त्रुम्फितुम्। [5]त्रुम्फेस्तुमुन्। अपर्पन्निति। **पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब** गतौ। अर्बादयो नोपधा इत्येके। पर्पेर्लङ्। [6]अरफन्। रफेश्च लङ् ॥

**हयैः सुरम्फैर्द्रुतमर्बतो रवेः**
**पर्बद्भिरालर्ब्यत[7] रक्तिमा करैः ।**
**प्रबर्ब्य शैलानुपमर्ब्य पद्मिनीं**
**प्रकर्ब्य चाशाः श्रमशोणितैरिव ॥५४॥**

सुरम्फैर्हयैर्द्रुतमर्बतो रवेः पर्बद्भिः करैः रक्तिमा [8]आलर्ब्यत। सुरम्फैः शोभनगमनैः[9] अर्बतः गच्छतः। पर्बद्भिः प्रसरद्भिः करैः रश्मिभिः। रक्तिमा रक्तत्वम्। आलर्ब्यत सम्यगवापि। शैलान् प्रबर्ब्य, पद्मिनीमुपमर्ब्य, आशाः

1 M 2 K 1. 3. 4 त्रुम्भितुं.
2 K 1. 3. 4 त्रुम्भितुं.
3 K 1. 3. 4 om. this word.
4 K 1. 3. 4 त्रुम्भितुं.
5 K 1. 3. 4 त्रुम्भेः.
6 K 1. 3. 4 E om. this word.
7 D 2 K 3 आलम्ब्यत.
8 K 2 आलम्ब्यत.
9 K 3 K 4 E –गमनशीलैः.

प्रकर्व्य च, श्रमशोणितैरिव। शैलाग्रगमनेन पद्मिनीप्राप्त्या सर्वदिक्संचारेण च जातेन परिश्रमेण शोणितैरिव ॥

सुरम्फैरिति। रम्फेर्घञ्। [1]अर्बतः अर्बेः शता। [2]पर्बद्भिरिति। पर्बेश्च। आलर्व्यत। लर्बेः कर्मणि लङ्। [4]प्रबर्व्य [5]उपमर्व्य [6]प्रकर्व्य। बर्बिमर्बिकर्बीनां ल्यप् ॥

**अखर्बि शैलाग्रमगर्बि सौधभू-**
**रशर्बि शाखाशिखरं च रश्मिभिः।**
**[7]ऊर्ध्वप्रसर्बान्न तु चर्बिता मही**
**दिक्कुम्बितेऽर्के परिलुम्बिताम्बुजे ॥५५॥**

रश्मिभिः शैलाग्रमखर्बि। सौधभूरगर्बि। शाखाशिखरं च अशर्बि। सर्वत्र प्राप्तमित्यर्थः। अर्के परिलुम्बिताम्बुजे दिक्कुम्बिते ऊर्ध्वप्रसर्बात् मही न तु चर्बिता। परिलुम्बितानि अर्दितानि अम्बुजानि येन तादृशे अर्के दिशाच्छादिते सति। ऊर्ध्वगमनात् हेतोर्मही रश्मिभिः न प्राप्ता॥

अखर्बि अगर्बि अशर्बि। एषु कर्मणि चिण्। प्रसर्बेति। सर्बेर्घञ्। [8]चर्बिता। चर्बेः [9]कर्मणि क्तः। कुम्बितेति। **कुबि** [10]छादने। प्राग्वत् क्तः। परिलुम्बितेति। **लुबि तुबि** अर्दने। लुम्बेः प्राग्वत् क्तः ॥

**वियोगसन्तुम्बितकोकचुम्बिता**
**सन्तापसृब्धापि जगाद तद्वधूः।**
**मा त्वां स्मरः सृम्भतु [11]शोभदाकृते**
**चिन्ता न शुम्भेन्न च सुम्भतु व्यथा ॥५६॥**

वियोगसंतुम्बितकोकचुम्बिता तद्वधूः सन्तापसृब्धापि जगाद। वियोगेन भविष्यता संतुम्बितेन अर्दितेन कोकेन चुम्बिता [12]तद्वधूः तस्य कोकस्य

1-6 Only K 2 has this word.
7 M 1. 2 ऊर्ध्वं प्रसर्बा–.
8 Only K 2 has this word.
9 K 2. 5. 6 भावे for कर्मणि.
10 E आच्छादने.
11 E शोभनाकृते.
12 K 2. 5. 6 om. this word.

वधूः स्वयं सन्तापेन सृब्धा पीडिता अपि जगाद। हे [1]शोभदाकृते भासमानाकृते प्रिय, त्वां स्मरो मा सृम्भतु पीडयतु। चिन्ता न शुम्भेत् न स्फुरतु, पीडयतु वा। व्यथा [2]च न सुम्भतु [3]स्फुरतु ॥

संतुम्बितेति। तुम्बेः कर्मणि क्तः। [4]चुम्बिता **चुबि** वक्त्रसंयोगे। प्राग्वत् क्तः। सृब्धा। [5]**षृभु षृन्भु** हिंसार्थौ[6]। सृभेः प्राग्वत् क्तः। सृम्भतु। सृम्भेर्लोट्। शोभदिति। **शुभ शुन्भ** भाषणे। हिंसायां च। भासने इत्येके। षुन्भ इत्यन्ये। शुभेः शता। [शुम्भेत्] शुम्भेर्लिङ्। [सुम्भतु।] सुम्भेर्लोट्। गुपादय उदात्ता उदात्तेतः ॥

**प्रघिण्ण्य भूषाः परिघुण्ण्य मालिकाः**
**प्रघृण्ण्य घोणापुटघूर्णिचन्दनम् ।**
**पणाय्यरूपाः पनिताकृतीन्ययु-**
**र्भामिन्य एवाक्षमया स्वकामुकान् ॥५७॥**

भामिन्य एव भूषाः प्रघिण्ण्य मालिकाः परिघुण्ण्य घोणापुटघूर्णिचन्दनं प्रघृण्ण्य च अक्षमया स्वकामुकान् ययुः। भामिन्यः प्रणयकुपिताः स्त्रियः। एवेत्यप्यर्थे। भूषाः [7]मालिकाः चन्दनं च गृहीत्वेत्यर्थः। घोणापुटं नासान्तर्भागं घूर्णयति भ्रमयतीति तथा। [8]कीदृश्यः[9]। पणाय्यं स्तुत्यं रूपं यासां ताः। कीदृशान् कामुकान्। पनिता स्तुता आकृतिर्येषां तान् ॥

प्रघिण्ण्य परिघुण्ण्य प्रघृण्ण्य इति। **घिणि घुणि घृणि** ग्रहणे। इदित्त्वाद् नुमि ष्टुत्वं [10]ल्यप्। घोणेति। **घुण घूर्ण** भ्रमणे। घुणेरचि क्रोडादिषु[11] निपातनात् टाप्। घूर्णीति। घूर्णेर्णिजन्ताण्णिनिः। पणाय्येति। **पण**

1 E शोभनाकृते.
2 K 1. 3. 4 E transpose च and न.
3 E om. this word.
4 E om. this word.
5 K 3-6 ष्टृभु ष्टृन्भु.
6 E adds षिभु षिन्भु इत्येके.
7 K 2 मालाः.
8 K 3 om. this word.
9 K 2 adds कामिन्यः.
10 K 2 adds त्विभ्यो before.
11 K 5. 6 E क्रोडादिनिपातनात्.

व्यवहारे स्तुतौ च। **पन** च। [1]पनिः स्तुतावेव 'गुपूधूपि–'[2] [३.१.२८] इत्यायान्ताण्ण्यत्। पनितेति। पनेः कर्मणि क्तः। भामिन्यः। **भाम** क्रोधे। घञन्तान्मत्वर्थीय इनिः। अक्षमयेति। **क्षमूष्** सहने। षित्वादङ्। कामुकानिति। **कमु** कान्तौ। कान्तिरिच्छा। 'लषपत–' [३.२.१५४] इत्यादिना उकञ्। घिण्यादय उदात्ता अनुदात्तेतः ॥

**अणद्दिशः केलिरणैर्मनोज्ञया**
**वाण्या भणन्तो मणिभूषणोत्कणाः।**
**वनात् कुमाराः क्वणिताग्र्यवेणवो**
**व्रणद्विषाणभ्रणिताभ्रमाययुः ॥५८॥**

कुमारा वनात् [3]व्रणद्विषाणभ्रणिताभ्रमाययुः। व्रणता शब्दायमानेन विषाणेन भ्रणितं शब्दितं अभ्रं आकाशं [4]यथा तथा आययुः। कीदृशा बालाः। केलिरणैः अणद्दिशः अण्यन्त्यः शब्दायमानाः दिशो येषां ते। मनोज्ञया वाण्या भणन्तः। मणिभूषणैः उत्कणाः सशब्दाः। क्वणिता अग्र्या वेणवो येषां ते ॥

अणदिति। **अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण** शब्दार्थाः। **धण** इत्येके। अणेः शता। [5]रणैः। 'वशिरण्योरुपसंख्यानम्' [वा. ३.३.५८] इत्यप्। वाण्या। [6]'इञजादिभ्यः[7] स्त्रियाम्' इति वणेरिञ्। पुनः 'कृदिकारादक्तिनो वा ङीष् वाच्यः'[8] इति ङीष्। भणन्तः। भणेः शता। मणीति। मणेरौणादिक इन्। उत्कणाः। कणेरच्[9]। क्वणितेति। क्वणेः कर्तरि क्तः। व्रणदिति। व्रणेः शता। भ्रणितेति। भ्रणेः प्राग्वत् क्तः ॥

---

1 K 5. 6 E पन.

2 K 5. 6 E धूप.

3 K 2 E add क्वणिताग्र्यवेणवो before.

4 K 1. 3. 4 E यस्मिन् for यथा.

5 E om. रणैः......भणेः शता.

6 In *PS* under 3.3.108 this is given as 'इणजादिभ्यः स्त्रियाम्'।... वण शब्दे। वाणिर्वाक्। पुनर्ङीषि वाणीत्यपि। (Part II, p. 110).

7 K 1. 3. 4 E इञन्तादिभ्यः K 6 इञन्ताद् for इञजादिभ्यः.

8 Gaṇasūtra under 4.1.45.

9 E कणेरप्.

**ध्वणच्छिशून् धाणसमोणिताशुभान्**
**शोणान् पृथुश्रोणिजनो दुदोह च ।**
**प्रश्लोणितान् प्रैणनविध्रणत्क्षिती-**
**ननुल्बणान् धेनुगणान् कनत्स्तनान् ॥५९॥**

पृथुश्रोणिजनो धेनुगणान् दुदोह च। गोपस्त्रीजनो नवसूतान् पशुगणान् अदुहत्[1] (?)। कीदृशान्[2]। ध्वणच्छिशून् शब्दायमाना बाला येषां तान् धाणसमोणिताशुभान् धाणेन शब्देन सम्यग् [3]ओणितं अपनीतं अशुभं यैस्तान्। शोणान् रक्तवर्णकपिलप्रायान् प्रश्लोणितान् एकत्र संघातीभूतान्। प्रैणनेन गत्या विध्रणन्ती शब्दायमाना क्षितिर्येषां तान्। अनुल्बणान् सौम्यान्। कनन्तः शोभमानाः स्तना येषां तान् ॥

ध्वणदिति। ध्वणेः शता। धाणेति। धाणेर्घञ्। ओणितेति। **ओणृ** अपनयने। कर्मणि क्तः। शोणान्। **शोणृ** वर्णगत्योः। पचाद्यच्। श्रोणीति। **श्रोणृ** संघाते। **श्लोणृ** च। श्रोणेरिन्। प्रश्लोणितान्। श्लोणेः कर्तरि क्तः। प्रैणनेति। **प्रैणृ** गतिप्रेरणश्लेषणेषु। ल्युट्। विध्रणदिति। **ध्रण** शब्दे। **बण** [4]इत्यप्येके। ध्रणेः शता। 'रषाभ्याम्–' [८.४.१] इति णः। [5]अनुल्बणान्। बणेः पचाद्यच्। कनदिति। [6]**कन** दीप्तिकान्तिगतिषु। शता। स्तनेति। [7]**ष्टन वन** शब्दे। पचाद्यच् ॥

**वनाद्वनं सानुममन् द्रमन् गृहं**
**व्याधोत्करोऽहम्मतिमोमिताशयः ।**
**चान्तामिषश्छान्तजलः फलावलीं**
**जान्त्वा झमन् जेमनमक्रमीद्गुहाम् ॥६०॥**

---

1 All MSS. and E read like this, although the normal form should be अधोक् or अदुग्ध.
2 K 2 adds धेनुगणान्.
3 K 5. 6 om. this word.
4 K 5. 6 E इत्येके.
5 K 2 अनुल्बणेति, E उल्बणेति.
6 K 3. 4 E कनी.
7 D 2 K 3 श्तन, om. वन.

वनाद् वनं सानुं च अमन् गृङ्ं द्रमन् व्याधोत्करः चान्तामिषः छान्त-जलः फलावलीं जान्त्वा जेमनं झमन् गुहामक्रमीत्। अमन् सञ्चरन्। द्रमन् प्राप्नुवन्। चान्तं भक्षितं मांसं येन सः। छान्तं पीतं जलं येन सः। जान्त्वा [1]भुक्त्वा। जेमनं लेह्यं आहारम्। झमन् अदन्। अक्रमीत् प्रविवेश। अहम्मतिः अज्ञानं तेन मीमितः प्राप्तः आशयो यस्य सः ॥

वनादिति। वनेरच्। वनमिति। **वन षण** संभक्तौ। अर्थभेद-मात्रेण पुनःपठितस्य वनेरप्यच्। सानुम्[2]। 'दृसनि–' [उण्.१.३] इति सनेः ञुण्। अमन्। **अम** गत्यादौ[3]। आद्युक्तेः शब्दसंभक्तिरोगेषु। अस्मा-च्छता। द्रमन्। **द्रम हम्म मीमृ** गतौ। मीमिः[4] शब्देऽपीत्येके। द्रमेः शता। अहम्मतीति[5]। हम्मेर्भावे श्तिप् शप् च[6]। हम्मतिर्ज्ञानम्। नञ्-समासः। मीमितेति। मीमेः कर्मणि क्तः। चान्तेति। छान्तेति। **चमु छमु जमु झमु** अदने। जिम इति चैके। चमिछम्योः कर्मणि क्तः। जान्त्वा। जमेः क्त्वा। झमन्। झमेः शता। जेमनम्। जिमेर्ल्युट्। अक्र-मीत्। **क्रमु** [7]पादविक्षेपे। लुङ् ॥

**अन्तःस्थया कौतुकमूर्च्छया व्रजं**
**तदायतासौ वयमानवात्सकम् ।**
**पयःप्रदोहादिरताः प्रमय्य तं**
**प्रैक्षन्त[8] नूत्नाचयितं कुतूहलात् ॥६१॥**

असौ तदा अन्तःस्थया कौतुकमूर्च्छया व्रजमायत [9]अगच्छत्। कीदृशं व्रजम्। वयमानं ततस्ततो गच्छत् वात्सकं वत्ससमूहो यस्मिंस्तम्।

1 K 2. 5. 6 जग्ध्वा.
2 K 3. 4 add इति.
3 E गत्यादिषु.
4 E मीम.
5 E अहम्मतिः.
6 Vide *PS* द्वौ (इक्श्तिपौ) भावेऽपीति भोजः (Part II, p. 110) which is based on *SKĀ* 2.4.181-2, इक्श्तिपः स्वरूपे, अर्थे च.
7 K 1. 2. D 2 पदविक्षेपे.
8 M 1. 2 प्रैणन्त.
9 K 6 E आगच्छत्.

पय:प्रदोहातिरता जनाः प्रमय्य नूत्नाचयितं तं कुतूहलात् प्रैक्षन्त। प्रमय्य प्राप्य [1]नूत्नतया आचयितं आगतम्॥

आयतेति। **अय वय पय मय चय तय णय** गतौ। षय इत्यप्येके। 'तय णय रक्षणे च' इत्येके। अयेर्लङ्। वयेः शानच्। पयेरसुन्। मयेर्ल्यप्। आचयितम्। चयेः कर्तरि क्तः॥

**प्रतय्य किंचिन्नयितो गृहान्तिकं**
**ददर्श धन्यः स दयालुमीश्वरम्।**
**गोदोहदेशे रयितं सहाग्रजं**
**तमूतसत्कीर्तिमपूतिभिर्गुणैः॥६२॥**

धन्यः स किंचित् प्रतय्य गृहान्तिकं नयितः [2]दयालुमीश्वरं सहाग्रजं ददर्श। प्रतय्य चरित्वा। नयितः प्राप्तः। कीदृशमीश्वरम्। गोदोहदेशे रयितमुपगतम्। अपूतिभिर्गुणैरूतसत्कीर्तिम्। सुरभिभिः सर्वेन्द्रियानन्दिभिः स्वगुणरूपैर्गुणैस्तन्तुभिरूता कृता सती प्रशस्ता कीर्तिरूपा पटी येन तम्॥

प्रतय्येति। तयेर्ल्यप्। नयितः। णयेः कर्तरि क्तः। [3]दयालुम्। **दय** दानगतिरक्षणहिंसादानेषु। 'स्पृहिगृहिपतिदयि–' [३.२.१५८] इत्यादिनालुच्। रयितम्। **रय** गतौ। कर्तरि क्तः। ऊतेति। **ऊयी** तन्तुसंताने। कर्मणि क्तः। अपूतिभिरिति। **पूयी** विशरणे दुर्गन्धे च। क्तिन्॥

ईश्वरं विशिनष्टि चतुर्दशभिः –

**प्रक्नोपयन्तं मुरलीं महीभरक्ष्मायं**
**बलस्फीतसुपीनदोर्युगम्।**
**अशेषतां भ्रूशलनैर्वलद्दृशा**
**प्रवल्लमानं प्रियवल्लवीशुचम्॥६३॥**

---

1 K 5. 6 E नूत्नया.

2 K 1 inserts तं between दयालुं and ईश्वरं.

3 K 1-3. 5 om. this word, K 4 adds इति.

मुरलीं प्रक्नोपयन्तं शब्दयन्तं महीभरक्ष्मायं महीभरस्य क्ष्मायं विधून- यितारं त्यक्तारं बलेन स्फीतं [1]पूर्णं पीनं च दोर्युगं यस्य तम्। भ्रूशलनैः भ्रुवोश्चलनैः अशेषतां अशेषस्य [2]तां तायितारं [3]पालकम्। वलद्दृशा। वलन्त्या संचरन्त्या दृशा प्रियवल्लवीशुचं प्रवल्लमानं छादयन्तम् ॥

प्रक्नोपयन्तमिति। **क्नूयी** शब्दे [4]उन्दे च। अस्माण्णिचि 'अर्तिह्री–' [७.३.३६] इत्यादिना पुकि शता। [5]महीभरक्ष्मायम्। **क्ष्मायी** विधूनने। कर्मण्यण्। स्फीतसुपीनेति। **स्फायी ओप्यायी** वृद्धौ। द्वयोः कर्तरि क्तः। अशेषताम्। **तायृ** सन्तानपालनयोः। क्विपि 'लोपो व्योः–' [६.१.६६] इति यलोपः। शलनैरिति। **शल** चलनसंवरणयोः। ल्युट्। वलदिति। **वल वल्ल** संवरणे संचरणे च। अनुदात्तेतां तङोऽनित्यत्वाद्वलेः शता। प्रवल्ल- मानमिति। वल्लवीति। वल्लेः शानच्। औणादिकोऽवक् च[6] ॥

**मामल्यमानं स्मितमल्लिकावली-**
**मभाल्यदैत्याधिपभल्लनोद्धुरम् ।**
**कलोरुकल्लोलकलिन्दजाजले**
**बालैस्तयूभिः सह देवनोत्सुकम् ॥६४॥**

स्मितमल्लिकावलीं मामल्यमानं पुनः पुनः धारयन्तम्[7]। अभाल्याना- महिंस्यानां [8]दैत्याधिपानां भल्लने [9]हिंसने उद्धुरमुद्युक्तम्। तयूभिः क्रीडकै- र्बालैः सह कलाः शब्दायमानाः उरवो [10]महान्तः कल्लोला यस्मिंस्तादृशे कलि- न्दजाजले देवनोत्सुकं [11]क्रीडनोत्सुकम् ॥

मामल्यमानमिति। **मल मल्ल** धारणे। मलेर्यङ्। मल्लिकेति। मल्लेः 'संज्ञायाम्' [३.३.१०९] इति ण्वुल्। आभाल्येति। **भल भल्ल**

---

1 K 1.3.4 E अतिस्थूलं for पर्णं...च.
2 K 1.3.4 E om. this word.
3 K 2.3.5.6 रक्षितारं for पालकं.
4 K 3 D 2 उन्दने.
5 K 1.3.4 E om. मही–.
6 Vide कुटिकितिपणिपेलूपल्लिवल्लि- मालिभ्योऽवक्. *S K Ā*–2.3.134.
7 K 2.6 add ईश्वरं.
8 K 3 om. this word.
9 K 2.5.6 वधे for हिंसने.
10, 11 K 2.5.6 om. this word.

परिभाषणहिंसादानेषु। भलेर्ण्यत्। भल्लनेति। भल्लेर्ल्युट्। कलेति। **कल** शब्दसंख्यानयोः। पचाद्यच्। कल्लोलेति। **कल्ल** अव्यक्ते शब्दे। 'बहुल-मन्यत्रापि'[1] [2]इत्योलक् प्रत्ययः। तयूभिरिति। **तेवृ देवृ** देवने। तेवेः क्विपि 'च्छ्वोः शूठ्–' [६.४.१९] इत्यूठि अयादेशः। देवनेति। देवेर्ल्युट्॥

**सेव्यं सतां शंकरगेव्यमब्जभू-**
**ग्लेव्यं [3]सुरैः पेव्यममेव्यमुन्मदैः।**
**प्रम्लेवितं रेवितवत्समण्डलीं**
**मव्यद्भिराभीरजनैरसूक्ष्यर्कैः ॥६५॥**

सतां सेव्यं सेवितव्यं शंकरेण गेव्यं [4]सेवनीयम् अब्जभुवा ग्लेव्यं सेव्यं सुरैः पेव्यं सेवितुं शक्यम् उन्मदैरमेव्यं सेवितुमशक्यम् आभीरजनैः प्रम्लेवितं सेवितम्। कीदृशैः। रेवितानामुत्प्लुत्य गच्छतां वत्सानां मण्डलीं मव्यद्भिर्बध्नद्भिः। असूक्ष्यर्कैः अन्योन्यमीर्ष्यामकुर्वद्भिः॥

सेव्यं गेव्यं ग्लेव्यं [5]पेव्यं अमेव्यमिति। **षेवृ गेवृ ग्लेवृ [6]पेवृ म्लेवृ** सेवने। पञ्चानां ण्यत्। प्रम्लेवितं। म्लेवेः कर्मणि क्तः। [7]रेवितेति। **रेवृ** प्लवगतौ। प्लवगतिः प्लुतगतिः। [कर्तरि क्तः]। अयादय उदात्ता अनुदात्तेतः। मव्यद्भिः। **मव्य** बन्धने। अवान्ता उदात्ता उदात्तेतः। अस्माच्छता। सूक्ष्यर्कैः। **सूक्ष्यं ईक्ष्यं ईर्ष्य** ईर्ष्यार्थाः। सूक्ष्येर्ण्वुल्॥

**राधाकृतेक्ष्याकलहावलोकना-**
**दीर्ष्यां हयन्त्या रमया प्रमोदितम्।**
**प्रशुच्य सोमं कृतहर्यतैर्नुतं**
**समालितं फुल्लसरोजमालया ॥६६॥**

---

1 This is based on the statement in *PS* बहुलमन्यत्रापि, तेन कल्लोलतक्कोलौ under Uṇādi-1.63.

2 E अलक् for ओलक्.

3 V सुरैर्वेव्यं.

4 K 2. 5. 6 सेव्यम्.

5 According to V वेव्यम्.

6 According to V वेवृ.

7 K 1-4 om. रेवितेति......गतिः.

राधाकृतेर्क्ष्याकलहावलोकनात् राधाकृतस्य ईक्ष्याकलहस्य[1] दर्शनाद् ईर्ष्यां [2]अक्षमां हयन्त्या प्राप्नुवत्या रमया प्रमोदितम्। सोमं प्रशुच्य कृत-हर्यतैर्नुतम्। प्रशुच्य अभिषुत्य कृतो हर्यतो यज्ञो यैस्तैः। फुल्लसरोजमालया समालितं [3]विभूषितम् ॥

ईक्ष्या ईर्ष्या इति। 'गुरोश्च हलः' [३.३.१०३] इत्यकारः। हयन्त्या। **हय** गतौ। 'भक्तिशब्दयोः' इत्येके। शत्रन्तान्ङीप्। प्रशुच्येति। **शुच्य** अभिषवे। [4]अभिषवो निष्पीडनस्नपनसुरासन्धानस्नानादिः। ल्यप्। हर्यतेति। **हर्य** गतिकान्त्योः। अस्मात् 'भृमृदृशियजिपर्व्यमिनमिहर्यिभ्योऽतच्'[5] [उण्. ३.१०९] इत्यतच्। समालितम्। **अल** भूषणपर्याप्तिवारणेषु। कर्मणि क्तः। फुल्लेति। **ञिफला** विशरणे। तच्च विशीर्णत्वं विकसनं च[6]। 'अनुपसर्गात्फुल्ल–' [८.२.५५] इत्यादिना निपातितः ॥

**उन्मीलनश्मीलनलीलया दृशो-**
**[7]रुत्स्मीलितक्ष्मीलितविश्वविष्टपम् ।**
**[8]पिञ्छस्रजा पीलितनीलकुन्तलं**
**शीलेन [9]संकीलितलोकमानसम् ॥६७॥**

दृशोरुन्मीलनश्मीलनलीलया उन्मीलननिमीलनरूपया लीलया उत्स्मीलितं प्रकाशितम् क्ष्मीलितं तिरोहितं च सर्वविष्टपं येन तम्। [10]पिञ्छस्रजा पीलितं बद्धं नीलकुन्तलं येन तम्। शीलेन संकीलितं बद्धं वशीकृतं लोकमानसं येन तमीश्वरम् ॥

उन्मीलनश्मीलनेति। **मील श्मील स्मील क्ष्मील** निमेषणे। संकोचनं तत्। मीलश्मीलाभ्यां ल्युट्। उत्स्मीलितक्ष्मीलितेति। स्मील-

1 K 2 adds ईर्ष्याकलहस्य.
2 K 2. 5. 6 om. this word.
3 K 2.5.6 अलङ्कृतं for विभूषितम्.
4 K 2. 5. 6 स च for अभिषवो.
5 The Sūtra, as read in the common works, has in addition पचि between पर्वि and अमि, and तमि between अमि and नमि.
6 E om. च.
7 D 1.2 उन्मीलित, V अस्मीलित.
8 K 1 E पिच्छ–.
9 D 1 सङ्कीतित.
10 K 1 E पिच्छ.

क्ष्मीलाभ्यां णिजन्ताभ्यां कर्मणि क्तः। पीलितेति। **पील** प्रतिष्टम्भे। रोधनं तत्। कर्मणि क्तः। नीलेति। **णील** वर्णे। इगुपधत्वात् कः। शीलेनेति। **शील** समाधौ। समाधिर्निष्ठया करणम्[1]। घञ्। संकीलितेति। **कील** बन्धने। कर्मणि क्तः॥

**[2]सन्मार्गसंकूलिषु शूलदायिनं**
**दहन्तमेनांसि च तूलपूलवत्।**
**मूलं फलं वाप्यदतामचुल्लतां**
**प्रफुल्लभक्त्युन्नतिचिल्लचेतसाम् ॥६८॥**

**अवेलितानां [3]व्रतिचेलधारिणा-**
**मकेलिलोले हृदि बद्धखेलनम्।**
**फणीश्वरक्ष्वेलरुधं प्रवेल्लित-**
**स्रजं मुहुः पेलववातफेलनात् ॥६९॥**

सन्मार्गसंकूलिषु सन्मार्गनिरोधशीलेषु दुष्टेषु शूलदायिनं पीडाकरं तूलपूलवदेनांसि दहन्तं च। [4]व्रतिचेलधारिणां [5]व्रतिचेलानि वल्कलादीनि[6] दधानानां यमिनाम् अकेलिलोले हृदि बद्धखेलनं कृतक्रीडनम्[7]। मूलं फलं वा अपि अदतां भक्षयताम्। अचुल्लताम् अनाविष्कृताभिप्रायाणाम्। प्रफुल्लया विकसितया भक्त्युन्नत्या चिल्लचेतसाम् आर्द्रीभवन्मनसाम्। अवेलितानां केनाप्यचलितानाम्। फणीश्वरक्ष्वेलरुधं कालियस्य [8]विषं [9]रुद्धवन्तम्। पेलवस्य मृदोर्वातस्य फेलनात् चलनान्मुहुः प्रवेल्लितस्रजं दोलायमानवनमालम्॥

सन्मार्गसंकूलिष्विति। **कूल** आवरणे। णिनिः। शूलेति। **शूल** रुजायां संघाते च। घञ्। तूलपूलवत्। **तूल** निष्कर्षे। निष्कोषणं तत्।

---

1 E निष्ठाकरणम्.
2 This śloka and the next are given together, and so too their commentaries, in all MSS. except K3.
3, 4, 5 E प्रतिचेल.
6 K 1 adds तानि.
7 E पीडनम्.
8 K 2 adds क्ष्वेलं before.
9 E रुन्धन्तम्.

**पूल** संघाते। द्वयोर्घञ्। मूलं फलम्। **मूल** प्रतिष्ठायाम्। **फल** निष्पत्तौ। द्वयोः पचाद्यच्। अचुल्लताम्। **चुल्ल** भावकरणे। शता। प्रफुल्लेति।। **फुल्ल** विकसने। पचाद्यच्। चिल्लेति। **चिल्ल** शैथिल्ये भावकरणे च। अच्। अवेलितानाम्। **वेलृ चेलृ केलृ खेलृ क्ष्वेलृ वेल्ल** चलने। वेलेः [1]कर्मणि क्तः। चेलेति। चेलेरच्। केलीति। केलेरिन्। खेलनमिति। खेलेर्ल्युट्। द्वयोः क्रीडार्थत्वं धातूनामनेकार्थत्वात्। क्ष्वेलेति क्ष्वेलेर्घञ्। प्रवेल्लितेति। वेल्लेः कर्तरि क्तः। पेलवेति। **पेलृ फेलृ शेलृ** गतौ। 'कुडिकितिपणिपेलृ-पल्लिवल्लिगालिभ्यो ऽवक्'[2] इति पेलेरवक्। फेलनात्। फेलेर्ल्युट्॥

**[3]सुमार्गशेलात् स्खलतां खलात्मनां**
**गलच्छिदार्थं सलितं महीतलम्।**
**दलत्तनु प्रश्वलितान् परान् प्रति**
**प्रश्वल्लिताखोडसुदर्शनायुधम् ॥७०॥**

सुमार्गशेलात्[4] सन्मार्गगमनात् स्खलतां चलतां खलात्मनां गलच्छिदार्थं महीतलं सलितं प्राप्तम्। युद्धे दलत्तनु विदीर्यमाणदेहं यथा भवति तथा प्रश्वलितान् आशु गतान् परान् प्रति प्रश्वल्लितम् आशु गमितम् अखोडम् अप्रतिहतगति अस्खलं सुदर्शनायुधं येन तम्॥

[5]शेलादिति। शेलेर्घञ्। स्खलताम्। **स्खल** सञ्चलने। प्रतिघाते-ऽप्यस्ति। शता। खलेति। **खल** सञ्चये। पचाद्यच्। गलेति। **गल** अदने। अच्। सलितम्। **षल** गतौ। कर्तरि क्तः। दलदिति। **दल** विदारणे। शता। प्रश्वलितान्। **श्वल श्वल्ल** आशुगमने। श्वलेः कर्तरि क्तः। प्रश्वल्लितेति। श्वल्लेर्णिजन्तात् कर्मणि क्तः। अखोडेति। **खोलृ खोर्ऋ** गतिप्रतिघाते[6]। खोलेरच्। डलयोरभेदाड्डः॥

---

1 K 2. 5. 6 कर्तरि.
2 *SKA*. 2.3.134.
3 D 1. 2 K 3 शैलात्.
4 K 3 शैलात्.
5 K 3 शैलादिति.
6 D 2 –प्रतीघाते, K 3 –प्रतीघातयोः.

**[1]अखोरधौरत्पतगेन्द्रवाहनं**
**स्वसेविनां [2]तित्सरिषान्निरासिनम् ।**
**क्मरन्मनोदुर्गममभ्रमेचकं**
**वभ्रद्वधूविभ्रमदृष्टिमभ्रितम्[3] ॥७१॥**

अखोरं अप्रतिहतगति यथा तथा [4]धौरन् चतुरं गच्छन् पतगेन्द्रो वाहनं यस्य तम्। स्वसेविनां तित्सरिषां व्याजकरणेच्छां निरसितुं शीलं यस्य तम्। क्मरतां कुटिलानां मनसो दुर्गमम्। अभ्रमिव मेचकम्। वभ्रन्तीनां चरन्तीनां वधूनां [5]विभ्रमदृष्ट्या मभ्रितं प्राप्तम् ॥

अखोरेति। खोरेः पचाद्यच्। धौरदिति। [6]**धौर्ऋ** गतिचातुर्ये। शता। तित्सरिषेति। **त्सर** छद्मगतौ। सनन्तादकारः। क्मरदिति। **क्मर** हूर्च्छने। कौटिल्यं तत्। शता। अभ्रेति। **अभ्र वभ्र मभ्र चर** गत्यर्थाः। अभ्रेः पचाद्यच्। [7]वभ्रदिति। वभ्रेः शता। [8]मभ्रितमिति। मभ्रेः कर्मणि क्तः ॥

**सञ्चारनिष्ठ्यूतनखेन्दुचन्द्रिकं**
**लोके जयन्तं सकलैकजीवनम् ।**
**[9]नापीवितां नाप्यतिमीवितां [10]श्रितं**
**तनुं सुतीवोरुमनीवमध्यमाम् ॥७२॥**

पूर्वार्धः स्पष्टः। न अपीवितां [11]न अतिमीवितामपि[12] तनुं श्रितम्। अपीवितां कृशाम्। अतिमीवितां अतिस्थूलाम्। कीदृशीं तनुम्। सुतीवौ सम्यक् पीनावूरू यस्यास्ताम्। अनीवं कृशं मध्यमं मध्यप्रदेशो यस्यास्ताम् ॥

---

1 V धोरत्.
2 K 1 E तित्सरिषां निरासिनम्.
3 E वृष्टि for दृष्टि.
4 E धौरत् चतुरं गच्छत् पतगेन्द्र-वाहनम्.
5 E विभ्रमवृष्टिमभ्रितम्.
6 E V धोर्ऋ.
7, 8 All MSS. other than K 2 om. this word.
9 E अपीविताम्.
10 V transposes श्रितं and तनुं.
11 E om. न.
12 K 2. 5. 6 om. अपि.

संचारेति। चरेर्घञ्। निष्ठ्यूतेति। **ष्ठिवु** निरसने। आख्यान्निः-सारणं तत्। 'सुब्धातुष्ठिवुष्वक्कतीनां[1] न' [वा. ६.१.६३] इति सत्वा-भावः। कर्मणि क्तः। जयन्तम्। **जि** जये। जय उत्कर्षप्राप्तिः। [2]शता। जीवनम्। **जीव** प्राणधारणे। ल्युट्। [3]अपीविताम्। अतिमीविताम्। **पीव मीव तीव णीव** स्थौल्ये। पीविमीव्योः कर्तरि क्तः। [4]सुतीवेति। तीवे-रिगुपधात् कः। अनीवेति। नीवेः कः ॥

**प्रक्ष्यूतगोपीशुचमूर्णपूतनं**
**तूर्णानसं थूर्णबकादिदानवम् ।**
**दुदूर्विषून् धूर्वितुमेव गूर्वणं**
**मूर्वन्तमापूर्वितपर्वताध्वरम् ॥७३॥**

प्रक्ष्यूता निरस्ता गोपीनां शुक् येन तम्। ऊर्णा हिंसिता पूतना येन तम्। तूर्णं चूर्णीकृतम् अनः [5]शकटं येन तम्। थूर्णाः हताः बकादिदानवाः येन तम्। दुदूर्विषून् हन्तुमिच्छून् धूर्वितुं हन्तुमेव गूर्वणम् उद्यमं मूर्वन्तं बध्नन्तं परिगृह्णन्तमित्यर्थः। आपूर्वितः संपूरितो निर्वर्तितः पर्वताध्वरो येन तम् ॥

प्रक्ष्यूतेति। **क्षिवु**[6] निरसने। कर्मणि क्तः[7]। ऊर्णेति। **उर्वी तुर्वी थुर्वी दुर्वी धुर्वी** हिंसार्थाः। [8]उर्वेः कर्मणि क्तः। 'लोपो व्योर्वलि' [६.१.६६] इति[9] वलोपे 'रदाभ्यां–' [८.२.४२] इति नत्वम्। 'र्वोरु-पधाया [10]दीर्घ इकः' [८.२.७६] इति दीर्घः[11]। तूर्ण थूर्ण इति। तुर्वी-

1 K 3. 4 ष्वर्क, K 2 ष्वक्कि, E ष्वष्क for ष्वक्क.
2 E om. this word.
3 K 1. 3–6 om. अपीविताम्, अतिमीविताम्.
4 All MSS. other than K 2 –तीविनीव्योरिगुपधत्वात् कः for सुती......नीवेः कः.
5 K 2. 5. 6 om. this word.
6 E adds क्षेवु.
7 The editor of E adds 'क्षयूत-गोपी' इति पाठे क्षेवुधातुर्बोध्यः.
8 E ऊर्वेः.
9 E om. इति.
10 K 1. 2. 5. 6 om. दीर्घ इकः.
11 E om. इति दीर्घः.

थुर्व्योः प्राग्वत् क्तः। दुदूर्विषून्। दुर्वेः सन्युप्रत्ययः। धूर्वितुं। धुर्वेस्तुमुन्। गूर्वणम्। **गुर्वी** उद्यमने। ल्युट्। मूर्वन्तम्। [1]**मुर्वी** बन्धने। शता। आपूर्वितेति। **पुर्व पर्व फर्व मर्व** पूरणे। अन्त्यो गतौ च द्रुमे[2]। [3]पुर्वेः कर्मणि क्तः। पर्वतेति। 'भृमृदृशि–' [उण्.३.१०९] इत्यादिना पर्वेरतच्॥

**अफर्विताकाङ्क्षितमर्वकं सतां**
**मांसादिसंचर्वकदुष्टभर्वकम् ।**
**कर्वद्वधूकेलिरसेन खर्वितं**
**गर्वार्वकं शर्वपरेण सर्वताम् ॥७४॥**

सताम् अफर्वितस्य अपूर्णस्य आकाङ्क्षितस्य मर्वकं पूरकम्। मांसादेः संचर्वकाणां [4]भक्षकाणां दुष्टानां भर्वकं हन्तारम्। कर्वन्तीनां दृप्यन्तीनां वधूनां केलिरसेन खर्वितं माद्यन्तम्। शर्वपरेण हिंसापरेण सर्वतां लोकं हिंसतां गर्वस्य अर्वकं नाशकम् ॥

अफर्वितेति। फर्वेः कर्तरि क्तः। मर्वकम्। मर्वेर्ण्वुल्। [5]संचर्वकेति। **चर्व** अदने। ण्वुल्। भर्वकम्। **भर्व** हिंसायाम्। [6]ईदिदित्येके। ण्वुल्। कर्वदिति। **कर्व खर्व गर्व** दर्पे। आद्य ईदिदित्येके। तस्माच्छता। खर्वितम्। खर्वेः कर्तरि क्तः। गर्वेति। गर्वेर्घञ्। अर्वकमिति। **अर्व शर्व षर्व** हिंसायाम्। अर्वेर्ण्वुल्। शर्वेति। शर्वेर्घञ्[7]। सर्वताम्। सर्वेः शता ॥

**विश्वेन्वितं स्रङ्मधुपिन्विताङ्ककं**
**मिन्वन्तमुच्चैः कृपयैव निन्वकान् ।**
**हिन्वन्तमाभीरकुलं विलासिनी-**
**दिन्वन्तमाधिन्वितदेवमण्डलम् ॥७५॥**

---

1 V मुर्व.
2 मर्व पूर्त्तौ गतौ – K.K. 294.
3 E पूर्वेः.
4 All MSS. other than K 2 omit this word.
5 E संचर्वकम्.
6 K 1. 3. 4 ऊदिदित्येके, E om.
7 K 3. 5. 6 अच् for घञ्.

विश्वस्मिन् इन्वितं व्याप्तं सर्वैः प्रीणितं वा। स्रड्मधुना पिन्वितानि सिक्तानि अङ्गकानि यस्य तम्। कृपया कृपामृतेन एव निन्वकान् सेवकान् उच्चैः अधिकं मिन्वन्तं सिञ्चन्तम्। आभीरकुलं हिन्वन्तं प्रीणयन्तम्। विलासिनीर्दिन्वन्तं तोषयन्तम्। आधिन्वितं सम्यक्प्रीणितं देवमण्डलं येन तम् ॥

इन्वितमिति। **इवि** व्याप्तौ। प्रीणने चैके। इदित्वान्नुम्। कर्तरि क्तः। पिन्वितमिति। **पिवि मिवि णिवि** सेचने। सेवने इत्येके। पिन्वेः कर्मणि क्तः। मिन्वन्तम्। मिन्वेः शता। निन्वकान्। निन्वेर्ण्वुल्। हिन्वन्तम्। दिन्वन्तम्। **हिवि दिवि धिवि जिवि** प्रीणनार्थाः। हिन्विदिन्व्योः शता। आधिन्वितेति। धिन्वेः कर्मणि क्तः ॥

**जिन्वन्तमुर्वीं निजरिण्वनैः सतां**
**रण्वन्तमन्तर्भवधन्वपादपम्।**
**कृण्वन्तमाश्चर्यगतीरमूतिदं**
**जगन्त्यवन्तं त्रिदशोपधावितम् ॥७६॥**

निजरिण्वनैः आत्मीयसंचारैः उर्वीं जिन्वन्तं प्रीणयन्तम्। सताम् अन्तः मनो[1] रण्वन्तं प्राप्नुवन्तम्। भवरूपे धन्वनि [2]मरुभूमौ पादपं छायाकरं वृक्षम्। आश्चर्यगतीः कृण्वन्तं कुर्वन्तम्। अमूतिदं बन्धाभावस्य मोक्षस्य दातारम्। जगन्ति अवन्तं रक्षन्तम्। त्रिदशैरुपधावितं स्तुतं सेवितं वा ॥

जिन्वन्तम्। जिन्वेः शता। रिण्वनैः। **रिवि रवि धवि** गत्यर्थाः। रिण्वेर्ल्युट्। रण्वन्तम्। रण्वेः शता। धन्वेति। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' [उण्.१.१४५] इति धन्वेः कनिन्। कृण्वन्तम्। **कृवि** हिंसाकरणयोश्च। चाद् गतौ। शता। अमूतीति। **मव** बन्धने। [3]'क्किनि ज्वरत्वर–' [६.४.२०] इत्यूठ्। अवन्तमिति। **अव** रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहन-

1 K 2 om. मनः.
2 K 2. 5. 6 om. this word.
3 All MSS. other than K 2 क्विनि.

भावद्वृद्धिषु[1]। 'दानभावद्वृद्धिषु'[2] इति वा पाठः। अस्माच्छता। मव्यादय उदात्ता जयतिवर्जमुदात्तेतः। उपधावितम्। **धावु** गतिशुद्ध्योः। शुद्धिः शोधना। जवे च द्रुमे[3]। उपपूर्वत्वात् [4]स्तुत्याद्यर्थता। उदात्तः स्वरितेत्। अस्मात् कर्मणि क्तः॥

ईदृशं भगवन्तं दृष्टवतोऽक्रूरस्य भाग्यमभिनन्दति –

**सन्धुक्षमाणमरिधिक्षकमूष्मजालं**
**संवृक्ष्यवेदमतशिक्षकभिक्षुगम्यम् ।**
**संक्लेशितस्वकथदक्षणदीक्षितं[5] तं**
**प्रेक्ष्यैष जन्मफलमीषितवान् महात्मा ॥७७॥**

[6]महात्मा एष तं प्रेक्ष्य जन्मफलमीषितवान् प्राप्तवान्। कीदृशमित्यत्राह[7]–अरीणां धिक्षकं क्लेशकं दाहकं वा। ऊष्मजालं प्रतापं संधुक्षमाणं संदीपयन्तम्। ऊष्मान्तधातुजालमत्रारभ्यते इति भाति। संवृक्ष्यं संवरणीयं परिग्राह्यं यत् वेदमतं तस्य शिक्षकैरभ्यासकैर्भिक्षुभिर्गम्यम्। संक्लेशिता सम्यक्कथिता स्वकथा यैस्तेषां दक्षणे वर्धनायां जीवने वा दीक्षितं संप्राप्तव्रतम्॥

संधुक्षमाणमिति। **धुक्ष धिक्ष** संदीपनक्लेशनजीवनेषु। [8]घषान्ता उदात्ता अनुदात्तेतः। धुक्षेः शानच्। धिक्षकमिति। धिक्षेर्ण्वुल्। संवृक्ष्येति। **वृक्ष** वरणे। ण्यत्। शिक्षकेति। **शिक्ष** विद्योपादाने। ण्वुल्। भिक्षु इति। **भिक्ष** याच्ञायामलाभे लाभे च। क्लेशे व्यक्तायां वाचि चेत्येके। 'सनाशंसभिक्ष उः' [३.२.१६८] इति उः। संक्लेशितेति। **क्लेश** [9]व्यक्तायां

---

1 K 2. 5. 6 E स्वाम्यर्थ for स्वाम्यसामर्थ्य.
2 E भाग for भाव.
3 धावृञ् जवे मृजि – *KK*. 293.
4 K 2. 5. 6 E स्तुत्यर्थता.
5 D 1. 2 दक्षिण for दक्षण.
6 All MSS. other than K 2 om. this word.
7 K 2. 5. 6 E om. अत्र.
8 E घाषान्ता, K 1-3 घसान्ता, K 4-6 घंसान्ता.
9 E अव्यक्तायाम् ; this is the sense given in *MDV*.

वाचि। बाधन इत्येके। उपतापे च द्रुमे[1]। कर्मणि क्तः। दक्षणेति। **दक्ष** वृद्धौ शीघ्रार्थे च। ल्युट्। दीक्षितमिति। **दीक्ष** मौण्ड्येज्योपनयननियम-व्रतादेशेषु।

अस्यार्थो व्रतसंप्राप्तिस्तद्भेदाः कथिता इमे।
सा च मौण्ड्यात् क्वचित् क्वापि दीक्षणीयादिकेज्यया॥

उपनीत्या क्वचित् क्वापि नियमग्रहमात्रतः।
क्वचिद् गुर्वादिनेदं[2] ते व्रतमस्त्विति शासनात्॥

क्रमेण दीक्षते [3]वर्णी यजमानश्च[4] माणवः।
तपसे च महानाम्न्यै तत्र ह्यादेशना व्रतम्[5]॥

अस्माद् दीक्षेः कर्तरि क्तः। प्रेक्ष्येति। **ईक्ष** दर्शने। ल्यप्। ईषितवानिति। **ईष** गतिहिंसादर्शनेषु। क्तवतुः॥

**भाषितुं स खलु हर्षवर्षितो**
**गेषितुं समुचितं च नाशकत्।**
**येषणाप्तहरिजेषसंभ्रमा-**
**न्नेषितस्मृतिरपेषितो रथात्॥७८॥**

स खलु हर्षवर्षितो हर्षेण वर्षितः स्निग्धीभूतः पूर्णः सन् भाषितुं समुचितं च गेषितुमन्वेष्टुं नाशकत्। येषणाप्तहरिजेषसंभ्रमात् [6]येषणाप्तेन प्रयत्नलब्धेन हरिजेषेण श्रीकृष्णप्राप्त्या जातात् सम्भ्रमाद्धेतोः नेषितस्मृतिः गतस्मृतिः रथात् अपेषितः अपगतः अवतीर्णवान्॥

---

1 In *KK* it is the root क्लिश् that is given the sense of उपताप also and not क्लेश– vide क्लेश् ङ वदे, क्लिश् युजङ चोपतापे–*K K*.299.

2 *E* गुर्वादिनन्दे.

3 K 1. 3. 4 E वाग्मी, K 2. 5. 6 वामी.

4 E तु for च.

5 *PS* Dhātukhaṇḍa.

6 K 2. 5. 6 येषणाप्ते प्रयत्नलब्धे हरिजेषे श्रीकृष्णप्राप्तौ for येषणा...प्राप्त्या.

भाषितुम्[1]। भाष व्यक्तायां वाचि। तुमुन्। वर्षितः। वर्ष स्नेहने। स्नेहनं स्निग्धीभावः। कर्तरि क्तः। गेषितुम्। गेषृ अन्विच्छायाम्। ग्लेषृ इत्येके[2]। गेषेस्तुमुन्। येषणेति। येषृ प्रयत्ने। ल्युट्। जेषेति। जेषृ णेषृ [3]एषृ प्रेषृ गतौ। जेषेर्घञ्। नेषितस्मृतिः। अपेषितः। [4]नेष्येष्योः कर्तरि क्तः॥

सुप्रेषितान् पथि सरेषवृके सहेषं
हेषास्तकासरमदानतिभासुराङ्गान्।
नासोत्थरासलसितान्नसितेन दाम्ना
सूतो ययाम [5]समराभ्यसितांस्तुरंगान् ॥७९॥

सूतः सारथिः नसितेन सम्यग्वर्तनात् कुटिलेन दाम्ना तुरङ्गान् ययाम बबन्ध। कीदृशान्। सरेषवृके [6]सशब्दवृके पथि मार्गे सहेषं [7]सशब्दं यथा तथा सुप्रेषितान् सम्यक् चरित्वा गतान्। हेषया [8]शब्देन अस्तो निरस्तः कासराणां महिषाणां मदो यैस्तान्[9]। अतिभासुराङ्गान्। नासोत्थेन रासेन शब्देन अश्वस्वभावजेन शोभितान्। समरे अभ्यसितान् अभीतान्॥

सुप्रेषितानिति। प्रेषेः कर्तरि क्तः। रेषेति। रेषृ हेषृ [10]ह्रेषृ अव्यक्ते शब्दे। अत्र रेषिर्वृकशब्दे हेषिरश्वशब्दे। हेषेति चाश्वशब्दे पठितव्यम्। रेषेर्घञ्। हेषेरकारः। हेषेश्च। कासरेति। कासृ शब्दकुत्सायाम्। रोगजे कुत्सितशब्दे ऽयं प्रसिद्धः। शब्दमात्रे शोभार्थे ऽप्याह भट्टिः। 'सुन्दिकन्दिमन्दिमन्थिमञ्जिपञ्जिपिञ्जिपटिकासिकुटिकुशुदुकदिवदिभ्यो ऽरन्' इति भोजोक्त्या[11] कासेररन्[12]। भासुरेति। भासृ दीप्तौ। [13]'भञ्जभास' [३.२.१६१] इति घुरच्। नासेति। णासृ रासृ शब्दे। नासेरकारः। [रासेति।] रासेर्घञ्।

---

1 K 2. 3 add इति.
2 K 1-3 इति चैके.
3 E पेषृ.
4 E नेष्पेष्योः.
5 D 2 समरे ऽभ्यसिता-.
6 K 5. 6 om. this word.
7 K 2. 5. 6 om. सशब्दं यथा तथा.
8 K 2. 5. 6 om. this word.
9 K 2 om. तान्.
10 K 2 om. ह्रेषृ.
11 vide *SKĀ*. 2.3.38.
12 K 2. 4-6 –वदिभ्यो ऽरन् भोजोक्तः for वदि……कासेररन्.
13 E 'भञ्जभासमिदो घुरच्' इति भासेर्घुरच्.

[1]नसितेन। **णस** कौटिल्ये। कर्तरि क्तः। अभ्यसितान्। **भ्यस** भये। प्राग्वत् क्तः ॥

**आशंसिताप्तिमुदितो भुवनग्रसिष्णुं**
**विष्णुं तमेनमसतां ग्लसमानमीहाम्।**
**अक्रूर एत्य बहुधागतमंहितांहाः**
**गर्होज्झितोऽपतदगल्ह्यतमे पदाब्जे ॥८०॥**

अक्रूर एनं तं विष्णुं एत्य आशंसिताप्तिमुदितः अगल्ह्यतमे पदाब्जे अपतत्। अगल्ह्यतमे [2]अत्यर्थमगर्हणीये। कीदृशः[3]। बहुधा गतं मंहितं प्रवृद्धं अंहो यस्य सः। गर्हयोज्झितः। कीदृशम्[4]। भुवनस्य ग्रसिष्णुं[5] संहर्तारम्। असतामीहां चेष्टामिच्छां वा ग्लसमानं नाशयन्तम् ॥

आशंसितेति। **आङः शसि** इच्छायाम्। नोपधोऽयमित्येके[6]। [7]कर्मणि क्तः। ग्रसिष्णुः। **ग्रसु ग्लसु** अदने। 'भुवश्च' [३.२.१३८] इति चकारादिष्णुच्। [ग्लसमानम्।] ग्लसेः शानच्। [8]ईहाम्। **ईह** चेष्टायम्। [अः।] बहुधेति। **बहि महि** वृद्धौ। 'बंहेर्नलोपश्च'[9] इत्युप्रत्ययः। 'संख्याया विधार्थे धा [५.३.४२] इति धाप्रत्ययः। [मंहितेति।] मंहेः कर्तरि क्तः। अंह इति। [10]**अहि** गतौ। औणादिकोऽसुन्। गर्हेति। **गर्ह गल्ह** कुत्सायाम्। गर्हेरकारः। [अगल्ह्येति।] गल्हेर्ण्यत् ॥

**बर्हप्रबल्हसमलंकृतिरालिलिङ्ग**
**प्रोत्थाप्य बर्हकनिबल्हद्रुतं तमीशः।**
**प्लीहायितासुरभरक्षतिवेहितोर्वी-**
**भैषज्यजेहपरया निजबाहयैव ॥ ८१ ॥**

---

1 E नसितेति.
2 E अत्यन्तं for अत्यर्थं.
3 K 2 adds अक्रूर इत्यत्राह.
4 K 2 adds विष्णुं.
5 K 2 adds ग्रसनशीलम्
6 vide *MDV* – दौर्गस्तु नोपधमनिदितं पठति.
7 K 2 कर्तरि.
8 K 1-4 om. ईहाम्, ईह चेष्टायाम्.
9 Vide Uṇādi 1.29.
10 E अंह.

ईशस्तं प्रोत्थाप्य निजबाह्या एव आलिलिङ्ग। कीदृशः । बर्ह-प्रबल्हेन बर्हश्रेष्ठेन समलंकृतिर्यस्य सः । कीदृशम् । वर्हकाणां हिंसकानां निवल्हेन हिंसया द्रुतमुपतप्तम् । कीदृश्या बाह्या । प्लीहायितानां गुल्म-रोगवदाचरतामसुराणां भरक्षतौ वेहितायाः सप्रयत्नाया उर्व्याः भैषज्यजेहे चिकित्साकरणप्रयत्ने परया तत्परया ॥

बर्हप्रबल्हेति । **बर्ह बल्ह** प्राधान्ये । द्वयोः पचाद्यच् । वर्हक-निवल्हेति । **वर्ह वल्ह** परिभाषणहिंसाच्छादनेषु । दाने च द्रमे[1] । परिभाषणमत्र वञ्चनवादः। वर्हेर्ण्वुल्। वल्हेर्घञ्। प्लीहायितेति। **प्लिह** गतौ। 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरि-श्वन्मघवन्' [उण्. १.१५०] इति प्लिहेः कनिनि दीर्घो निपातितः। वेहि-तेति। **वेहृ जेहृ बाहृ** प्रयत्ने। बेहृ इत्येके। जेहिर्गतौ च। वेहेः कर्तरि क्तः। [2]जेहेति। जेहेर्घञ्। [3]बाह्येति। बाहेरचि टाप् ॥

**द्राहितः शुभपथप्रकाशने**
**सस्वजेऽथ तमनूह्यवैभवः ।**[4]
**गाढमैत्ररसगृह्यमाणधी-**
**र्भूषणग्लहनधुंषितो बलः ॥ ८२ ॥**

अथ बलः तम् अक्रूरं सस्वजे आलिङ्गितवान्। कीदृशः। [5]शुभपथ-प्रकाशने सन्मार्गप्रवर्तने द्राहितः उन्निद्रः। अनूह्यमतवर्यं वैभवं यस्य सः। गाढेन अतिमात्रेण मैत्ररसेन बन्धुत्वाह्लादेन गृह्यमाणा वशीक्रियमाणा धीर्यस्य सः। भूषणानां ग्लहनेन धारणेन धुंषितः कृतकान्तिः ॥

द्राहित इति। **द्राहृ** निद्राक्षये। क्षेपे चेत्येके। कर्तरि क्तः। प्रका-शनेति। **काशृ** दीप्तौ। ल्युट्। ऊह्येति। **ऊहृ** वितर्के। ण्यत्। गाढेति। **गाहू** विलोडने। क्षोभणं तत्। लक्षणया जलाद्यवतरणेऽपि। भावे क्तः।

---

1 बर्ह बल्ह ङ स्मृतिहिंसादानवाक्षु— *KK*. 348. We do not get there the sense दान for वर्ह वल्ह.

2, 3 K 5. 6 om. this word.

4 D 1 वैभवम्.

5 The portion from this upto नक्षत्रराडिव in *ś*loka 84 omitted in K 4.

गृह्यमाणेति। **गृहू** ग्रहणे। **ग्लहू** [1]इति चैके। गृहेः कर्मणि शानच्। ग्लह्नेति। ग्लहेर्ल्युट्। धुंषित इति। **घुषि** कान्तिकरणे। घषी इत्येके। [2]घस इत्यन्ये। धुक्षादय उदात्ता अनुदात्तेतः। कर्तरि क्तः॥

**घोषद्भूषः पङ्कजाक्षस्तमूचे**
**पापश्रेणीतक्षणे त्वष्टृधर्मा।**
**उक्षन्नेनं मन्दहासेन रक्षन्**
**विश्वं निक्षन् वल्लवीस्तृक्षिताघाः॥ ८३॥**

पङ्कजाक्षः तमूचे। कीदृशः[3]। घोषन्त्यः शब्दायमानाः भूषाः यस्य सः। पापश्रेण्याः तक्षणे तनूकरणे त्वष्टुः[4] तक्षण इव धर्मो व्यापारो यस्य सः। एनमक्रूरं मन्दहासेनोक्षन् आर्द्रीकुर्वन्[5]। तृक्षिताघा गताघाः वल्लवीः निक्षन् चुम्बन्॥

घोषदिति। **घुषिर्** [6]अविशब्दनार्थः। ऋदिदित्येके। अर्हान्ता उदात्तेतः शिषिवर्जमनुदात्ताः। आविष्कृताभिप्रायं वचनं विशब्दनम्। तद्व्यतिरिक्तेऽर्थेऽयं धातुः। स चार्थः शब्दमात्रं वा यथाप्रयोगमन्यो वा। अस्माच्छता। पङ्कजाक्षः। **अक्षू** व्याप्तौ। सङ्घाते च द्रुमे[7]। [8]अस्मादौणादिकेन्यन्तादक्षिशब्दात् [9]समासान्तः षच्। तक्षणे। **तक्षू त्वक्षू** तनूकरणे। तक्षेर्ल्युट्। त्वष्टृ[10]। 'नप्तृनेष्टृत्वष्टृ–' [उण्.२.९४] इत्यादिना तृन्नन्तो निपातितः। उक्षन्। **उक्ष** सेचने। रक्षन्। **रक्ष** पालने। निक्षन्। **णिक्ष** चुम्बने। त्रिभ्यः शता। तृक्षितेति। **तृक्ष ष्टृक्ष णक्ष** गतौ। तृक्षेः कर्तरि क्तः॥

---

1 K 5. 6 om. इति and एके.
2 E घष.
3 K 2 adds श्रीहरिस्तत्राह.
4 E adds इव.
5 K 1. 3 भवन् for कुर्वन्.
6 E अविशब्दने.
7 अक्ष् नक्षू व्याप्तिसंहत्योः – *KK*. 306
8 E अन्नन्तात् for इन्यन्तात्.
9 K 2. 5. 6 'अक्ष्णोऽदर्शनात्' इति टच् (This sūtra lays down अच्, not टच्).
10 K 2 adds इति.

**आस्तृक्षितोऽद्य[1] वितनोषि महत्सुखं नो**
**नक्षत्रराडिव परं विकलङ्कवक्षाः ।**
**संमृक्षितोरुगुलमाक्षिकहृद्यवाच-**
**स्तक्षन्ति नाम शुचमिषृकराः सपक्षाः ॥ ८४ ॥**

हे अक्रूर, आस्तृक्षितः आगतः त्वम् अद्य नो महत् सुखं वितनोषि। नक्षत्रराट् चन्द्र इव। परं केवलं विकलङ्कवक्षाः विकलङ्कं निर्दोषं वक्षो हृदयं यस्य सः। चन्द्रस्तु सकलङ्कमध्य इत्येव भेदः। तवास्मासु सुखकरणं न चित्रम्। यस्मात् संमृक्षितोरुगुलमाक्षिकहृद्यवाचः संमृक्षितः संघातीकृतः उरुगुलो माक्षिकं मधु च। ते इव हृद्या वाक् येषां तादृशाः प्रियतराः सपक्षा बन्धवः शुचं तक्षन्ति नाम छादयन्ति खलु ॥

आस्तृक्षित इति। पृक्षेः कर्तरि क्तः। नक्षत्रेति। 'अमिनक्षियजि–' [उण् .३.१०४] इत्यादिना नक्षेरत्रन्। वक्ष इति। **वक्ष** रोषे। सङ्घात इत्येके। सङ्घातीभवन्त्यस्थीन्यत्रेति असुन्। [2]संमृक्षितेति। **मृक्ष** सङ्घाते। [3]**मक्ष** इत्येके। मृक्षेः कर्मणि क्तः। माक्षिकेति। 'पिपीलिकेतिकहृदिकमक्षिकादयः'[4] इति भोजेन [5]किकनि निपातिता[6] मक्षिका। तस्मात् 'तेन कृतम्' इत्यर्थे अण्[7]। तक्षन्ति। **तक्ष** त्वचने। तच्च संवरणं त्वचो ग्रहणं वा। ग्रहणमात्रे च द्रुमे[8]। **पक्ष** इत्यप्येके। तक्षेर्लट्। पक्षेति। पक्षेरच् ॥

**सूक्ष्यं त्वदीक्षा चिरकाङ्क्षिता नो**
**वाङ्क्षाम्यमाङ्क्ष्यान् न तु नीचलोकान् ।**
**द्राक्षां जनो वाञ्छति नो फलानि**
**ध्राङ्क्षद्द्रुहुध्वाङ्क्षविचूषितानि ॥ ८५ ॥**

1 R असि for अद्य.
2 E संमृक्षेति.
3 E म्रक्ष.
4 E –मक्षिकादप्.
5 K 2. 5. 6 कनि, K 1. 3. 4 E om. this word.
6 Vide *SKĀ*. 2. 2. 18.
7 By the sūtra संज्ञायाम् (4.3.117)
8 *KK*. however, has त्वक्षू त्वचि ग्राहे – 313.

हे सूक्ष्यं आदरणीय सखे अक्रूर, त्वदीक्षा नश्चिरकाङ्क्षिता। अहममाङ्क्ष्यान् काङ्क्षितुमयोग्यान् नीचलोकान् न तु वाङ्क्षामि [1]द्रष्टुं नेच्छामि। जनो द्राक्षां वाञ्छति। ध्राङ्क्षद्भिः घोरं [2]शब्दायमानैः बहुभिः ध्वाङ्क्षैः विचूषितानि पीतरसानि फलानि नो वाञ्छति ॥

सूक्ष्येति। **सूक्ष** आदरे। ण्यत्। काङ्क्षितेति। **काक्षि वाक्षि माक्षि** काङ्क्षायाम्। काङ्क्षेः कर्मणि क्तः। [3]वाङ्क्षामि। वाङ्क्षेर्लट्। [4]अमाङ्क्ष्यान् माङ्क्षेर्ण्यत्। द्राक्षामिति। **द्राक्षि ध्राक्षि ध्वाक्षि** घोरवासिते[5] च। चात् काङ्क्षायाम्। द्राङ्क्षेरकारे द्राक्षा। द्राक्षेति यवादौ निपातनान्नलोपः। ध्राङ्क्षदिति। ध्राङ्क्षेः शता। ध्वाङ्क्षेति। ध्वाङ्क्षेरच्। विचूषितानि। **चूष** पाने। कर्मणि क्तः ॥

**तूषं तनोषि कमलस्य यथैव पूषा**
**खेदं च मूषसि कृपारसरूषितात्मन्।**
**शूषन् दृशोरमृतयूषमजूषकस्त्वं**
**भूषस्यनूषमतिरीषभुजां प्रियः क्ष्माम् ॥८६॥**

हे कृपारसरूषितात्मन् कृपातिशयेन रूषितो रञ्जितः आत्मा मनो यस्य तादृश हे अक्रूर, त्वं तूषं सन्तोषं तनोषि। पूषा सूर्यः कमलस्य यथा तथा। खेदं मूषसि हरसि च। त्वं क्ष्मां भूषसि अलंकरोषि। कीदृशस्त्वम्। तत्राह – दृशोः पानपात्रभूतयोरमृतयूषं घनीभूतामृतरसं शूषन् उत्पादयन्। अजूषकः अहिंसकः। अनूषा अन्येषामपीडाकरा[6] मतिर्यस्य सः। ईषभुजामुञ्छवृत्तीनां प्रियः ॥

तूषमिति। **तूष** तुष्टौ। घञ्। पूषेति। **पूष** वृद्धौ। 'श्वन्नुक्षन्–' [उण्.१.१५०] इत्यादिना [7]कनिनि निपातितः। मूषसि। **मूष** स्तेये।

---

1 E द्रष्टुमिच्छामि.
2 K 2. 5. 6 शब्दयद्भिः.
3, 4 All MSS. other than K 2 omit this word.
5 K 1. 5. 6 –वाशिते.
6 K 1. 3. 4 अपीडका, K 2 अपीडिता for अपीडाकरा.
7 K 1. 3. 4 कनि, K 2 om.

लट्। रूषितेति। **लूष रूष** [1]रूषायामित्येके[2]। [3]रूषा लेपनम्। रूषेः कर्मणि क्तः। शूषन्निति। **शूष** प्रसवे। स चानुज्ञा[4]। 'या [5]लीढा श्रवसापि सौति महतीमौत्सुक्यपीडासिकाम्' इत्यत्र सौतेरुत्पादनार्थप्रयोगात्[6] [7]उत्पादनमपि प्रसवः। अस्माच्छता। यूषमिति। **यूष** हिंसायाम्। **जूष** च। यूष्यते हिंस्यते पाकेनेति घञि यूषो घनीभूतः क्षीरादिः। अजूषकः। जूषेर्ण्वुल्। भूषसि। **भूष** अलंकारे। लट्। अनूषेति। **ऊष** रुजायाम्। पचाद्यचि नञ्समासः। ईषेति। **ईष** उञ्छे। घञ् ॥

**इत्युक्तः सुरकाषिखाषिणमसावूचे जगच्छेषका-**
**न्नित्यं ते जषते झषादिवपुषे रक्षश्चमूशाषिणे ।**
**केश्यादीन् वषणोत्सुकान् प्रमषते[8] भूयोऽपि रोषिष्यते**
**रेषोऽन्यान् भषतो नमोऽस्तु कमलाकोष्णस्तनं [9]जेषते**
**॥८७॥**

इत्युक्तोऽसौ सुरकाषिणः सुरहिंसाशीलान् असुरान् खषितुं हिंसितुं शीलं यस्य तं श्रीकृष्णमूचे। किमूचे तत्राह – झषादिवपुषे ते नमोऽस्तु। कीदृशाय[10]। जगतः शेषकान् हिंसकान् नित्यं जषते हिंसते। रक्षश्चम्वाः शाषिणे हननशीलाय। वषणे [11]हिंसने उत्सुकान् केश्यादीन् [12]प्रमषते हिंसते। अन्यान् भषतः श्वरवसमशब्दं[13] पिशुनोक्तिं वा कुर्वतो रेषो हिंसकान् भूयोऽपि रोषिष्यते हनिष्यते। कमलाया लक्ष्म्याः कोष्णस्तनं [14]जेषते सेवमानाय ॥

सुरकाषिखाषिणमिति। **कष खष शिष जष झष शष वष मष रुष रिष** हिंसार्थाः। कषिखष्योर्णिनिः। [15]शेषकानिति। शिषेर्ण्वुल्। [16]जषत

---

1 E भाषायाम् for रूषायाम्; *MDV*. लूष रूष भूषायामिति सुधाकरः.
2 E om. इत्येके.
3 E रूषा आलेपन इत्येके.
4 E अभ्यनुज्ञा for अनुज्ञा.
5 K 1. 3. 4 E पीडा.
6, 7 E उपादान for उत्पादन.
8 E प्रशमते.
9 E जोषते.
10 K 2 adds ते.
11 K 2. 5. 6 हतौ for हिंसने.
12 E प्रषमते.
13 K 1. 2. 5. 6 E add कुर्वतः.
14 E जोषते.
15, 16 Only K 2 gives these प्रतीक s.

इति। जषेः शता। [1]झषेति। झषेर्घञर्थे कः। [2]शाषिण इति। शषेर्णिनिः। [3]वषणेति। वषेर्ल्युट्। [4]प्रमषते। मषेः शता। [5]रोषिष्यते। रुषेर्लृटि शता। [6]रेषः। रिषेः 'अन्येभ्योऽपि दृश्यन्ते' [३.२.७५] इति विच्। भषतः। **भष** भर्त्सने। तच्चेह श्वरवः। पिशुनोक्तौ च द्रुमे[7]। शता। उष्णेति। **उष** दाहे। 'इण्सिञ्दीङुष्यविभ्यो नक्' [उण्. ३.२] इति नक्। जेषते। **जिषु विषु मिषु** सेवने। जिषेः शता॥

**[8]वेषैर्मेष्यतमैः प्रपोषदशुभप्रश्रेषिभिः[9] श्लेषति**
**प्रोष्यान् प्लुष्टजनान् कृपामृतपृषद्वर्षी भवान् दानवान्।**
**सामर्ष परघर्षिणोऽपि हृषितास्त्वां नोपयान्त्याहवे**
**तोसह्रासविहीनशङ्खजनितह्लासाद्रसद्दिक्तटम्॥८८॥**

भवान् वेषैः मत्स्यादिरूपैः दानवान् श्लेषति भस्मीकरोति। कीदृशो भवान्। कृपारूपस्यामृतस्य पृषतं बिन्दुं वर्षितुं शीलं यस्य सः। कीदृशैर्वेषैः। मेष्यतमैः सर्वैरुपास्यतमैः। प्रपोषन्तं वर्धमानमशुभं प्रश्रेषितुं दग्धुं शीलं येषां तैः। कीदृशान् दानवान्। प्रोष्यान् भस्मीकर्तुं योग्यान्। प्लुष्टाः दग्धा जना यैस्तान्। सामर्षं सक्रोधं यथा तथा परान् घर्षितुमभिभवितुं शीलं येषां तेऽपि हृषिताः प्रतिहता आहवे त्वां न उपयान्ति। कीदृशं त्वाम्। तोसस्य शब्दस्य ह्रासेनाल्पतया विहीनो यः शङ्खस्तेन जनितात् [10]ह्लासात् शब्दाद्धेतोः रसन्तः शब्दायमाना दिक्तटा यस्य तम्॥

वेषैरिति। विषेर्घञ्। [मेष्येति।] मिषेर्ण्यत्। प्रपोषदिति। **पुष** पुष्टौ। शता। प्रश्रेषिभिः। **श्रिषु श्लिषु प्रुषु प्लुषु** दाहे। श्रिषेर्णिनिः। [श्लेषति।] श्लिषेः लट्। [प्रोष्यान्।] प्रुषेर्ण्यत्। [प्लुष्टेति।] प्लुषेः कर्मणि क्तः। [11]पृषद्वर्षीति। **पृषु वृषु मृषु** सेचने। आद्यौ हिंसासंक्लेशयोश्च[12]। मृषु

1-6 Only K 2 gives these प्रतीक s.

7 भष् बुक्के पिशुनोक्तौ–*KK*. 320.

8 K 2. 5. 6 om. this verse and its commentary.

9 D 1 M 1. 2 K 1 प्रश्लेषिभिः.

10 K 3 om this word.

11 E पृषदिति.

12 E क्लेश for संक्लेश.

सहने च। मृषु हिंसाक्लेशदैन्येष्वित्येके। पृषे: 'वर्तमाने पृषद्बृहत्' [उण्. २.८१] इत्यतो निपातितः। वृषेर्णिनिः। [सामर्षमिति।] मृषेर्घञ्। परघर्षिणः। वृषु संघर्षे। णिनिः। हृषिताः। हृषु अलीके। तुष्टौ च द्रुमे। कर्तरि क्तः। 'हृषेर्लोमसु' [७.२.२९] इतीड्विकल्पः[1]। तोसह्रासेति। तुस ह्रस ह्लस रस शब्दे। ह्रसिरल्पीभावेऽपि। तुसिह्रस्योर्घञ्। [ह्लासेति।] ह्लसेरपि घञ्। [रसत्।] रसेः शता ॥

**इत्यादिवादिनमजो लसितस्मितस्तं**
**संवार्य धर्मपथघस्मरदुर्जनोज्जः[2] ।**
**जीमूतचर्चिरवझर्झरवाद्यहृद्यं**
**तेनैव चानुपिसितो[3] निलयं पिपेस[4] ॥८९॥**

अजः इत्यादिवादिनं तं लसितस्मितः सन् सखे अलं स्तुत्वेति संवार्य तेनैव अनुपिसितोऽनुगतः सन् निलयं पिपेस प्राप्तवान्। कीदृशोऽजः[5]। धर्मपथघस्मराणां धर्ममार्गनाशकानां दुर्जनानामुज्जः उच्चैर्हिंसकः। कीदृशं निलयम्। जीमूतचर्चि मेघान् तर्जितुं शीलं यस्य तादृशो रवो यस्य तेन झर्झरवाद्येन हृद्यम् ॥

लसितेति। **लस** श्लेषणक्रीडनयोः। शोभायां प्रसिद्धः। कर्तरि क्तः। घस्मरेति। **घस्लृ** अदने। 'सृघस्यदः–'[6] [३.२.१६०] इति क्मरच्। उज्जः। [7]**जर्स चर्च झर्झ** परिभाषणहिंसातर्जनेषु। जर्सेः क्विपि 'रात्सस्य' [८.२.२८] इति संयोगान्तलोपः। 'अत्वसन्तस्य' [६.४.१४] इति दीर्घस्तु धातुत्वान्न। जीमूतचर्चि। चर्चेः णिनिः। [झर्झरेति।] झर्झेररः।

---

1 हृषित in the sense of प्रतिहत is by the vār. विस्मितप्रतिहतयोश्चेति वक्तव्यम् under this sūtra.

2 V दुर्जनोर्जक्.

3 D 2 M 1. 2 K 1 V – विसितो.

4 D 2 M 1. 2 K 1 V विवेस.

5 K 2 adds तत्राह.

6 K 5. 6 E give the full sūtra adding क्मरच्.

7 V जर्ज.

अनुपिसितः[1]। **पिसृ पेसृ**[2] गतौ। **पिशृ पेशृ** इत्येके। [3]पिसेः कर्मणि क्तः। [पिपेस।] [4]पेसेर्लिट् ॥

**भूषापिशङ्गरुचिपेशलमात्ममित्र-**
**मक्रूरमागतमवेक्ष्य हसन् स नन्दः ।**
**संभाव्य साधु ससुतो निशि पर्यपृच्छद्**
**मेशोद्धुतारिमशकस्य नृपस्य वृत्तम् ॥९०॥**

स नन्दः आत्ममित्रमक्रूरमागतमवेक्ष्य साधु संभाव्य हसन् ससुतो निशि नृपस्य वृत्तं पर्यपृच्छत्। कीदृशमक्रूरम्। भूषाणां पिशङ्गया रुच्या पेशलं मनोहरम्। कीदृशस्य नृपस्य। मेशेन कोपेन शब्देन वा उद्धुताः त्यक्ताः अरिरूपाः मशका येन तस्य ॥

पिशङ्गेति। 'पतेरङ्गच् पक्षिणि' [उण्. १.११९] 'विडादिभ्यः कित्' [उण्. १.११३] इत्यत्र '[5]कुरिविडिमृदिपिशिभ्यः कित्' [6]इति भोजाक्तेः[7] पिशेरङ्गच्। पेशलमिति[8]। [औणादिकः अलच्।] हसन्निति। **हसे** हसने। शता। निशीति। **णिश** समाधौ। अधिकरणे संपदादिक्विप्। मेशेति। **मिश मश** शब्दे रोषकृते च। शब्दकोपयोरिति द्रुमोक्त्या[9] रोष-कृतं रोष एव। मिशेर्घञ्। मशकस्य। मशेः 'क्वुन् शिल्पिसंज्ञयोः' [उण्. २.३२] इति क्वुन् ॥

**सोऽप्यूचे शवतां गतस्य शशिवंशोत्थस्य भोजेशितु-**
**र्वृत्तं प्रस्तुतमत्र शस्त्रनिलये शस्तं च चापोत्सवम् ।**
**चाहेनामहितस्य चास्य निधनोद्योगं रहस्यूचिवान्**
**गन्तव्यं खलु रंहसेति च दृढामाज्ञां प्रभोरभ्यधात् ॥९१॥**

---

1 K 1 –विसितः.

2 K 1 विसृ वेसृ. These forms are given as alternatives in *MDV*.

3 K 1 विसेः.

4 K 1 वेसेः.

5 E पिडि for विडि.

6 Quoted in *PS* under Uṇādi 1. 113.

7 *SKĀ*. 2. 2. 61.

8 The word is not explained in the commentary. The editor of E states –औणादिके कलप्रत्यये बाहुलकाद्गुणः.

9 मश् मिश् ध्वनौ कोपे *KK*. 303.

सोऽपि भोजेशितुर्वृत्तमत्र शस्त्रनिलये चापोत्सवं प्रस्तुतं च ऊचे उक्तवान्। कीदृशस्य कंसस्य। शवतां गतस्य मृतप्रायस्य शशिवंशादुत्थस्य[1] जातस्य अस्य निधनोद्योगं च रहस्यूचिवान्। चाहेन दम्भेन शाठ्येन च अमहितस्य अपूजितस्य निन्दितस्य रंहसा गन्तव्यं खलु इति प्रभोर्दृढामाज्ञाम् अभ्यधाच्च अभिहितवांश्च ॥

शवतामिति[2]। **शव** गतौ। अजन्तात्तल्। शशीति। **शश** [3]प्लुतगतौ। अजन्तान्मत्वर्थीय इनिः। शस्त्रेति। **शसु** हिंसायाम्। [4]'ष्ट्रन्' [उण्. ४.१६७] इत्यौणादिकः ष्ट्रन्। शस्तम्। **शन्सु** स्तुतौ। हिंसायामित्येके। कर्मणि क्तः। [5]'अनिदिताम्' [६.४.२४] इति नलोपः। चाहेन। **चह** परिकल्कने। घञ्। [6]अमहितस्य। **मह** पूजायाम्। कर्मणि क्तः। रहसि। **रह** त्यागे। रंहसा। **रहि** गतौ। द्वयोरसुन्। दृढाम्। **दृह दृहि बृह बृहि** वृद्धौ। बृहिर् [7]इत्यप्येके। बृहि शब्दे च। स च गजशब्दः। दृहेः 'दृढः स्थूलबलयोः' [७.२.२०] इति निपातितः क्तः ॥

**तच्छ्रुत्वा परिदृंहितादरमसौ नन्दो बृहद्भाजनै-[8]**
**र्यानैरप्युपबृंहितो विहितवान् प्रातः प्रयातुं मनः ।**
**गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्द्रोहिनं**
**प्रोहिष्यन् जगदर्हणीयमहिमा मोदेन निन्ये निशाम्[9] ॥९२॥**

असौ नन्दः परिदृंहितादरं परिवृद्ध आदरो यथा तथा तच्छ्रुत्वा [10]बृहद्भाजनैर्यानैरप्युपबृंहितः पूर्णः सन् प्रातः प्रयातुं मनो विहितवान्।

---

1 E उत्थितस्य for उत्थस्य.
2 K 2 om. इति.
3 K 2. 5. 6 om. प्लुत.
4 E adds सर्वधातुभ्यः before.
5 This sentence is seen only in E.
6 E अमहितः.
7 K 5. 6 E इत्येके.
8 E भोजनैः for भाजनैः.
9 After this D 1. 2 इति धातुकाव्ये प्रथमः सर्गः। M 1. 2 इति नारायणकृतौ वासुदेवविजयस्य कंसवधभागे प्रथमः सर्गः।
10 E भोजनैः for भाजनैः.

गोविन्दो जगद् दोहितुम् [1]अर्दयितुं शीलं यस्य तादृशं कंसं प्रोहिष्यन् अधिकमर्दयिष्यन् निशां मोदेन निन्ये नीतवान्। जगतामर्हणीयो महिमा यस्य तादृशो गोविन्दः ॥

परिदृंहितेति। दृंहेः कर्तरि क्तः। बृहदिति। बृहेः 'वर्तमाने पृषद्-बृहद्' [उण्.२.८१] इति बृहेरतिर्निपातितः। उपबृंहित इति। बृंहेः कर्तरि क्तः। तुहिनेति। **तुहिर् दुहिर् उहिर्** अर्दने। 'वेपितुह्योः' [उण्.२.५२] इति तुहेरिनच्। जगद्दोहिनमिति। दुहिरो णिनिः। प्रोहिष्यन्निति। उहिरो लृटः शता। अर्हणीयेति। **अर्ह** पूजायाम्। योग्यत्वेऽपि। अनीयर्। घुषादय उदात्तेतः शिषिवर्जमुदात्ताः ॥

[2]इति सव्याख्याने धातुकाव्ये प्रथमः सर्गः ।

---

1 E मर्दयितुं.

2 K 3 transposes सव्याख्याने and धातुकाव्ये. K 2. 5. 6 इति श्रीनारायणकविशिष्यकृतौ वासुदेवविजयोर्ध्वभागरूपस्य धातुकाव्यस्य व्याख्याने श्रीकृष्णार्पणाख्याने प्रथमः सर्गः। आदितोऽष्टमः। श्रीकृष्णाय नमः।

## द्वितीयः सर्गः

[1]एवमक्रूरस्य व्रजप्राप्तिरूपं पूर्वदिनवृत्तान्तमुक्त्वा द्वितीयदिनवृत्तान्तं वक्तुमारभते –

**प्रद्योतनस्योदयमाप्य गोपाः**
**श्वेतांशुकोन्मेदुरचारुवेषाः ।**
**अस्विन्नरुग्घोटकरुटयमानमार्गा**
**जवेनालुटिता निरीयुः ॥ १ ॥**

गोपाः प्रद्योतनस्योदयमाप्य जवेन अलुटिता निरीयुः। प्रद्योतनः सूर्यः। उदयमाप्य लब्ध्वा इत्युदयमात्रस्य[2] लाभत्वेनोक्त्या तेषां प्रस्थाने कौतुकातिशय उक्तः। अलुटिता अप्रतिहताः। कीदृशा इत्यत्राह – श्वेतांशुकेन उच्चैर्मेदुरः स्निग्धः पोषणशीलः चारुर्वेषो येषां ते। अस्विन्ना अमुक्ता अगता रुक् शोभा प्रीतिर्वा येषां तैः घोटकैः अश्वैः भिद्यमानमार्गाः ॥

प्रद्योतनस्येति। **द्युत** दीप्तौ। क्रूपपर्यन्ता उदात्ता अनुदात्तेतः। अस्माद्युच्। श्वेतेति। **श्विता** वर्णे। पचाद्यच्। उन्मेदुरेति। **ञिमिदा** स्नेहने। 'भञ्जभासमिदो घुरच्' [३.२.१६१]। अस्विन्नेति। **ञिष्विदा** स्नेहनमोचनयोः। मोहनयोरित्येके। स्विदेः कर्तरि क्तः। रुगिति। **रुच** दीप्तावभिप्रीत्यां[3] च। भावे सम्पदादिक्विप्। घोटकेति। **घुट** परिवर्तने। ण्वुल्। रुटयमानेति। **रुट लुट लुठ** प्रतिघाते। रुठेत्येके। रुटेः कर्मणि शानच्। [4]अलुटिताः। लुटेः कर्तरि क्तः ॥

दुष्टनिग्रहभक्तानुग्रहरूपप्रधानकार्यार्थं भगवतः प्रस्थानमाह –

**कृष्णोऽपि तापोल्लुठिताङ्गशोभा**
**आश्वास्य मारक्षुभिता महेलाः ।**

---

1 K 3 om. एवं......आरभते.

2 K 2 inserts जनन between उदय and मात्रस्य.

3 E –प्रीतौ.

4 All MSS. other than K 2 omit this word.

**अनभ्यसंतोभककंसजीव-**
**स्रंसाय[1] पापध्वदयं प्रतस्थे ॥ २ ॥**

अयं कृष्णोऽपि मारेण क्षुभिताश्चलिताः महेला आश्वास्य अनभ्यानाम् अहिंस्यानां संतोभकस्य निहन्तुः कंसस्य जीवस्रंसाय[2] प्राणं [3]श्लथीकर्तुं त्यक्तुं प्रतस्थे जगाम। पापध्वत् पापनाशकः। तापेनोल्लुठिता प्रतिहता अङ्गशोभा यासां ताः ॥

उल्लुठितेति। लुठेः कर्मणि क्तः। शोभेति। **शुभ** दीप्तौ। घञि टाप्। 'नाम्नि तु पुंस्त्वं प्रायिकम्' इति घञन्तस्यापि स्त्रीत्वम्। क्षुभितेति। **क्षुभ** संचलने। तच्च [4]प्रकृतिविपर्यासो मथनं वा। आद्येऽर्थे कर्तरि क्तः। अन्यत्र कर्मणि। अनभ्यसंतोभकेति। **णभ तुभ** हिंसायाम्। नभेः 'पोरदुपधात्' [३.१.९८] इति यत्। तुभेर्ण्वुल्[5]। [6]स्रंसायेति। **स्रन्सु ध्वन्सु भ्रन्सु** अवस्रंसने। भ्रन्शु इत्येके। ध्वन्सु गतौ च। अयं नाशने प्रसिद्धः। स्रंसेर्घञ्। पापध्वदिति। ध्वंसेः क्विपि सौ 'वसुस्रंसुध्वंसु–' [८.२.७२] इति दः ॥

**अभ्रस्तविस्रम्भजुषा बलेन**
**समं प्रवृत्तो भुवनाभिवृद्ध्यै ।**
**अशर्धनैर्गोपकुलैः सहासौ**
**ययौ कृपास्यन्दसुक्लृप्तमोदैः ॥ ३ ॥**

असौ गोपकुलैः [7]सह ययौ। अभ्रस्तविस्रम्भजुषा [8]बलेन समं भुवनाभिवृद्ध्यै प्रवृत्तः। अभ्रस्तं अशिथिलं दृढं श्रीकृष्णे विस्रम्भं विश्वासं जुषते सेवते इति तथा तेन बलेन। कीदृशैर्गोपकुलैः। अशर्धनैः कुत्सितशब्दमकुर्वाणैः। कृपास्यन्देन [9]कृपामृतप्रवाहेण सम्यक्क्लृप्तो मोदो येषां तैः ॥

---

1 E संस्राय.
2 E संस्राय.
3 E शिथिलीकर्तुं.
4 E पूर्वप्रकृति–.
5 K 2. 3. 5. 6 घञ् for ण्वुल्.
6 E संस्रायेति.
7 K 3 समं for सह.
8 K 2 om. बलेन......प्रवृत्तः.
9 K 2 om. this word.

अश्रस्तेति। श्रंसेः कर्तरि क्तः। [1]विस्रम्भेति। स्रम्भु विश्वासे। घञ्। प्रवृत्त इति। वृतु वर्तने। कर्तरि क्तः। अभिवृद्धयै। वृधु वृद्धौ। क्तिन्। अशर्धनैः। शृधु शब्दकुत्सायाम्। युच्। स्यन्देति। स्यन्दू प्रस्रवणे। घञ्। सुक्लृप्तेति। कृपू सामर्थ्ये। सामर्थ्यं शक्तिर्योग्यता वा। अन्तर्गतण्यर्थात् कर्मणि क्तः। [2]'कृपो रो लः' [८.२.१८] इति [3]लत्वम्। द्युतादय उदात्ता अनुदात्तेतः। वृत्। [4]द्युतादिर्वृत्त इत्यर्थः। वृदिति वृतेर्भूते क्विप्॥

अतिप्रियस्य भगवतः प्रस्थाने गोपीनां वृत्तमाह —

**गोपीघटाः प्रव्यथितास्तदानीं**
**पृथूपतापप्रसमानचिन्ताः ।**
**मृदुस्वभावाः स्खदिताः स्मरास्त्रैः**
**प्रक्षञ्जिते प्राणसमे विषेदुः ॥ ४ ॥**

गोपीनां घटाः समूहाः तदानीं प्राणसमे प्रियतमे [5]श्रीकृष्णे प्रक्षञ्जिते गते विषेदुः। कीदृश्यः[6]। प्रव्यथिता भीताः, दुःखिता वा। [7]पृथुना उपतापेन पीडया प्रसमाना[8] वर्धमाना चिन्ता यासां ताः। [मृदुस्वभावाः] [9]अतीक्ष्णस्वभावाः। स्मरास्त्रैः स्खदिता विदारिताः॥

घटा इति। घट चेष्टायाम्। कचित्संगमादौ। एतदादयः फणान्ताः 'घटादयो मितः' इति मितः। आदितस्त्वरान्तानां तु 'घटादयः षितः' इति षित्वम्, अनुदात्तेत्त्वं च। घटेः षित्वात् 'षिद्भिदादिभ्यः' [३.३.१०४] इति संगच्छन्तेऽत्र समूहिन इत्यधिकरणे अङ्। [10]प्रव्यथिताः। व्यथ भयचलनयोः। दुःखचलनयोरित्येके। कर्तरि क्तः। पृथु इति। प्रथ प्रख्याने।

---

1 K 5 om. विस्रम्भ......क्तः.
2 K 2 om. this sentence.
3 K 5. 6 E कुत्वम्.
4 E द्युतादयो वृत्ता इत्यर्थः.
5 K 2 om. this word.
6 K 2 adds घटास्तत्राह.
7 K 2 पृथुपीडया for पृथु...पीडया.
8 K 2 inserts विस्तीर्यमाणा between –माना and वर्ध–.
9 K 2. 5. 6 om. अती......भावाः.
10 E प्रव्यथितेति.

[1]विस्तारेऽप्यस्ति। 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' [उण्.१.२८] इत्युप्रत्ययः। प्रसमानेति। प्रस विस्तारे। शानच्। मृदु इति। म्रद मर्दने। म्रदेः प्राग्वदुप्रत्ययः[2]। स्खदिताः। स्खद स्खदने। विदारणं तत्। [3]ण्यन्तात् कर्मणि क्तः। मित्त्वाद्ध्रस्वः। प्रक्षञ्जितेति। क्षजि गतिदानयोः। क्षज इत्येके। क्षञ्जेः कर्तरि क्तः॥

**दक्षापरेणास्तकृपेण तासा-**
**मकान्दि चेतः कदनैः स्मरेण।**
**शरीरमक्रान्दि वचोऽपि वेगा-**
**दक्लान्दि चक्रे मरणत्वरापि ॥ ५ ॥**

स्मरेण तासां चेतः कदनैर्विक्लवीकरणैः। पीडाभिरिति यावत्। अकान्दि विक्लवीकृतम्। शरीरमक्रान्दि[4]। वचोऽप्यक्लान्दि[5]। [6]उभयत्रापि पूर्ववदर्थः। मरणत्वरापि चक्रे। कीदृशेन। दक्षायां हिंसायां परेण[7] [8]त्यक्तकृपेण॥

दक्षेति। दक्ष गतिहिंसनयोः।

'घटादिषु त्विहापूर्वपठिताः सर्वदा मितः।
[9]बहिःष्ठस्येह पाठे तु मित्त्वमुक्तेऽर्थ एव हि॥'

इत्युक्तेः[10] वृद्ध्याद्यर्थतया[11] प्राक्पठितस्य दक्षेरनयोरर्थयोर्मित्त्वम्। षित्त्वादङ्। कृपेति। क्रप कृपायां गतौ च। 'क्रपेः संप्रसारणं च'[12] इति भिदादिपाठात् संप्रसारणमङ् च। अकान्दि। अक्रान्दि। अक्लान्दि। कदि क्रदि क्लदि

1 K 2. 5. 6 om. this sentence.
2 K 2. 5. 6 om. प्रत्ययः.
3 K 2 adds अस्मात् before.
4 K 2 adds व्याकुलीकृतम्.
5 K 2 वचोऽपि वेगादक्लान्दि विकलीकृतम् for वचो......क्लान्दि.
6 K 2 om. उभय......कीदृशेन.
7 K 2 adds स्मरेण.
8 K 2 omits this word.
9 E बहिःस्थस्येह.
10 *PS* Dhātukhaṇḍa under the dhātu घट.
11 K 3. 4 E वृद्धचर्थतया.
12 Gaṇasūtra under भिदादि.

वैक्लव्ये। वैकल्य इत्येके। तयोऽप्यनिदित इत्यन्ये। इदितां कन्द्यादीनां णिजन्तात् कर्मणि चिण्। कदनैः। अनिदितः कदेर्ल्युट्। त्वरेति। **ञित्वरा** सम्भ्रमे। षित्त्वादङ् ॥

गोपीनां वचोवैक्लव्यादुक्तिं प्रपञ्चयति –

**ताः संज्वरन्तीर्गलदश्रुधारा**
**विमोहशक्त्या हिडयन् वियोगः ।**
**मिथो निजार्तिं वटयांचकार**
**हरेश्च चेष्टा भटयांचकार ॥ ६ ॥**

वियोगः ताः विमोहशक्त्या हिडयन् बद्धाः कुर्वन् मिथो निजार्तिं वटयांचकार। हरेश्चेष्टाश्च भटयांचकार। उभयत्र भाषयांचकारेत्यर्थः। संज्वरन्तीः पीड्यमानाः [1]गलदश्रुप्रवाहाः ॥

संज्वरन्तीरिति। **ज्वर** रोगे। फणान्ता उदात्ता उदात्तेतः। ज्वरेः शतरि ङीप्। गलदिति। **गड** सेचने। तच्च[2] जलादेः पतनमात्रम्। गडेः शता। हिडयन्। **हेड** वेष्टने। णौ मित्त्वाद्ध्रस्वः। 'एच इक्' [१.१.४८]। [3]शता। वटयांचकार। भटयांचकार इति। **वट भट** परिभाषणे। श्वट इत्येके। आद्ययोर्णौ लिट् ॥

**[4]वियोगवह्निं नटयन् बतान्त-**
**र्धृतिं च नः प्रस्तकयन् गतोऽसौ ।**
**कृष्णः पुरस्त्रीश्चकयेदिदानीं**
**नर्माणि चोक्त्वा कखयेद्रगाम्नः ॥ ७ ॥**

नः अस्माकं अन्तः मनसि वियोगवह्निं नटयन् चलयन् दीपयन् धृतिं प्रस्तकयन् प्रतिहतां कुर्वंश्च गतोऽसौ कृष्ण इदानीं पुरस्त्रीः चकयेत्

---

1 K 2 om. this word.
2 K 1. 2 add अत्र.
3 K 2 adds तस्मात् before.
4 D 1 omits this verse.

तर्पयेत् नर्माण्युक्त्वा कखयेत् हासयेच्च। द्वयोः संभावने लिङ्। बतेति खेदे। इति वयं रगामः शङ्कामहे ॥

नटयन्निति[1]। णट नृत्तौ। पूर्वं नटव्यापारेऽयं धातुरुक्तः। अत्र तु [2]नर्तकव्यापारश्चलनादिश्च नृत्तिः। तत्र मित्त्वम्। णट गतावित्येके, नताविन्त्यन्ये। प्रस्तकयन्। ष्टक [3]प्रतीघाते। द्वयोर्णौ शता। चकयेत्। चक तृप्तौ। कखयेत्। कखे हसने। [4]द्वयोर्णौ [5]लिङ्। रगामः। रगे शङ्कायाम्। लट् ॥

श्रीकृष्णविरहदुःखं छादयितुमशक्ता काचिदाह –

**लग्नं हृदन्ते ह्नगये कथं वा**
**रागं कथं नु ह्लगयामि तापम्।**
**असग्यमास्रं स्थगये कथं वा**
**कगामि किं वा हरयेऽकिताय ॥ ८ ॥**

अहं हृदन्ते लग्नं सक्तं रागं कथं वा ह्नगये छादयामि। तापं च कथं नु ह्लगयामि छादयामि। असग्यं छादयितुमशक्यमास्रमश्रुजलं[6] कथं वा स्थगये छादयामि। रागतापयोरन्तःस्थत्वेनादृश्यत्वेऽपि तद्धेतुरास्रोद्गमो दुर्वार एवेति भावः। अकिताय [7]कुटिलं गताय व्याजेन प्रस्थिताय हरये हरिं प्राप्तुं किं वा कगामि करोमि। न किंचिदपि कर्तुं शक्यमित्यर्थः ॥

लग्नमिति। लगे सङ्गे। 'क्षुब्धस्वान्तध्वान्त[8]–' [७.२.१८] इत्यादिना क्तान्तो निपातितः। ह्नगये। ह्लगयामि। ह्नगे ह्लगे षगे ष्टगे संवरणे। तच्चात्र तिरोधानमेव। स्थगेर्ण्यन्तस्य तिरोधापनार्थदर्शनात्। आद्ययोर्णौ लट्। असग्यम्। सगेर्णौ ण्यत्। स्थगये। स्थगेर्णौ लट्। कगामि।

1 K 2 om. इति.
2 E नर्तन–.
3 E प्रतिघाते.
4 K 5 om. this sentence.
5 K 1. 3. 4 om. णौ.
6 K 2. 5. 6 E अश्रुजालं.
7 K 5. 6 कुटिलगताय.
8 K 1-3 om. ध्वान्त.

**कगे** नोच्यते। क्रियासामान्यार्थत्वादनेकार्थत्वाच्च अस्यायमर्थः इति नोच्यते। नोच्यत इत्यवचनमर्थ इत्यन्ये। अस्माल्लट्। अकिताय। **अक अग** कुटिलायां गतौ। अकेः कर्तरि क्तः ॥

पीडातिशयादक्रूरं शपन्ति –

**अगन्मनीषः [1]कणयन्मुकुन्द-**
**मस्मान् वियोगं रणयन् स दूतः।**
**चणन् विषादं विशणन् [2]विचिन्तां**
**श्रणन् विमोहं [3]श्नथितोऽस्तु सद्यः ॥ ९ ॥**

मुकुन्दं कणयन् गमयन्। हेतौ शता। तस्माद्धेतोः। अस्मान् वियोगं रणयन् प्रापयन्। तत एव विषादं चणन्, विचिन्तां विशणन्, विमोहं श्रणन्। लिषु प्रयच्छन्नित्यर्थः। अस्मभ्यमित्यर्थात्। स दूतः सद्यः श्नथितो हिंसितोऽस्तु। कीदृशः। अगन्ती कुटिलीभवन्ती मनीषा यस्य सः ॥

अगदिति। अगेः शता। कणयन् रणयन्निति। **कण रण** गतौ। द्वयोर्णौ शता। चणन् विशणन् श्रणन्निति। **चण शण श्रण** दाने च। एषां शता। [4]श्नथितः। [5]**श्नथ** [6]**क्नथ क्रथ क्लथ** हिंसार्थाः। [7]श्नथेः कर्मणि क्तः ॥

सर्वरक्षिणो भगवतः [8]स्वरक्षाभावदोषमाशङ्क्य परिहरन्ति –

**[9]क्नथ्यात्मनां क्राथयताच्युतेन**
**किं नाङ्गजो नः क्लथयन्नचानि।**
**वनाम किं प्रज्वलितो हरेण**
**सोऽद्यापि यद्विह्वलयत्यनङ्गः ॥ १० ॥**

---

1 D 2 कगयन्.
2 K 2 M 1 विचिन्ताः.
3 E श्रथितो.
4 E श्रथितः.
5 E श्रथ.
6 E श्लथ.
7 E श्रथेः.
8 K 1. 3. 4 E स्वरक्षादोषं.
9 This reading in the verse as well as in the commentary is emended into श्लथ्यात्मनां in E.

क्रथ्यात्मनां हिंस्यस्वरूपान् क्राथयता [1]हिंसता। 'जासिनिप्रहण–' [२.३.५६] इति कर्मणि षष्ठी। अच्युतेन नोऽस्मान् क्रथयन् हिंसन् अङ्गजः किं न अचानि कस्मान्न हिंसितः। हरेण प्रज्वलितः सोऽनङ्गोऽद्यापि विह्वलयति यत् यस्मात् तस्मात् किं वनाम करवाम। न किंचित् ॥

क्रथ्येति। क्रथेर्ण्यत्। क्राथयतेति। क्राथेर्णिजन्ताच्छता। 'जासिनिप्रहणनाटक्राथ–' [२.३.५६] इति निपातनाद्दीर्घः। क्रथयन्। क्रथेर्णौ शता। श्नथादीनां णिजन्तानामपि हिंसामात्रमर्थः। जास्यादिसूत्रे 'हिंसायाम्' इत्युक्तेः। 'हन्त्यर्थाश्च' इति चुरादिपाठाद्वा। अचानि[2]। चन च। हिंसार्थ इति शेषः। अस्माण्णौ चिण्। वनाम[3]। **वनु** च नोच्यते। कगिवदयमपि क्रियासामान्यार्थ इत्यर्थः। अस्माल्लोट्[4]। प्रज्वलितः। **ज्वल** दीप्तौ। णौ कर्मणि क्तः। विह्वलयति। **ह्वल ह्मल** चलने। ह्वलेर्णौ लट् ॥

भगवतो बाल्यकृतं दुर्ललितत्वमप्यतिदुर्विस्मरमित्याह –

**प्रह्मल्यचित्तां स्मरयत्यसौ मां**
**नन्दात्मजः संदरकः खलानाम् ।**
**अनारि येन श्रपितं पयोऽपि**
**बालैर्मुहुः संज्ञपितासुरेण ॥ ११ ॥**

असौ नन्दात्मजो मां स्मरयति सोत्कण्ठं ध्यापयति। खलानां संदरको भीषयिता। प्रह्मल्यं चलयितुं [5]शक्यं चित्तं यस्यास्ताम्। येन श्रपितं पक्वं पयोऽपि बालैः [6]प्रयोज्यकर्तृभिरनारि नायितम्। मुहुरिति काकाक्षिवदुभयत्रान्वेति। मुहुः संज्ञपिता मारिता असुरा येन तेन ॥

---

1 E om. this word.
2 K 2 adds इति.
3 K 2 adds इति.
4 K 2. 5. 6 लट् for लोट्.
5 K 1. 3. 4 E अशक्यं. The editor of E takes अशक्यं to be the correct reading and accordingly suggests the emendation of प्रह्मल्य into अह्मल्य in both the text and the commentary. According to the Malayalam commentary also the meaning is चलयितुं शक्यम्.
6 E प्रयोज्यैः कर्तृभिः.

प्रह्मल्येति। ह्मलेर्णौ ण्यत्। स्मरयति। **स्मृ** आध्याने। सोत्कण्ठ-स्मरणं तत्। णौ लट्। संदरकः। **दॄ** भये। णौ ण्वुल्। अनारि। **नॄ** नये। णौ चिण्। श्रपितम्। **श्रा** पाके। पाको विक्लित्तिः। श्रायतिश्रात्योरस्मिन्नर्थे मित्त्वम्। णौ कर्मणि क्तः। संज्ञपितेति। मारणतोषणनिशामनेषु **ज्ञा**। निशामनं प्रदर्शना। [1]निशातनेष्वित्येके। मारणार्थे कर्मणि क्तः ॥

तापशान्तावन्यथोपायं संभावयन्ति –

**तमेव किं विज्ञपयेम मारं**
**येनाच्युतं प्रज्ञपयेन्न बाणान् ।**
**करे सरोजं चलयन्नचाल्यः**
**स किं मुरारिश्छदयेत्पुनर्नः ॥ १२ ॥**

वयं तं मारमेव विज्ञपयेम तोषयेम किम्। येन तोषणेनासावच्युतं प्रज्ञपयेत् प्रदर्शयेत्। [2]बाणान् न प्रज्ञपयेत् निशातयेत्। स मुरारिर्लील्या करे सरोजं [3]चलयन् नः [4]छदयेत् किम्। [5]बलनं प्राणनं वा कुर्यात्। [6]अचाल्यः भावादन्यथा कर्तुं अन्यत्र हर्तुं नेतुं स्वचिन्तितं क्षेप्तुं निरसितुं च वा न [7]शक्यः ॥

विज्ञपयेमेति। तोषणे णिचि लिङ्। प्रज्ञपयेदिति निशामननिशातनयोः। चलयन्निति। कम्पने **चलिः**। णौ शता। अचाल्यः। कम्पनादन्यत्र मित्त्वाभावे णिजन्ताण्ण्यत्। अन्यथाकरणं हरणं क्षेपो वा तत्रार्थाः। छदयेत्। **छदिर्** ऊर्जने। बलनं प्राणनं वा तत्। छदेर्णौ लिङ् ॥

भगवतो दर्शनमेव प्रार्थयन्ते –

**यद्वर्णने को लडयेन्न जिह्वां**
**भक्तांश्च दुष्टान् मदयत्यलं यः ।**

1 E निशातेषु for निशातनेषु.
2 K 3. 4 बाणं.
3 K 6 कम्पयन् पुनः पुनः for चलयन् नः.
4 K 5 om. छदयेत् किं.
5 K 3. 4 E om. this word.
6 E अचाल्याः.
7 E शक्याः.

**दृश्येत वेणुं ध्वनयन् कदा वा**
**स नन्दसूनुः स्वनयन् कलापम् ॥ १३ ॥**

यद्वर्णने को जिह्वां न लडयेत् क्षोभयेत्। यो भक्तान् दुष्टांश्च अलं मदयति अत्यर्थं हर्षयति दीनयति च। स नन्दसूनुः वेणुं ध्वनयन् शब्दयन् कलापं स्वनयन् अवतंसीकुर्वन् कदा वा अस्माभिर्दृश्येत ॥

लडयेदिति। जिह्वोन्मथने **लडिः**। उन्मथनं क्षोभणम्। तच्च जिह्वायाः। [1]जिह्वया क्षोभणं वा। [2]तत्र जिह्वायाः क्षोभणेऽर्थे णिचि लिङ्। मदयति। **मदी** हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। लट्। ध्वनयन्। **ध्वन** शब्दे। णौ शता। स्वनयन्। **स्वन** अवतंसने च। चाच्छब्दे। णौ शता।

दर्शनप्रकार एव प्रार्थ्यते –

**दलं दलं धैर्यभरं कटाक्षान्**
**वलं वलं प्रस्खलयन् मनो नः ।**
**त्रपं त्रपं नर्मगिरा विषादं**
**क्षपं क्षपं किं जनयेत् स मोदम् ॥ १४ ॥**

मनः प्रस्खलयन् चलयन् स श्रीकृष्णः कटाक्षान् वलं वलं पुनः पुनः संचारयन् धैर्यस्य भरम् अतिशयं दलं दलं पुनः पुनर्विदारयन् नर्मगिरा त्रपं त्रपं पुनः पुनर्लज्जयन् विषादं क्षपं क्षपं पुनः पुनर्विनाशयन् नो मोदं जनयेत् किम् ॥

दलंदलमित्यादिचतुर्षु **'दलि–वलि–स्खलि–त्रपि–क्षपयश्च'** इति भोजोक्त्या[3] मित्त्वे ण्यन्तादाभीक्ष्ण्ये णमुल्। 'नित्यवीप्सयोः' [८.१.४] इति द्विरुक्तिः। 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' [६.४.९३] इति दीर्घाभावे रूपम्। प्रस्खलयन्। स्खलेर्णौ शता। जनयेत्। घटादयो मितः। **'जनी-जृष्-क्नसु-रञ्जोऽमन्ताश्च'** इति णौ मित्त्वे जनेर्लिङ् ॥

---

1 K 1. 3. 4 E जिह्वायाः.
2 K 1. 3. 4 om. तत्र.
3 vide *SKĀ*. 1. 1. 192. दलिवलिस्खलिरणिध्वनिक्षपित्रपयश्च.

श्रीकृष्णेन पूर्वं सुखितत्वादिदानीमस्माकं[1] पीडाधिक्यमित्याहुः —

**वाग्भिर्विशङ्कां विजरय्य मारं**
**परिक्नसय्य स्नसितत्रपेण ।**
**अराञ्जि येनाभिरमय्य गूढं**
**वधूजनः स ज्वलयत्यलं नः ॥ १५ ॥**

स्नसितत्रपेण। स्नसिता निरस्ता त्रपा येन तादृशेन। येन वाग्भिर्विशङ्कां विजरय्य नाशयित्वा मारं परिक्नसय्य दीपयित्वा वर्धयित्वा[2] च गूढमभिरमय्य वधूजनः अराञ्जि रञ्जितः स [3]श्रीकृष्णोऽस्मान् अलं ज्वलयति सन्तापयति ॥

विजरय्य जॄषो णिजन्ताल्ल्यप्। 'ल्यपि लघुपूर्वात्' [६.४.५६] इत्ययादेशः। परिक्नसय्य। क्नसेः प्राग्वल्ल्यप्। स्नसितेति। 'जनीजॄष्क्नसु' इति पाठे णिजन्तात् कर्मणि क्तः। अराञ्जि। रञ्जेर्णौ चिणि 'चिण्णमुलोः—' [६.४.९३] इति दीर्घः। अभिरमय्य। अमन्ताण्णिचि प्राग्वत् ल्यप्। ज्वलयति। **'ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा'** इति मित्वविकल्पान्मित्त्वपक्षे णिचि लट् ॥

**हा ज्वालयन्ति ह्वलयन्ति चित्त-**
**मह्वाल्यवैरिह्मलकस्य लीलाः ।**
**अह्मालितात्मा नमयन्ननाम्यान्**
**स ग्लापयत्यग्लपकः कुतो नः ॥ १६ ॥**

अह्वाल्यवैरिह्मलकस्य अक्षोभणीयशत्रुक्षोभकस्य तस्य लीलाः चित्तं ज्वालयन्ति तापयन्ति, ह्वलयन्ति क्षोभयन्ति च। हा कष्टम् अह्मालितात्मा अक्षोभितमनाः। अनाम्यान् प्रह्वीकर्तुमशक्यान् नमयन्। अग्लपकोऽपीडकः स कुतो हेतोर्नो ग्लापयति [4]पीडयति ॥

---

1 K 1. 2 E om. अस्माकं.
2 K 3-5 E om. च.
3 K 2. 5. 6 om. this word.
4 K 5. 6 om. this word.

ज्वालयन्तीति। ज्वलेरमित्त्वे लट्। ह्वलयन्ति। ह्वलेर्मित्त्वे लट्। अह्वाल्येति। ह्वलेरमित्त्वे ण्यत्। ह्मलकस्य। ह्मलेर्णौ [1]मित्त्वे ण्वुल्। अह्मालितेति। अमित्त्वे कर्मणि क्तः। नमयन् अनाम्यान्। नमेः शतृण्यतौ। ग्लापयति अग्लपकः। **'ग्ला-स्ना-वनु-वमां** च' इति मित्त्वविकल्पे ग्लाधातोर्लट् ण्वुल् च ॥

भगवतो जलक्रीडादिषु स्वाभिमतसिद्धिं बकवधाद्यद्भुतकर्म चानुस्मृत्य तस्मिन्नेव मनो लीयत इत्याहुः –

**यः स्नाप्यमानः स्नपयंस्तथास्मान्**
**कृत्स्नं च वान्यं वनयन्नरंस्त ।**
**अवामयत् [2]स्वं वमितासृजा यो**
**बकेन तं कामयते मनो नः[3] ॥ १७ ॥**

योऽस्माभिः स्नाप्यमानः सिच्यमानोऽस्मान् स्नपयन् प्रतिषिञ्चन् कृत्स्नं वान्यमस्माभिः कारयितव्यं बहु कर्म वनयन् कारयंश्च अरंस्त क्रीडितवान्। यो वमितासृजा छर्दितरक्तेन बकेन [4]स्वं अवामयत् छर्दयामास तं नो मनः कामयते ॥

स्नाप्यमानः स्नपयन्निति। स्नाधातोर्णौ शानच्छता च। वान्यं वनयन्निति। वनेर्ण्यच्छता च। अवामयत् वमितेति। वमेर्णौ लङ् कर्मणि क्तश्च। कामयते इति। 'न कम्यमिचमाम्' इत्यमित्त्वे णिङि वृद्धिः ॥

दर्शनमेव प्रार्थयमाना [5]विरमति –

**तमामयन्तं द्विषतस्तृणं गाः**
**प्रचामयन्तं क्व निशामयेयम् ।**
**निशम्यया मञ्जुगिरा कदा नः**
**स यामयेद्वा यमनादिकार्ये ॥ १८ ॥**

1 K 1. 2. 4. 5 om. this word.
2 E संवमिता–.
3 M 1. 2 मे for नः.
4 E om. this word.
5 E विरमन्ति.

तं क्व काले देशे वा निशामयेयं पश्येयम्। कीदृशं तम्। द्विषत आमयन्तं पीडयन्तम्। गास्तृणं प्रचामयन्तमादयन्तम्। स निशम्यया श्राव्यया मञ्जुगिरा कदा नो यमनादिकार्ये परिवेषणादिकर्मणि यामयेत् व्यापारयेत् ॥

आमयन्तमिति। अमेर्णिचि शतरि मित्त्वाभावे दीर्घः। प्रचामयन्तमिति। चमेः प्राग्वद्। निशामयेयमिति। [1]'शमिर्दर्शने' इत्यमित्त्वे णौ लिङ्। निशम्यया। [2]अदर्शनार्थत्वेन मित्त्वे णिचि ण्यत्। यामयेत्। 'यमोऽपरिवेषणे' इत्यमित्त्वे णौ लिङ्। व्यापारणात्रार्थः। यमनेति। परिवेषणार्थे णौ मित्त्वे ल्युट् ॥

उक्तं [3]गोपीविलापमुपसंहरति –

**इत्याद्यवस्खादितमानसास्ता**
**बालाः परिस्खादितधैर्यबन्धाः।**
**दुष्टानपस्खादयितुं प्रयाते**
**कृष्णे विलेपुः फणिता विमोहम् ॥ १९ ॥**

कृष्णे दुष्टान् अपस्खादयितुं [4]विदारयितुं प्रयाते सति ता बाला विमोहं फणिताः प्राप्ता इत्यादि विलेपुः। कीदृश्यः। अवस्खादितं विदारितं मानसं यासां ताः। परिस्खादितो [5]नाशितो धैर्यबन्धो यासां ताः ॥

अवस्खादितेति। **'स्खदिर्** अवपरिभ्यां च' इति मित्त्वनिषेधाण्णिचि[6] दीर्घे कर्मणि क्तः। परिस्खादितेत्यत्रापि[7] तद्वत्। अपस्खादयितुमिति। 'अपावपरिभ्यश्चेत्येके' इत्यपात् परस्य स्खदेरमित्त्वे णिचि तुमुन्। फणिता इति। **फण** गतौ। कर्तरि क्तः। वृत्। [8]घटादिर्वृत्तः। ज्वरादय उदात्ता उदात्तेतः ॥

---

1 E शमो दर्शने.
2 K 3 अदर्शनार्थत्वे णिचि.
3 E विलास for विलाप.
4 K 5. 6 om. this word.
5 K 3 om. this word.
6 K 3 निषेधे for निषेधात्.
7 K 1. 3. 4 E om. अत्रापि.
8 K 2. 5. 6 om. this sentence.

प्रस्थितस्य भगवतः श्रीकृष्णस्यावस्थामाह—

**कृष्णोऽपि रेजे पथि गोपबालै-**
**र्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः ।**
**विभ्लाशितेऽक्रूररथे सरामः**
**स्यमत्पयोदस्वनभाजि तिष्ठन् ॥ २० ॥**

कृष्णोऽप्यक्रूररथे सरामस्तिष्ठन् पथि रेजे । भ्राजिष्णुभिः [1]शोभनशीलैः गोपबालैः भ्राशितपार्श्वदेशः शोभितपार्श्वभागः । स्यमत्पयोदस्य शब्दायमानमेघस्य स्वनमिव स्वनं भजत्याश्रयति यस्तस्मिन् रथे ॥

रेजे इति । **राजृ** दीप्तौ । उदात्तः स्वरितेत् । अस्माल्लिटि 'फणां च सप्तानाम्' [६·४·१२५] इत्येत्त्वाभ्यासलोपविकल्पः । [2]भ्राजिष्णुभिः । **टुभ्राजृ टुभ्राशृ टुभ्लाशृ** दीप्तौ । उदात्ता अनुदात्तेतः । भ्राजेः 'अलंकृञ्—' [३·२·१३६] इत्यादिना ताच्छील्ये इष्णुच् । भ्राशित भ्लाशितेति । द्वयोः कर्तरि क्तः । स्यमदिति । [3]**स्यम स्वन ध्वन** शब्दे । क्षरान्ता उदात्ता [4]उदात्तेतः । स्यमेः शता । स्वनेति । 'स्वनहसोर्वा' [३·३·६२] इत्यप् । स्वनान्ताः सप्त फणादयः ॥

**गोपैर्ध्वनद्भिः समितैर्वृतोऽपि**
**देवो न तस्ताम विचिन्त्य गोपीः ।**
**ज्वालेन तापेन चला जडाङ्गी-**
**रटालशोकद्वलितप्रलापाः[5] ॥ २१ ॥**

---

1 E शोभमानैः for शोभनशीलैः.
2 All MSS. other than K2 omit this word.
3 E स्यमु.
4 E अनुदात्तेतः.
5 E प्रतापाः.

ध्वनद्भिः शब्दायमानैः समितैः अविक्लवीभवद्भिः गोपैः वृतोऽपि देवो गोपीर्विचिन्त्य न तस्ताम अविक्लवीबभूव, पीडित एवासीत् । ज्वालेन दीप्तेन तापेन [1]सन्तापेन चलाः कम्पिताः । जडानि असमर्थानि अङ्गानि यासां ताः । अटालेन पूर्णेन शोकेन ट्वलिता विकलीभूताः प्रलापाः यासां ताः ॥

ध्वनद्भिरिति । ध्वनेः शता । समितैः । **षम ष्टम** अवैक्लव्ये । समेः कर्तरि क्तः । तस्ताम । स्तमेर्लिट् । ज्वालेन । **ज्वल** दीप्तौ । 'ज्वलितिकसन्तेभ्यः' [ ३·१·१४० ] इति णः । चलाः । **चल** कम्पने । पचाद्यच् । जडेति । **जल** घान्ये । घान्यमतैक्ष्ण्यम् । अच् । लडयोरभेदाड्डः । अटालेति । **टल ट्वल** वैकल्ये । टलेर्णः । [2]ट्वलितेति । ट्वलेः कर्तरि क्तः ॥

**स्थलीर्हली सन्नलिनीश्च तीर्त्वा**
**पलन् हरिश्चात्मबलप्रपोलः ।**
**[3]कुलीरशालह्वलिताम्बुपूर-**
**ह्मलत्पतङ्गां यमुनामवाप्तौ ॥ २२ ॥**

पलन् हरिः हली च उभौ स्थलीः सन्नलिनीश्च तीर्त्वा यमुनामवाप्तौ । पलन् गच्छन् । स्थलीरकृत्रिमदेशान् । [4]अवाप्तौ प्राप्तौ । [5]आत्मबलप्रपोलः । आत्मबलेन स्वबलेन प्रपोलो महान् । कुलीराणां [6]कर्कटकानां शालेन गमनेन ह्वलिते चलिते अम्बुपूरे जलपूरे ह्मलन्तो गच्छन्तः पतङ्गाः पक्षिणो यस्यां तां यमुनाम् ॥

---

1 K2.5.6 om. this word.
2 K1.3.4 E om. this word.
3 M1.2 शार for शाल,
4 K2.5 om. अवाप्तौ प्राप्तौ.
5 K1.3.4 E om. this word.
6 K2.5.6 कर्कटानां.

स्थलीरिति[1]। ष्ठल स्थाने। अस्मादचि स्थलम्। [2]तस्मात् 'जानपदकुण्डगोणस्थल'—[४.१.४२] इत्यादिना अकृत्रिमार्थे ङीषि स्थली। हलीति। हल विलेखने। कर्षणं तत्। अचि हलम्। तस्मात् अत [3]इनिः[4]। नलिनीरिति। णल गन्धे। वन्धन इत्येके। अस्मात् 'बहुलमन्यत्रापि' [उण्. २.४८] इति कठिनवदिनचि नलिनम्, तस्मादिनौ ङीप्[5]। पलन्। पल गतौ। शता। बलमिति। बल प्राणने धान्यावरोधने च। धान्यावरोधनं कुसूलादिव्यापारः। अस्मादचि बलम्। प्रपोल इति। पुल महत्त्वे। ज्वलादिणः। कुलीरेति। कुल संस्त्याने बन्धुषु च। सन्ताने इत्येके। संस्त्यानं सङ्घातः। अस्मात् सङ्घातीभवतीति 'कुलेश्च भोजः।'[6] इतीरक्। शालेति। शल [7]ह्वल ह्मल पत्लृ गतौ। शलेर्घञ्। ह्वलितेति। ह्वलेः कर्तरि क्तः। ह्मलदिति। ह्मलेः शता। पतङ्गेति। 'पतेरङ्गच् पक्षिणि' [उण्.१.१११] इत्यङ्गच्॥

यमुनां वर्णयति षड्भिः —

**अह्रोलसत्त्वा रविरश्मिजाले-**
**प्यविक्कथन्ती तटपाथिपाथाः।**

---

1 K2.5.6 om. इति.
2 K1.3.4 E स्थलशब्दात्.
3 Vide Sūtra अत इनिठनौ—5.2.115.
4 E adds इतीनिः.
5 According to this derivation the form would be नलिनिनी (नल + इनच् → नलिन + इनिः → नलिनिन् + ङीप् → नलिनिनी) and not नलिनी. It is better to derive it as नल+अच्→नल (Cf. Viśvakośa नलिनेऽपि नलं मतम्) + इनिः → नलिन् + ङीप् → नलिनी.
6 Vide *PS* under Uṇādi 4.32. The Bhojasūtra is वशिघसिकुरिकुलिभ्यः कित् *SKĀ* 2.3.49.
7 E omits ह्वल ह्मल (but restored by the Editor) and adds हुल.

तापं मथन्तीः[1] कणिका वमन्ती
[2]भ्रम्यत्तरङ्गा क्षरति स्फुटं या ॥ २३ ॥

या [3]भ्रम्यत्तरङ्गा स्फुटं क्षरति । [4]भ्रम्यन्तः चलन्तः तरङ्गा यस्यां सा [5]क्षरति प्रवहति । अह्वोलसत्त्वा अह्वोलानि अहिंसकानि सत्त्वानि जलजन्तवो यस्यां सा । रविरश्मिजालेऽपि अविक्कथन्ती [6]अपच्यमाना अनुष्णीभवन्तीत्यर्थः । तटपाथिपाथः तटं पथितुं गन्तुं शीलं यस्य [7]तादृशं पाथो यस्यां[8] सा । तापं मथन्तीः[9] क्षोभयन्तीः[10] त्यजन्तीः[11] कणिकाः बिन्दून् वमन्ती उद्गिरन्ती ॥

अह्वोलेति । **हुल** हिंसासंवरणगतिषु इत्येके । अस्माण्णः । अविक्वथन्ती । **क्कथे** निष्पाके । शतरि ङीप् । तटपाथिपाथाः[12] । **पथे** गतौ । णिनिः । असुन्नपि[14] । मथन्तीः[15] । **मथे** विलोटने । शतरि ङीप् ।

---

1 E मथन्ती.

2-4 E भ्राम्यत्.

5 K2.5.6 om. क्षर····हति.

6 K3 inserts क्षरति प्रवहति between क्वथन्ती and अपच्य.

7 K2 तत्पाथो for तादृशं पाथो.

8 E यस्याः.

9 E मथन्ती.

10 E क्षोभयन्ती.

11 E त्यजन्ती.

12 E om. पाथाः.

13 The commentator takes the word पाथस् also as an illustration of the root पथे and derives it from this root by applying the उणादिप्रत्यय असुन्. But then the form can be only पथस्. The Uṇādi sūtra उदके थुट् च (4.211) shows that it is derived from the root पा पाने by असुन् and थुट्. *SKĀ.*, *PS*, *Sid. Kau* etc. follow only this derivation. It is, therefore, likely that the author does not mean पाथस् also as an illustration.

14 E मथन्ती.

वमन्ती । **टुवमु** उद्गिरणे । [ शतरि ङीप् ] । [1]भ्रम्यदिति । **भ्रमु** चलने । 'वा भ्राशभ्लाश—[३.१.७०] इति श्यनि शता । क्षरति । **क्षर** संचलने । गलनं तत् । लट् [2] । 'क्षर संचये' इति चैके । चलने च द्रुमे[3] । स्वमादय उदात्ता उदात्तेतः ॥

**सेहे च रामाजनखेलनं या**
**कुचोरुसीदत्परिशद्रुतोया ।**
**क्रोशैर्जनाः कोचगलान् मरालान्**
**बोधन्ति यत्राम्बुरुहां विकासे ॥ २४ ॥**

या रामाजनखेलनं सेहे च । [4]खेलनं क्रीडा । भगवत्क्रीडासुखमनुभूतवती चेति चकारस्यार्थः[5] । कुचोरुसीदत्परिशद्रुतोया कुचोरुभिः [6]स्तनसक्थिभिस्तदाघातेन सीदत् पीड्यमानं परिशद्रु विशरणशीलं तोयं यस्यां सा इति लीलाया असह्यत्वे हेतुः । जना यत्राम्बुरुहां पद्मानां विकासे क्रोशैः रोदनैः सख्याह्वानशब्दैर्वा मरालान् हंसान् कोचगलान् कुटिलीभवत्कण्ठान् बोधन्ति जानन्ति ॥

सेहे इति । **षह** मर्षणे । उदात्तो ऽनुदात्तेत् । लिट् । रामेति । [7]**रम** क्रीडायाम् । उदित्त्वमस्यानार्षम् । अनुदात्तो ऽनुदात्तेत् । अस्माण्णे टाप् । सीददिति । **षद्लृ** विशरणगत्यवसादनेषु । शतरि 'प्राघ्राध्म —' [७.३.७८] इति सीदादेशः । परिशद्रु इति । **शद्लृ** शातने ।

1 E भ्राम्यदिति.
2 All MSS. other K2 om. this word.
3 In *KK* only संचलनार्थ is seen—क्षर् ज संचलने—262.
4 K2.5.6 om. खे....डा.
5 E चकारस्यापिरर्थः.
6 K2 om. स्तन...भिः.
7 K1.3.4 E रमु.

तीक्ष्णीभावस्तत्। विशीर्णतायामित्येके। गतावप्यस्ति। 'दाधेट्सिशदसदः' [३.२.१५९] इति रुः। क्रोशैः। क्रुश आह्वाने रोदने च। घञ्। सदादयोऽनुदात्ता उदात्तेतः। कोचेति। कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। अस्माण्णः। [बोधन्ति] बुध अवगमने। उद्बोधज्ञाने अस्यार्थावित्ययमकर्मकः सकर्मकश्च। अस्माल्लट्। अम्बुरुहामिति। रुह बीजजन्मनि। अस्मात् क्विप्। विकास [1]इति। कस गतौ। विपूर्वत्वात् स्फुटनार्थता। अस्माद् घञ्। कुचादय उदात्ता उदात्तेतो रुहिवर्जम्॥

हिक्कद्भिर्ऋक्षैः सुखमञ्चमानै-
भृङ्गैरचद्भिर्मधु याचमानैः।
रेटत्तटा या खलु [2]चातकैश्च
चाद्यं जलं प्रोथति दातुमूर्म्या[3] ॥ २५ ॥

[4]या खलु चातकैरपि चाद्यं प्रार्थनीयं जलं कणरूपं दातुमूर्म्या[5] प्रोथति पर्याप्नोति समर्था भवति। हिक्कद्भिः जातिस्वभावप्राप्तमव्यक्त-शब्दं कुर्वाणैः सुखं यथा तथा अञ्चमानैस्ततः संचरद्भिश्च[6]। [7]एतद्द्वय-मृक्षविशेषणम्। अचद्भिः डयमानैः मधु [8]पुष्परसं याचमानैरिव च[9]। [10]एतद्द्वयं भृङ्गविशेषणम्। तादृशैर्ऋक्षैर्भृङ्गैश्च रेटत्तटा शब्दायमानतीरा। अनेन यमुनायाः सर्वजन्तूनां सुखकरत्वमुपकारित्वं चोक्तम्॥

---

1 K2.5.6 om. इति.
2 M1.2 चातकेभ्यः.
3 E उर्व्याम् for ऊर्म्या.
4 K2 5.6 have ऋक्षैः भृङ्गैश्च शब्दायमानतीरा before या खलु.
5 E उर्व्याम् for ऊर्म्या.
6 K2.5.6 add ऋक्षैः.
7 K5.6 इति for एतद्, K2 om.
8 K2 5.6 om. this word.
9 K2.5.6 add भृङ्गैः.
10 K2.5 6 om. एतद्…तीरा.

हिक्कद्भिरिति । **हिक्क** अव्यक्ते शब्दे । शता । अञ्चमानैः । अचद्भिः । **अञ्चु** गतौ याचने च । अचु इत्येके । अचि गतावित्यन्ये । अञ्चेः शानच् । अचेः शता । याचमानैः । **टु याचृ** याच्ञायाम् । डु याचृ इत्येके । शानच् । रेटदिति । रेटृ परिभाषणे । याचने च द्रुमे[1] । शता । चातकैः । **चते चदे** याचने । चतेर्ण्वुल् । चाद्यम् । चदेर्ण्यत । प्रोथति । **प्रोथृ** पर्याप्तौ । अयं शब्दार्थोऽपि । अपपूर्वस्तु मारणे हुङ्करणे वा । अस्माल्लट् ॥

यमुनाया अतिपुण्यत्वं शैत्यातिशयं चाह––

**नित्यं प्रमोहामिदितोरुमेदैः**
**प्रमेधिता सद्भिरनिद्यमानैः ।**
**या नेदितोर्वीपरिशर्धिवीची–**
**विमृद्धवृक्षादिविबोध्यशैत्या ॥ २६ ॥**

या सद्भिः नित्यं प्रमेधिता संगता । प्रमोहेण अमिदितः अपीडितः उरुः मेदः मेधा येषां तैः सद्भिः । अनिद्यमानैः अकुत्स्यमानैः । नेदितोर्वीं [2]नेदितां समीपभूतामुर्वीं[3] भुवं परिशर्धितुमुन्दितुं सेक्तुं शीलं [4]यासां ताभिः वीचीभिः विमृद्धैः उन्दितैः । वृक्षादिभिः विबोध्यं शैत्यं [5]यस्याः सा ॥

अमिदितेति । मिदृ मेदृ मेधाहिंसयोः[6] । मिथृ मेथृ इत्येके । मिधृ मेधृ इत्यन्ये । **मेधृ** संगमे च । मिदेः कर्मणि क्तः । [7]मेदैः । मेदेर्घञ् ।

---

1 रेट् ञ् याचे – *KK*. 142.
2 K2.5.6 om. this word.
3 K2.5.6 om. उर्वीं.
4 K2.5.6 येषां for यासां.
5 K2.5.6 यस्यां.
6 E –हिंसनयोः.
7 K5.6 E om. मेदैः......क्तः.

प्रमेधिता । मेधेः कर्मणि क्तः । अनिद्यमानैः । **णिदृ णेदृ** कुत्सासन्निकर्षयोः । निदेः कर्मणि शानच् । नेदितेति । नेदेः कर्तरि क्तः । परिशर्धि, विमृद्ध इति । **शृधु मृधु** उन्दने । शृधेर्णिनिः । मृधेः कर्तरि क्तः । विबोध्येति । **बुधिर्** बोधने । तत्तु ज्ञानमेव । अस्माण्ण्यत् ॥

**[1]प्रबुन्ध्यवेणीजववेनमाना[2]**
**खातान्तिका चीवरिभिर्निषादैः ।**
**चाय्या व्ययद्दाशविलोकभेष–**
**भ्रेषज्झषा यासदघं स्पशन्ती ॥ २७ ॥**

या अघं स्पशन्ती परिहरन्ती आसत् अशोभत । [3]प्रबुन्ध्येन दर्शनीयेन वेणीजवेन प्रवाहवेगेन सह वेनमाना गच्छन्ती । चीवरिभिः पटच्चरवद्भिः निषादैः खातान्तिका । चाय्या पूज्या दर्शनीया वा । व्ययतां गच्छतां दाशानां विलोकेन यो भेषो भयं तेन भ्रेषन्तः संचरन्तश्चलन्तो झषा यस्यां सा ॥

प्रबुन्ध्येति । [4]**उबुन्दिर्** निशामने । दर्शनं तत् । ण्यत् । वेणीति । **वेणृ** गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । **वेनृ** इत्येके । वादित्रग्रहणं वाद्यानां वादनार्थमादानम् । अस्मादौणादिके इनि 'कृदिकारादक्तिनः'[5] इति ङीष् । वेनमाना । वेनेः शानच् । खातेति । **खनु** अवदारणे । कर्मणि क्त : । चीवरिभिः । **चीवृ** आदानसंवरणयोः । अनृदिदित्येके । अस्मादुणादौ 'छित्वरच्छत्वर–' [ उण्. ३.१ ] इत्यादिना निपातितश्चीवरशब्दः । अत इनिः[6] । चाय्या । **चायृ** पूजानिशामनयोः । ण्यत् । व्ययदिति । **व्यय** गतौ ।

1 K 2.4 E प्रवुन्ध्य.
2 M1.2 वेणी जलवेन–.
3 K2.4 E प्रवुन्ध्येन.
4 K2.4 E उवुन्दिर्.
5 Gaṇasūtra under बह्वादिभ्यश्च (4·1·45).
6 K4 does not extend beyond this.

शता । वित्तत्यागे त्वस्य नित्यं तङ्ङेव । दाशेति । दाशृ दाने । 'दाशगोघ्नौ संप्रदाने' [३.४.७३] इत्यच् । भेषेति । भेषृ भये । [1]गतावित्येके । घञ् । भ्रेषदिति । भ्रेषृ गतौ । चलन इत्येके । भ्लेषृ इत्यन्ये । भ्रेषेः शता । आसदिति । अस गतिदीप्त्यादानेषु । अष इत्येके । असेर्लङ् । स्पशन्ती । **स्पश** बाधनस्पशनयोः[2] । पशेत्येके । पषेत्यन्ये । हिंसार्थं दोषसूचनं स्पशनम्[3] । स्पशेः शतरि ङीप् ॥

**लापेण चाषांश्छषितान् झषित्वा**
**[4]प्रभ्लक्ष्य भक्षन्ति यदम्बु नीचाः ।**
**या दासते मोदममाह्यधाम्नां**
**गूढाशयानामपि तापसानाम् ॥ २८ ॥**

नीचाः छषितान् हिंसितान् चाषान् वनकाकान् लाषेण [5]इच्छया झषित्वा आदाय संवृत्य च प्रभ्लक्ष्य भक्षयित्वा यदम्बु [6]यस्या जलं भक्षन्ति पिबन्ति । या तापसानामपि मोदं दासते ददाति । अमाह्यम् अमेयं धाम येषां तेषाम् । [7]गूढो गुप्त आशयो येषां तेषाम् । अनेन नीचानामुत्तमानां च सुखकरत्वमुक्तम् ।

लाषेणेति । **लष** कान्तौ । कान्तिरिच्छा । घञ् । चाषान् । **चष** भक्षणे । कर्मणि घञ् । छषितान् । **छष** हिंसायाम् । कर्मणि क्तः । झषित्वा । **झष** आदानसंवरणयोः । क्त्वा । प्रभ्लक्ष्य । **भ्लक्ष** अदने । भ्रक्ष इत्येके । **भक्ष** इत्यन्ये[8] । भ्लक्षेर्ल्यप् । भक्षन्ति । भक्षेर्लट् । दासते ।

1 E अगतावित्येके.
2 K5.6 स्पर्शनयोः.
3 K5.6 स्पर्शनम्.
4 M1.2 विभ्लक्ष्य.
5 K2 om. this word.
6 K2.5.6 om. यस्या जलं.
7 K2.5.6 om. गूढो....तेषाम्.
8 K2 adds प्लक्ष इत्यपरे.

**दासृ** दाने । लट् । अमाह्वेति । **माह्** माने । ण्यत् । गूढेति । **गुहू** संवरणे । क्तः । हिक्कादय उदात्ताः स्वरितेतः ॥

यमुनायामक्रूरस्य व्यापारं वक्तुमारभते—

**अजं तमत्र स्वरथे निवेश्य**
**श्रियं भरन्तीं हरिकान्तितुल्याम् ।**
**धृतप्रमोदो दुरितापनेत्रीं**
**स्नातुं नदीमाप स गान्दिनेयः ॥ २९ ॥**

[1]स्पष्टार्थः श्लोकः । अजन्तधात्वारम्भोऽत्रेति च भाति ॥

श्रियमिति । **श्रिञ्** सेवायाम् । उदात्त उभयतोभाषः । 'क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुज्वां दीर्घोऽसंप्रसारणं च' [उण्. २.५४] इति कर्मणि क्विप् दीर्घश्च । भरन्तीम् । **भृञ्** भरणे ; पूरणेऽपीति भट्टिः[2] । शतरि ङीप् । हरीति । **हृञ्** हरणे । [3]तच्च प्रापणं स्वीकारः स्तेयं नाशनं वा । अस्मादौणादिक इन् । धृतेति । **धृञ्** धारणे । कर्मणि क्तः । अपनेत्रीमिति । **णीञ्** प्रापणे । [4]प्रापणं गमना[5] । तृचि ङीप् । भृञादयोऽनुदात्ता उभयतोभाषाः ॥

**धयन् दृशाग्लानरुचिं स कृष्णं**
**म्लानिं त्यजन् घ्रानमले जलान्ते ।**
**निद्रायदिन्दीवरभाजि मज्ज-**
**न्नघ्राणधीस्तत्र च तं ददर्श ॥ ३० ॥**

---

1 K2 omits this sentence.

2 Vide *Bhaṭṭikāvya* XV. 24 अभार्षीद् ध्वनिना लोकान् and *Jayamaṅgalā* thereon अभार्षीत् पूरितवान्.

3 K1.3 E om. तच्च.

4 K2.5 6 तच्च हारणा for प्रापणं गमना.

5 K3 गमनम्.

स दृशा कृष्णं धयन् पिबन् अध्राणधीः अतृप्तधीरपि ग्लानिं त्यजन्। पीडात्यागाद्धेतोः। जलान्ते मज्जन् तत्र च [1]तत्रापि जले तं [2]श्रीकृष्णं ददर्श। अग्लानरुचिम् अक्षीणशोभं ध्यानं न्यक्कृतं निरस्तं मलं यस्मिन् तास्मिन् जलान्ते। [3]निद्रायदिन्दीवरभाजि निद्रायन्ति [4]मीलन्ति मुकुलितानि इन्दीवराणि भजतीति निद्रायदिन्दीवरभाक् तस्मिन्॥

धयन्निति। धेट् पाने। शता। अग्लानेति। ग्लै म्लै हर्षक्षये। हर्षक्षयः शक्तिक्षयः। [5]ग्लैधातोः कर्तरि क्तः[6]। 'संयोगादेः–' [८.१.४३] इति निष्ठानत्वम्। ग्लानिम्। ग्लायतेः 'ग्लाम्लाज्याहाभ्यो निर्वाच्यः'[7] इति निः। ध्यानेति। ध्यै न्यक्करणे। न्यङ्गविधान इत्येके। कुत्सिताङ्गकरणं तत्। कर्मणि क्तः[8]। प्राग्वन्नत्वम्। निद्रायदिति। द्रै स्वप्ने। शता। अध्राणेति। ध्रै तृप्तौ। कर्तरि क्तः। धीरिति। ध्यै चिन्तायाम्। क्विपि 'ध्याप्योः [9]प्रसारणम्'[10] इतीत्त्वम्॥

भगवद्दर्शनकौतुकेन जलादुन्मग्नस्यावस्थामाह—

रायद्भयस्त्यानरुचौ रथेऽपि
तं भक्तितिष्ठ्यापयिषुं स दृष्ट्वा।
स्वाताशयोऽक्षामसुदा पुनश्च
मग्नोऽन्यथापश्यदजानमीशम्॥ ३१॥

---

1 K2 जलेऽपि for तत्रापि जले.
2 E कृष्णं.
3 K1.3 E om. this word.
4 K1 E मीलयन्ति.
5 K3 om. ग्लै......इति निः.
6 K5.6 क्ते.
7 Vār. 3.3.95.
8 K2.5.6 क्ते.
9 E संप्रसारणम्.
10 The Vār. under 3.2.178 reads only ध्यायतेः सम्प्रसारणं च. But under Uṇādi we get ध्याप्योः सम्प्रसारणं च, which, however, applies only with regard to क्वनिप्.

सः तं[1] भक्तेः तिष्ट्यापयिषुं संघातीकर्तुं वर्धयितुमिच्छुं सन्तं रथेऽपि दृष्ट्वा अक्षाममुदा पूर्णमोदेन पुनश्च पुनरपि मग्नः सन् ईशमन्यथा अपश्यत्। [2]रायद्भयैः शब्दायमानाश्वैः [3]स्त्यानरुचौ प्रवृद्धशोभे रथे। खाताशयः स्थिरीभूतमना अगाधमना वा। अजानमक्षयं[4] नित्यम् ॥

रायदिति। रै शब्दे। शता। स्त्यानेति। **स्त्यै ष्ट्यै** शब्दसंघातयोः। आद्यात् कर्तरि क्तः[5]। नत्वम्। तिष्ट्यापयिषुम्। द्वितीयाण्णिजन्तात् सन्युः। 'स्तौतिण्योरेव—' [८.३.६१] इति षत्वम्। तदर्थमेव षोपदेशस्य पाठः। खातेति। **खै** खदने। तच्च स्थैर्यहिंसे। 'खै खनने' इत्येव शंकराचार्यः। तस्मात् कर्तरि क्तः। अक्षामेति। **क्षै जै षै** क्षये। क्षैधातोः कर्तरि क्ते 'क्षायो मः' [८.२.५३] इति [6]निष्ठातस्य मत्वम्। अजानम्। जैधातोर्ल्युट् ॥

अन्यथेत्युक्तं रूपं वर्णयति—

**प्रसातकातर्यसुरोपगीतं**
**पूज्यं श्रृतास्राणहविर्विशेषैः।**
**अपातमाल्यं शयितं सुवान-**
**काशत्विषि स्तातनौ फणीन्द्रे ॥ ३२ ॥**

प्रसातकातर्यैः प्रक्षीणभयैः सुरैरुपगीतं स्तुतं शृतास्राणैः पक्वापक्वैश्चरुपुरोडाशक्षीरनवनीतादिरूपैर्हविर्विशेषैः पूज्यम्। अपातम् अशुष्कमम्लानं माल्यं यस्य तम्। सुवानकाशस्य सम्यक्शुष्ककाशमञ्जर्यास्त्विवडिवातिधवला शोभा यस्य

1 K2 inserts भक्तितिष्ट्यापयिषुं before तं and भक्तेः.

2 K2.5.6 add रायद्भयस्त्यानरुचौ before.

3 K2.5.6 om. this word.

4 K2.5.6 om. अक्षयं.

5 K2.5.6 क्ते.

6 K1.3. E om. this word.

तस्मिन् । [1]स्ताता वेष्टिता कुण्डलीकृता तनुर्यस्य तस्मिन् । फणीन्द्रे शयितम् । ईदृशमीशमपश्यदिति पूर्वेणान्वयः ॥

प्रसातेति । सायतेः कर्तरि क्तः । कातर्येति । **कै गै** शब्दे । कायतेः [2]'अनिकाभ्यां तरन्' इति भोजोक्ततरनि[3] कातरः । तस्मात् ष्यञ् । उपगीतमिति । गायतेः शब्दविशेषार्थत्वात् सकर्मकात् कर्मणि क्तः । शृतेति । **श्रै स्रै** पाके । श्रायतेः 'शृतं पाके' [६.१.२७] इति निपातः । अस्राणेति । स्रैधातोः कर्तरि क्ते यण्वत्त्वान्नत्वम् । अपातेति । **पै ओ वै** शोषणे । पैधातोः कर्तरि क्तः । सुवानेति । वैधातोः प्राग्वत् क्तः । ओदित्वान्नत्वम् । स्तातेति । **ष्टै** वेष्टने । ष्णै इत्येके । **ष्णै** शौच इत्यन्ये । स्तैधातोः कर्तरि क्तः ॥

एतद्रूपं पश्यतोऽक्रूरस्य प्रवृत्तिमाह—

**स्नातावदातः स पिबंस्तदाभां**
**जिघ्रन् सुगन्धं विधमन्नघानि ।**
**तिष्ठन्निहाम्नायगमिष्टदं त-**
**मस्तौत् स्फुटेनाह्रुतधीः स्वरेण ॥ ३३ ॥**

स स्नातावदातः स्नातश्चावदातश्च[4] शुद्धः सन् तदाभां पिबन् सुगन्धं जिघ्रन् अघानि विधमन् त्यजन् इह तिष्ठन् स्फुटेन स्वरेण तमस्तौत् स्तुतवान् । आम्नायगं वेदगतम् । अह्रुता अकुटिला धीर्यस्य सः ॥

स्नातेति । [5]ष्णा शौचे । कर्तरि क्तः । अवदातः । **दैप्** शोधने । पकारः 'अदाप्' इति सामान्यग्रहणार्थः । शोधनं शुद्धिः । अस्मात् कर्तरि

---

1 K2.5.6 add स्तातनौ before.
2 E काराभ्यां.
3 vide *SKĀ* 2.3.66.
4 K1.2 om. च.
5 E ष्णै.

क्तः । पिबन् । जिघ्रन् । विधमन् । तिष्ठन् । **पा** पाने । **घ्रा** गन्धोपादाने । **ध्मा** शब्दाग्निसंयोगयोः । इह शब्दः शब्दना । अग्निसंयोगश्च मुखवायुना । लक्षणया विधूनने, संतापेन पूरणे च । **ष्ठा** गतिनिवृत्तौ । चतुर्णां शतरि 'पाघ्रा—' [ ७.३.७८ ] इत्यादिना पिबाद्यादेशाः । आम्नायेति । **म्ना** अभ्यासे । प्रायेणाङ्पूर्वः । कर्मणि घञ् । [1]इष्टदमिति । **दाण्** दाने । 'पाघ्रा—' इत्यादिसूत्रे दाणिति विशेषणार्थो णः । अस्मात् 'आतोऽनुपसर्गे कः' [३.२.३] । अह्वृतेति । **ह्वृ** कौटिल्ये । कर्तरि क्त : । स्वरेणेति । **स्वृ** शब्दोपतापयोः । अस्मात् 'क्षुब्धस्वान्त—' [७.२.१८] इतिसूत्रे स्वरेति निर्देशादच्[2] ॥

**स्मार्यं शुभद्वारमुपासरामि**
**त्वत्पादमृच्छामि न मोहगर्तम् ।**
**घृणास्तु ते विध्वृतशूरदैत्य-**
**स्रुतास्रसिक्तायुध विश्वसोतः ॥ ३४ ॥**

अहं त्वत्पादमुपासरामि प्राप्नोमि मोहरूपं गर्तं न ऋच्छामि [3]न प्राप्नोमि । द्वयोः 'आशंसायां भूतवच्च' [ ३.३.१३१ ] इति चकारात् प्रार्थनायां[4] लट् । [5]कीदृशं पादम् । स्मार्यं चिन्तनीयम् । शुभद्वारं सुखकरमित्यर्थः । विध्वृतशूरदैत्यस्रुतास्रसिक्तायुधः विध्वृतेभ्यो हिंसितेभ्यः शूरदैत्येभ्यः स्रुतैरास्रैः रक्तैः सिक्तमायुधं यस्य तादृश, हे विश्वसोतः, जगतस्तत्तत्कर्मसु अनुज्ञाकर्तः, [6]ईश्वर इति वा । तव घृणा दया मयि अस्तु ॥

---

1 E इष्टदेति.
2 K2.5.6 अप् for अच्.
3 K2 om. न प्राप्नोमि.
4 K5 6 add वर्तमाने.
5 K2.5.6 om. कीदृशं............ मित्यर्थः.
6 K2.5.6 om. ईश्वर इति वा.

स्मार्यमिति । **स्मृ** चिन्तायाम् । ण्यत् । द्वारमिति । **द्वृ** वरणे इत्यप्येके । घञ् । उपासरामि । **सृ** गतौ । लट् । सरतेर्धावादेशस्तु द्रुतगतावेव । ऋच्छामि । **ऋ** गतिप्रापणयोः । लटि ऋच्छादेशः । गर्तम् । **गृ** घृ सेचने । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' [उण् ३.८७] इति कर्मणि तन् । तत्र गरतेरपि ग्रहणात् । घृणा । 'हूणभ्रूणस्थूणघृणादयः' इति भोजोक्तेर्घरतेर्णः[1] । विध्वृतेति । **ध्वृ** हूर्च्छने । [2]कौटिल्यं तत् । हिंसार्थेऽप्यस्ति । कर्मणि क्तः । [3]शूरेति । स्रु गतौ । स्रुतौ च द्रुमे[4] । शु स्रु गतावित्येके । 'शुसिचिमिञां दीर्घश्च' [उण्. २.२५] इति क्रन् । स्रुतेति । स्रुधातोः कर्तरि क्तः । सोतः । **षु** प्रसवैश्वर्ययोः । [5]प्रसवोऽभ्यनुज्ञा । तृच् ॥

**श्रुत्यन्तवाचा ध्रुवया प्रदूनं**
**घोरद्रवच्चक्रजिताज्ञितारिम् ।**
**स्मितार्द्रवक्त्रं गवमानभूषं**
**गै त्वां घुताशं कुतशङ्खघोषैः[6] ॥ ३५ ॥**

अहं त्वां गै प्राप्तुं प्रार्थये । श्रुत्यन्तवाचा उपनिषदा ध्रुवया नित्यया प्रदूनं ज्ञातम् । गत्यर्थात् ज्ञानार्थता । घोरं यथा तथा द्रवता चक्रेण जिता अभिभूता [7]अज्ञिता अन्यैरनभिभूता अरयो येन तम् । [8]स्मितेन

---

1 Vide वीणास्थूणाहूणभ्रूणक्षूण-तूणतृणघृणादयः *SKĀ*2 2.123.

2 K2.5.6 om. कौटिल्यं तत्.

3 K1 E om. this word.

4 स्रु द्रुवत्; द्रु स्रुतौ गतौ—*KK* 62,59.

5 K2.5.6 om. प्रस......नुज्ञा.

6 M1.2 ङुत्या for घोषैः.

7 K2 om. अज्ञिता.......भूता.

8 K2.5.6 om. स्मितेन...... वक्त्रम्.

मन्दहासेन आर्द्रवक्त्रम् । गवमानाः शब्दायमाना भूषाः यस्य तम् । कुतशङ्खस्य शब्दायमानशङ्खस्य घोषैः घुताशं शब्दितदिशम् ॥

श्रुतीति । **श्रु** श्रवणे । 'श्रुयजीषिस्तुभ्यः करणे'[1] इति क्तिन् । ध्रुवया । **ध्रु** स्थैर्ये । बाहुलकात् कः, यद्वा 'ध्रुवमपाये' [१.४.२४] इति निर्देशात् साधुरिति माधवः । प्रदूनम् **दु द्रु** गतौ । दोः कर्मणि क्तः । 'दुग्वोर्दीर्घश्च'[2] इति निष्ठानत्वदीर्घौ । द्रवदिति । द्रुधातोः शता । [3]जिताज्ञितेति । **जि ज्रि** अभिभवे । 'जि ज्रि अभिभवे' इति लीलाशुकः[4] । जिज्र्योः कर्मणि क्तः । धयत्यादयोऽनुदात्ताः परस्मैभाषाः । स्मितेति । [5]**ष्मिङ्** ईषद्धसने । नपुंसके भावे क्तः । गवमानेति । **गुङ्** अव्यक्ते शब्दे । शानच् । गै इति । **गाङ्** गतौ । लोट् । घुतकुतेति । **घुङ् कुङ्** उङ् दुङ् शब्दे । कुङ् अव्यक्तशब्दार्थ इति [6]केचित् । द्वयोः कर्तरि क्तः ॥

**स्तोत्रावमानैर्दुतवेणुवीणै-**
**श्च्युताशुभैर्व्योमचरैर्ज्युतं ते ।**
**प्रवे भवाब्धिप्लवमारुतानां**
**धृतामयं भक्तिनिमेयमङ्घ्रिम् ॥ ३६ ॥**

अहं भक्तिनिमेयं भक्त्या निमेयं व्यत्यसनीयं [7]दानपूर्वं परिग्राह्यं ते अङ्घ्रिं प्रवे प्राप्नोमि । [8]कीदृशमङ्घ्रिम्[9] । व्योमचरैः दिव्यैः[10] ज्युतं प्राप्तम् ।

---

1 Vār. under 3.3.94.
2 Vār. under 8.4.44.
3 K5.6 om. this word.
4 Lēlāśuka cites this as the view of Kṣīrasvāmin जि ज्रि अभिभवे इति क्षीरस्वामी (vide *Puruṣakāra* on *Daiva* 13).
5 All except E स्मिङ्.
6 K2.5.6 एके for केचित्.
7 K2 adds भक्ति before.
8 K2 adds पुनः before.
9 K2 adds तत्राह.
10 One folio containing the matter from here upto तत्कृपां in the introduction to verse 38 is lost in K2.

आरुतानां प्राप्तानां धृतामयं ध्वस्तपीडम्। कीदृशैर्व्योमचरैः। स्तोत्रेण अवमानैः शब्दायमानैः। तथा द्रुताः शब्दिता वेणवो [1]वीणाश्च येषां तैः। च्युतं गतम् अशुभं येषां तैः॥

अवमानैः[2]। उङ्धातोः शानच्। द्रुतेति। द्रुङः कर्तरि क्तः। च्युतेति। च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ। क्लुङ् इति चैके। झुङ् इति चान्ये। च्युङः कर्तरि क्तः। ज्युतम्। [3]ज्युङः कर्मणि क्तः। प्रवे। प्रुङो लट्। प्लवम्। प्लुङः पचाद्यच्। आरुतानाम्। रुङ् गतिरेषणयोः। रेषणं हिंसा। कर्तरि क्तः। धृतेति। धृङ् अवध्वंसने। [4]कर्मणि क्तः। निमेयम्। मेङ् प्रणिदाने। तच्च विनिमयः। प्रत्यर्पणं वा। अचो यत्॥

**दयस्व मां देव कृपाम्बुशीत**
**प्यानौजसा त्रातजगत्त्रयं त्वाम्।**
**पूताखिलं मूतबलिं सुडीतौ**
**तार्क्ष्ये स्थितं प्राप्य तरामि मायाम्॥ ३७॥**

हे कृपाम्बुशीत देव, त्वं मां दयस्व रक्ष। अहं त्वां प्राप्य मायां तरामि। प्यानौजसा प्रवृद्धबलेन परिपालितजगत्त्रयम्। मूतो बद्धो बलिर्येन तम्। सुडीतौ शोभनडयने तार्क्ष्ये स्थितम्॥

दयस्वेति। देङ् रक्षणे। लोट्। शीतेति। श्यैङ् गतौ। कर्तरि क्तः। 'द्रवमूर्तिस्पर्शयोः श्यः' [ ६.१.२४ ] इति [5]संप्रसारणम्। प्यानेति। प्यैङ् वृद्धौ। प्राग्वत् क्तः। यण्वत्त्वान्नत्वम्। त्रातेति। त्रैङ् पालने। कर्मणि

1 K3 E वीणा च.
2 K3 adds इति.
3 K5 om. this word.
4 E कर्तरि.
5 K5.6 प्रसारणम्.

क्तः । ष्मिङ्ङादयोऽनुदात्ता आत्मनेभाषाः । पूतेति । पूङ् पवने । शोधनं तत् । कर्मणि क्तः । मूतेति । मूङ् बन्धने । प्राग्वत् क्तः । सुडीतौ । डीङ् विहायसा गतौ । क्तिन् । पूङादय उदात्ता आत्मनेभाषाः । तरामि । तॄ प्लवनतरणयोः । अभिभवे च द्रुमे[1] । प्लवनं जलादावमङ्क्त्वा गमनम् । उदात्तः परस्मैभाषः । अस्माल्लट् ॥

अहं त्वां प्राप्य मायां तरामीत्युक्तम् । तत्र त्वत्कृपां विना त्वत्प्राप्तिरपि दुर्लभेत्याह—

**जुगुप्सतेऽघाद्व्यसनं तितिक्षु-**
**र्मीमांसते ब्रह्म च यो दृढात्मा ।**
**स खल्वबीभत्सितवृत्तिरर्चा-**
**त्वारभेतापि कृपां लभेत ॥ ३८ ॥**

यः अघात् जुगुप्सते अघं निन्दति । व्यसनं दुःखं तितिक्षुः क्षममाणो दृढात्मा च सन् ब्रह्म मीमांसते विचारयति । स खलु तवार्चा-मारभेत कृपां लभेत अपि । अबीभत्सितवृत्तिः [2]बीभत्सितमन्येषां चित्त-विकारो [3]न यस्यां तादृशी वृत्तिर्व्यापारो यस्य सः ॥

जुगुप्सत इति । गुप गोपने । तिज [4]निशातने । मान पूजायाम् । बध बन्धने[5] । एषां क्रमात् निन्दायाम्, क्षमायाम्, पूजितविचारे, दुर्गन्धादिजचित्तविकारे च सन्नुक्तः । नित्यसन्नन्तत्वसाधनाच्च[6] धातोः पृथक्प्रयोगाभावात् गोपनाद्यर्थपाठो व्यर्थ इति हरदत्तादयः । [7]गुपतिजोः

1 तॄ तारेऽभिभवे प्लुत्याम्—*KK*.72.

2 K2.5.6 add न before.

3 K2.5.6 om. न.

4 K1 E निशाने, *PS* also has निशातने.

5 K2.5.6 add गुपादयोऽनुदात्ततः.

6 K5.6—सनन्तत्वाच्च.

7 E om. this word.

'गुप्तिज्किद्भ्यः सन्' [३.१.५] इति सन्। एषामुदात्तेत्त्वात् सन्नन्तस्यापि तङ्। ईदृशात् गुपेर्लट्। तितिक्षुरिति। तिजेः सन्युप्रत्ययः। मीमांसत इति। मानेः 'मान्बध—' [३.१.६] इति सनि लट्। अबीभत्सितेति। बधेः सनि नपुंसके भावे क्तः। आरभेत[1]। **रभ** राभस्ये। उपक्रमस्तत्। [2]तत्रायं प्रायेणाङ्पूर्वः। लभेत। **डु लभष्** प्राप्तौ। द्वयोः संभावने लिङ्॥

त्वत्कृपया जितेन्द्रियाणां त्वं सुलभ इत्याह—

**[3]अस्वक्तयोषैः पशुहन्नशुद्ध-**
**क्ष्वेदन्मृगास्कन्नवनान्तवासैः।**
**याभाद्यकामैर्नमनादृताद्यैः**
**सृप्योऽसि विष्णो यमिभिर्वितापः॥ ३९॥**

हे विष्णो, त्वं यमिभिः सृप्योऽसि प्राप्योऽसि। [4]अस्वक्तयोषैः अनालिङ्गितस्त्रीकैः। तदिच्छाभावात्। [5]पशूनां हन्नेन पुरीषोत्सर्गेण शुद्धः, क्ष्वेदद्भिः अव्यक्तशब्दं कुर्वाणैः[6] क्रूरमृगैः। अस्कन्नः अप्राप्तः अनभिभूतो वा, वनान्तो वासो येषां तैः। याभादिषु रतादिषु अकामैः॥

[7]अस्वक्तेति। [8]**ष्वन्ज** परिष्वङ्गे। कर्मणि क्तः। हन्नेति। **हद** पुरीषोत्सर्गे। नपुंसके भावे क्तः। रभादयोऽनुदात्ता अनुदात्तेतः। क्ष्वेददिति। **ञिक्ष्विदा** अव्यक्ते शब्दे। उदात्त उदात्तेत्। शता। अस्कन्नेति।

---

1 K3 adds इति.
2 K2.5.6 om. तत्रायं.
3 E असक्त.
4 E असक्त.
5 K2 adds पशुहन्नशुद्धक्ष्वेदन्मृगास्कन्नवनान्तवासैः before.
6 K1.3 E insert मृगैः betwen कुवार्णैः and क्रूर.
7 E असक्त.
8 E षन्ज.

[1]**स्कन्दिर्** गतिशोषणयोः। कर्मणि क्तः। याभेति। **यभ** विपरीते मैथुने। तच्च पुरुषायितम्। यभ मैथुन इत्येवैके। घञ्। नमनात्। **णम** प्रह्वत्वे, शब्दे च द्रुमे[2]। ल्युट्। गतेति। **गम्लृ सृप्लृ** गतौ। गमेः कर्तरि क्तः। सृपेः 'ऋदुपधाद्—' [३.१.११०] इति क्यप्। यमिभिः। **यम** उपरमे। उदिदिति केचित्। 'यमः समुपनिविषु च' [३.३.६३] इति अबन्तान्मत्वर्थीय इनिः। वितापैः। **तप** सन्तापे। घञ्॥

अक्रूरस्य कृत्यशेषमाह—

**त्यक्तार्तिरेवं तमसङ्गचेताः**
**स्तुवन्नदृष्ट्वा च पुनः क्षणात्तम्।**
**कृत्वा स कृत्यं दशनांशुगौरं**
**कृष्णं ययौ दैत्यनिदाघमेघम्॥ ४०॥**

स तमेवं स्तुवन् पुनस्तं क्षणाददृष्ट्वा च कृत्यम् अवश्यकर्तव्यं कृत्वा, दशनांशुगौरं मन्दस्मितसितात्मानं [3]कृष्णं रथस्थं श्रीकृष्णं ययौ प्राप। त्यक्ता आर्तिर्येन सः। असङ्गं चेतो यस्य सः। दैत्यरूपस्य निदाघस्य ग्रीष्मर्तोः मेघं वर्षतुम् तन्नाशकमित्यर्थः॥

त्यक्तेति। **त्यज** हानौ। कर्मणि क्तः। असङ्गेति। षन्ज सङ्गे। घञ्। अदृष्ट्वा। **दृशिर्** प्रेक्षणे। क्त्वा। दशनेति। **दन्श** दशने। [4]दशनशब्देन दन्तार्थेन तत्क्रिया लक्ष्यते। 'दंशेः करणे ल्युटि नलोपो

---

1 E स्कदिर्, D2 K3 स्कन्द्.
2 णमौ शब्दनत्योः—*KK*.253.
3 K5.6 om. कृष्णं रथस्थं.
4 K2.5.6 दशनं दन्तव्यापारः for दशन......लक्ष्यते.

वाच्यः'[1] इति [2]ल्युटि नलोपः । कृष्णमिति । कृष विलेखने । [3]विलेखनमिहाकर्षणम् । 'कृषेर्वर्णे' [उण्.३.४] इति नक् । निदाघेति । दह भस्मीकरणे । घञि न्यङ्क्वादित्वात्कुत्वम् । मेघमिति । मिह सेचने । अचि प्राग्वत् कुः । स्कन्दादयोऽनुदात्ता उदात्तेतः ॥

भगवतोऽक्रूरानुग्रहमाह—

**मोहं चिकित्सन् वचसास्य कृष्णो**
**दीदांसुचित्तस्य सुविस्मितस्य ।**
**जगाम शीशांसितशस्त्रहस्तै-**
**र्गोपैः सहासौ परिपक्वपुण्यैः ॥ ४१ ॥**

असौ कृष्णो वचसा अस्य मोहं चिकित्सन् अपनयन् गोपैः सह जगाम । दीदांसुचित्तस्य [4]दीदांसु ऋजूभवनशीलं चित्तं यस्य तस्य[5] । शीशांसितशस्त्रहस्तैः । शीशांसितं तीक्ष्णीकृतं शस्त्रं हस्ते येषां तैः ॥

चिकित्सन्निति । कित निवासे रोगापनयने च । अयमुदात्तेत् । [6]नित्यसन्नन्तः । उदात्तेत्त्वात् सन्नन्तस्य परस्मैपदमेव । अत्र निवासार्थो व्यर्थः । रोगापनयने हि सन्नुच्यते । संशयनिग्रहापनयनाशनादयश्चास्यार्थाः । अस्मात् 'गुप्तिज्किद्भ्यः [३.१.५] इति सनि शता । दीदांसु इत्ति । दान अवखण्डने । शान तेजने । इमावपि नित्यसन्नन्तौ स्वरितेतौ । दानेरार्जवे सन्नुक्तेः अवखण्डनोक्तिर्व्यर्था । दानेः 'मान्बध—' [३.१.६] इति सनि उः । शीशांसितेति । शानेः निशातने प्राग्वत्सनि कर्मणि क्तः ।

---

1 Quoted from *PS.* under 3.3.117; vide also *MDV*- दशेति नलोपनिर्देशस्तु करणे ल्युडर्थः, दशन इति.

2 E om. this word.

3 K2.5.6 om. विले........णम्.

4 K2 om. this word.

5 K2 adds अक्रूरस्य.

6 E om. नित्य.

परिपक्वेति । डुपचष् पाके । कर्तरि क्ते 'पचो वः [६.२.५२] इति निष्ठावत्वम् ॥

ते संसचन्तो धृतभक्तिरागाः
कृष्णेन कंसं मनसा शपन्तः ।
त्वेषन्मुखा इष्टिनिवापहीनां
[1]कष्टां पुरीं प्रापुरुदूढदर्पाः ॥ ४२ ॥

ते कृष्णेन संसचन्तः सम्बध्नन्तः पुरीं प्रापुः । त्वेषत् दीप्यमानं मुखं येषां ते । इष्टिनिवापहीनाम् । इष्टिर्देवपूजा, निवापः पितृक्रिया, ताभ्यां हीनाम् । अत एव कष्टां निन्दिताम् ॥

संसचन्त इति । षच समवाये । [2]स च सम्बन्धः । शता । भक्तीति । भज सेवायाम् । विभजने च द्रुमे[3] । क्तिन् । रागेति । रन्ज रागे । घञ्[4] 'घञि च भावकरणयोः' [६.४.२७] इति नपोलः । शपन्तः । शप आक्रोशे । शता । त्वेषदिति । त्विष दीप्तौ । शता । इष्टीति । यज देवपूजासंगतिकरणदानेषु । क्तिन् । 'वाचिस्वपि—' [६.१.१५] इति [5]सम्प्रसारणम् । निवापेति । डुवप् बीजसंताने । तच्च क्षेत्रे बीजानां विकिरणम् । अयं केशखण्डनेऽपि । निपूर्वत्वात् पितृक्रियार्थता । [6]घञ् । उदूढेति । वह प्रापणे । कर्मणि क्तः । [7]यजादित्वात्सम्प्रसारणम् । पचादयोऽनुदात्ताः स्वरितेतः । षचिस्तूदात्तः ॥

---

1 D1.2 कृष्णां for कष्टां.
2 K2 om. this sentence.
3 भज ञौ भागसेवयोः—*KK*.123.
4 K5.6 घञि.
5 K2 प्रसारणम्.
6 K2 adds अस्मात् before.
7 K2 om. यजादित्वात्.

ततो निवत्स्यन् दिवसोर्ध्वभागे
चारूतकीर्त्यम्बरवीतलोकः ।
हरिः समाहूय वदन् सहायान्
पुरस्य बाह्योपवनं शुशाव ॥ ४३ ॥

ततो हरिः दिवसोर्ध्वभागे निवत्स्यन् निवासं करिष्यन् सहायान् समाहूय वदन् पुरस्य बाह्योपवनं शुशाव प्राप । कीदृशः हरिः[1] । चारूतकीर्त्यम्बरवीतलोकः । चारु यथा तथा उतेन विस्तारितेन कीर्ति-रूपेण वस्त्रेण वीतः छादितः लोको येन सः ॥

निवत्स्यन्निति । वस निवासे । अनुदात्त उदात्तेत् । [2]लृटि 'लृटः सद्वा' इति शता । उतेति । वेञ् तन्तुसंताने । [3]व्याप्तौ छादने चाह भट्टिः[4] । कर्मणि क्तः । वीतेति । व्येञ् संवरणे । प्राग्वत् क्तः । समाहूय । ह्वेञ् स्पर्धायां शब्दे च । शब्दः [5]शब्दनं तच्चाह्वानम् । ल्यप् । वेञादयोऽनुदात्ता उभयतोभाषाः । वदन् । वद व्यक्तायां वाचि । उदात्त उदात्तेत् । शता । शुशावेति । टु ओश्वि गतिवृद्ध्योः । उदात्तः परस्मैभाषः । [6]लिट् । 'लिट्यभ्यासस्योभयेषाम्'[7] [ ६.५.१७ ] इति [8]सम्प्रसारणम् । वृत् । यजादयो वृत्ताः । भूवादयस्त्ववृत्कृताः । तेन [9]चुलुम्पादीनां शप्सिद्धिः । शब्विकरणभूवादयो गताः ॥

[ इति भ्वादिगणः ]

---

1 K2 adds तत्राह.
2 K1.3 E om this word.
3 K2.5.6 om. this sentence.
4 *Bhaṭṭikāvya XIV*. 84— खमूयुर्वसुधामूवुः सायका रज्जुवत्तमाः.
5 K2.5.6 शब्दना for शब्द....... नम्, E शब्दनं चाह्वानम्.
6 K2.5.6 लिटि.
7 K2.3 om. उभयेषाम्.
8 K2 प्रसारणम्.
9 K2.5.6 चुलुम्पीनाम्.

[ अदादिगणः ]

अथ मधुरोपवनप्राप्त्यनन्तरं राजमार्गयानादितद्दिनशेषभाविनीमवस्था-माह—

**अदन् मधुघ्नो द्विषते विसृज्य**
**श्वल्कजं विश्वमुदं दुहानः ।**
**मालेयदिग्धो जनदृष्टिलेह्य-**
**श्चक्षीमहीमां पुरमित्युपैर्त ॥ ४४ ॥**

मधुघ्नः [1]श्रीकृष्णः श्वल्कजम् अक्रूरं द्विषते द्विषन्तं बोधयितुं विसृज्य अदन् भुञ्जानः सन् वयमिमां पुरं चक्षीमहि पश्येम इति एवं सहायान् उक्त्वा उपैर्त समीपमगच्छत् । कीदृशः श्रीकृष्णः[2] । मालेयेन चन्दनेन दिग्धो लिप्तः । अनेन निसर्गकमनीयस्यापि तस्य तदानीमनन्य-साधारणं शोभातिशयमाह । अत एव जनदृष्टिलेह्यः आस्वाद्यः, न तु दृश्य एव । अत एवानुक्तसिद्धामपि सर्वमनस्तुष्टिं [3]स्पष्टयति—विश्वेषां सर्वेषां मुदं दुहानः पूरयन् [4]मुद्रूपममृतं क्षारयन् वा ॥

अदन्निति । **अद** भक्षणे । 'व्यत्यदन्ति वृका मेषान्' इत्यादौ हिंसार्थोऽपि । अस्माच्छता । मधुघ्न इति । **हन** हिंसागत्योः । 'अमनुष्य-कर्तृके च' [ ३.१.५३ ] इति टक् । अनुदात्तावुदात्तेतौ । द्विषते । **द्विष** अप्रीतौ । शता । दुहानः । **दुह** प्रपूरणे । प्रपूरणं पात्रादिपूरणार्थं क्षारणम् । तस्मात् शानच् । दिग्ध इति । **दिह** उपचये । [5]उपचयो

1 K2.5.6 om. this word.
2 K2 adds तत्राह.
3 K2 विस्पष्टयति.
4 E मद्रूपं (म seems to be a scribal error for मु) emended by the editor into तद्रूपं.
5 K2 स च for उपचयो.

लेपनम् । [1]कर्मणि क्तः । लेह्य इति । लिह आस्वादने । ण्यत् । द्विषादयोऽनुदात्ताः स्वरितेतः । चक्षीमहि । चक्षिङ् व्यक्तायां वाचि । तत्र प्रायेणाङ्पूर्वोऽयं दर्शनार्थोऽपि । निमन्त्रणे[2] लिङ् । [3]अयमनुदात्तोऽनुदात्तेत् । उपैर्त । ईर गतौ । कम्पने च द्रुमे[4] । अस्माल्लङ् ॥

पुरावलोकनव्याजेन भक्तानुग्रहार्थं प्रस्थितस्य तस्य प्रवृत्तिमाह—

**ईड्योऽयमीशः समुपास्तिशीलै-**
**राशासितः पीतपटीं वसानः ।**
**स्वीयैश्चकंसे कशनीयकासी**
**रमोष्ठनिंसी नतचित्तनिञ्जी ॥ ४५ ॥**

अयमीशः पीतपटीं वसानः तदानीं विशेषरम्यां परिदधानः सन् स्वीयैः चकंसे संचरितवान् । पीतपटीं वसान इत्यनेन मनोहरत्वमुक्तम्[5] । कीदृशः[6] । ईड्यः स्तुत्यः । समुपास्तिशीलैः[7] समीचीनामुपास्तिं ध्यानं शीलयन्ति अभ्यस्यन्ति [8]ये तैः । आशासित इष्टः । [9]कशनीयकासी । कशनीयान् शासनीयान् कसितुं शासितुं शीलं यस्य सः । [10]रमोष्ठनिंसी । रमाया ओष्ठं निंसितुं चुम्बितुं शीलं यस्य सः । [11]नतचित्तनिञ्जी । नतानां चित्तं निञ्जयितुं शोधयितुं शीलं यस्य सः ॥

ईड्य इति । ईड स्तुतौ । ण्यत् । [12]ईश इति । [13]ईश ऐश्वर्ये । पचाद्यचि ईशः । समुपास्तीति । आस उपवेशने । उपपूर्वत्वात् सेवार्थत्वम् ।

---

1 K2 adds अस्मात् before.
2 K2.5.6 निमन्त्रणार्थे.
3 All MSS. other than K2 om. this sentence.
4 ईर् इ्ल कम्पगत्योः—*KK*. 262.
5 K2 मनोहरत्वप्रकाशनमुक्तम्.
6 K2 adds इत्यत्राह.
7 K1.3 E insert आशासितः between शीलैः and समीचीनां.
8 K2 इति तथा for ये.
9,10,11 K1.3 E om. these words.
12 K1.3 om. ईश....इति.
13 K2.5.6 om. ईश....ईशः.

[1]क्तिन् । आशासितः । [2]आङः शास इच्छायाम् । उदिदित्येके । कर्मणि क्तः । वसानः । **वस** आच्छादने । शानच् । चकंसे । **कसि** गति-शासनयोः । कश इत्येके । कस इत्यन्ये । कंसेर्लिट् । कशनीयकासी । [3]कशेरनीयर् । कसेर्णिनिः । रमोष्ठनिंसी । **णिसि** चुम्बने । णिनिः । चित्तनिञ्जी । **णिजि** शुद्धौ । अस्माण्ण्यन्ताण्णिनिः ॥

भगवद्दर्शनेन पौराणां स्वस्ववासनानुरूपं विकारं वक्तुमाह—

**शिञ्जानपिञ्जानसुवर्णभूषा-**
**संपृञ्जितो वृज्यविवृञ्जिसेव्यः ।**
**पृक्ताग्रजः पृञ्जितगोपसूनु-**
**र्दृष्टोऽब्धिशायी स जनैर्युवद्भिः ॥ ४६ ॥**

अब्धिशायी स पृक्ताग्रजः संयुक्ताग्रजः पृञ्जितगोपसूनुः संयुक्त-गोपबालश्च सन् युवद्भिः कौतुकातिशयात् तत्र[4] मिश्रीभवद्भिर्जनैर्दृष्टः । आसीदिति शेषः । कीदृगित्याह[5]— शिञ्जानाभिः अव्यक्तशब्दं कुर्वाणाभिः पिञ्जानाभिः वर्णाधिक्येन पिङ्गलीभवित्रीभिः[6] सुवर्णभूषाभिः संपृञ्जितः पिङ्गलीभूतो वृज्यविवृञ्जिसेव्यः वर्जनीयवर्जनशीलैः सद्भिः सेव्यः ॥

---

1 K2 adds अस्मात् before.

2 The editor of E emends आङः श(ा)स इच्छायाम् into आङ् शासु इच्छायाम्, although the statement उदिदित्येके makes it clear that the reading cannot be शासु; also the form आशासित cannot be got if the root is उदित्.

3 K2 कशिकस्योरनीयर्णिन्यौ for कशे....णिनिः.

4 K2 तत्र तत्र.

5 K2 इत्यत्राह for इत्याह.

6 K2 भवन्तीभिः.

शिञ्जानपिञ्जानेति । [1]शिजि अव्यक्ते शब्दे । [2]पिजि वर्णे । [3]पिङ्गत्वं तत् । सम्पर्चन इत्येके । अवयव इत्यन्ये । अव्यक्ते शब्द इत्यपरे । पृंजि इत्यप्येके । शिञ्जिपिञ्ज्योः शानच् । सम्पृञ्जितः । पृञ्जेः[4] कर्तरि[5] क्तः । वृज्यविवृञ्जीति । वृजी वर्जने । [6]इदिदिति केचित् । तस्मात् क्यप् । इदित्त्वपक्षे णिनिः । पृक्तेति, पृञ्जितेति । पृजी सम्पर्चने । इदिदिति [7]केचित् । द्वयोः कर्मणि क्तः । ईरादय उदात्ता अनुदात्तेतः । सूनुः । षूङ् प्राणिगर्भविमोचने । 'सुवः कित्' [उण्.३.३५] इति नुः । अब्धिशायी । शीङ् स्वप्ने । उदात्तावात्मनेभाषौ । [8]शीङो णिनिः । युवद्भिः । यु मिश्रणे । अमिश्रणेऽप्येके[9] । शता ॥

अत्यन्तभक्तानामवस्थामाह—

**केऽप्यल्परावं नुनुवुः खलेषु**
**क्षुरक्ष्णुतात्मानममुं स्नुतास्राः ।**
**सोऽनूर्णतोऽद्यौज्ज्ञनसुत् कुवत्या**
**काञ्च्येव कामं स्तुवतां ब्रुवाणः ॥ ४७ ॥**

केऽपि अमेयभाग्या अमुं स्नुतास्राः स्नुतो भक्तिक्लिन्नहृदयतया स्रुतो बाष्पप्रवाहो येषां तादृशाः । अत एव गद्गदेन [10]अल्पो रावो यस्मिंस्तथा नुनुवुः तुष्टुवुः । कीदृशम् । खलेषु [11]दुर्जनेषु क्षुरवत् क्ष्णुतः तेजितः

---

1 K2.5 शिञ्जि.
2 K5 पिञ्जि.
3 E पिङ्गलत्वं.
4 K2 inserts वर्णार्थस्य between पृञ्जेः and कर्तरि.
5 K2 कर्मणि.
6 K2.5.6 इदिदित्येके । द्वौ सम्पर्चने इत्यन्ये । वृजेः क्यप्, वृञ्जेर्णिनिः for इदिदिति… णिनिः.
7 K2 एके for केचित्.
8 K2.5.6 om. शीङो णिनिः.
9 K2 अपीत्येके for अप्येके.
10 K3 अल्परावः.
11 K5.6 om. this word.

तीक्ष्णः आत्मा मनो यस्य तम्। [1]भगवतो भक्तेषु कृपातिशयमाह— सः अनूर्णतः अनाच्छन्नस्वरूप एव आत्मानं प्रकाशयन्[2]। कुवत्या क्वणन्त्या काञ्च्या स्तुवतां कामम् इष्टं युष्माकं भवतु इति ब्रुवाण इव अद्यौत् तेषामभिमुखमगच्छत्। [3]जनान्[4] तत्तत्कर्मसु सौति प्रेरयतीति जनसुत्[5]। ईश्वर इति वा॥

· रावेति। [6]रु शब्दे। 'कृत्यल्युटः'[7]—[ ३.३.११३ ] इति बाहुलकात् घञ्। नुनुवुः। णु स्तुतौ। लिट्। क्षुरेति। टुक्षु शब्दे। 'ऋज्रेन्द्र'—[उण्. २.२८] इत्यादिना रनि निपातितः। क्षौति वपनकाले कृदिति स्वनतीति क्षुरः। क्ष्णुतेति। क्ष्णु तेजने। कर्मणि क्तः। स्नुतेति। ष्णु प्रस्रवणे। कर्तरि क्तः। यौत्यादय उदात्ताः परस्मैभाषाः। अनूर्णुत इति। ऊर्णुञ् [8]छादने। उदात्त उभयतोभाषः। कर्तरि क्तः। 'वाच्य ऊर्णोर्णुवद्भावः' इति णुधातुवदेकाच्त्वादनिट्त्वम्। अद्यौत्। द्यु अभिगमने। लङ्। 'उतो वृद्धिः—' [ ७.३.८९ ] इति वृद्धिः। जनसुत्। षु प्रसवैश्वर्ययोः। [9]प्रसवोऽनुज्ञा। 'या [10]लीढा श्रवसापि सौति महतीमौत्सुक्यदुःखासिकाम्' इति प्रयोगादुत्पादनमपि प्रसवः। तस्मात् क्विप्। कुवत्या। कु शब्दे। [11]शतरि ङीप्। अनुदात्ताः परस्मैभाषाः। स्तुवताम्। ष्टुञ् स्तुतौ। शता। ब्रुवाणः। ब्रूञ् व्यक्तायां वाचि। शानच्। अनुदात्तावुभयतोभाषौ॥

---

1 K2 om. this word.
2 K2 adds सन्.
3 K2.5.6 add जनसुत् before.
4 K2.5.6 add लोकान्.
5 K1 adds जनानां सुत्.
6 K1.2 om. रु शब्दे.
7 E gives the full sūtra by adding बहुलम्.
8 E आच्छादने.
9 K2.5 6 om. प्रसवो····तस्मात्.
10 E पीडा for लीढा.
11 K2 शत्रन्तात्.

पुरान्तर्भागं गतस्य महामार्गप्राप्त्या सर्वसुकृतिजनानुग्रहमाह—

इत्यः स्वधीतोपनिषद्भिरेषा-
मधीत्यरूपः स वियन् क्रमेण ।
[1]इयज्ञनं राजपथं समायाद्
वाताकुलोद्धातपताकमीशः ॥ ४८ ॥

स ईशो वियन् संचरन् क्रमेण राजपथं समायात् प्राप । कीदृशः[2] । स्वधीतोपनिषद्भिः वेदान्तपारगैः इत्यः प्राप्तुं शक्यः । एषां ज्ञानिनाम् अधीत्यं स्मरणीयं रूपं यस्य सः । कीदृशं राजपथम्[3] । [4]इयज्जनम् इयन्तः [5]इतस्ततो गच्छन्तो जना यस्मिंस्तम् । तथा वातेन आकुला उद्धाताः पताका यस्मिंस्तम् ॥

इत्य इति । इण् गतौ । 'एतिस्तु—'[३.१.१०९] इति क्यप् । स्वधीतेति । इङ् अध्ययने । कर्मणि क्तः । अधीत्येति । इक् स्मरणे । 'इण्वदिक इति वाच्यम्'[6] इति क्यप् । वियन् । वी [7]गतिप्रजनकान्त्यसनखादनेषु । जन्मोपक्रमत्वात् गर्भग्रहणं प्रजनः । शता । इयदिति । [8]वी ई इति प्रश्लेषादीधातोः शता । सामायात् । या प्रापणे । इह प्रापणं गतिः । लङ् । वातेति । वा गतिगन्धनयोः । 'गन्धनं सौरभ्यकरणम्' इति सहस्रनामभाष्ये[9] ।

1 E इयञ्जनं.
2 K2 कीदृगीशस्तत्राह for कीदृशः.
3 K2 adds तत्राह.
4 E इयञ्जनम्.
5 K1.2 E ततस्ततो.
6 Vār. under 2.4.45.
7 E inserts व्याप्ति between गति and प्रजन.
8 K1.2 विई.
9 Vide *Sahasranāmabhāṣya* of Śaṅkara under the name वायुः– वाति गन्धनं करोतीति. What is given here is the sense of this statement.

'अर्दनं हिंसनं च गन्धनम्' इति लीलाशुकः[1] । उद्भातेति । भा दीप्तौ । द्वयोः कर्तरि क्तः ॥

भगवद्दर्शनोत्सुकानां नारीणामवस्थामाह [2]चतुर्भिः :—

स्नान्त्यस्तदा श्राणमुपाश्य चान्नं
निद्रां गताः प्सातिपरास्तथान्याः ।
पान्त्यः शिशून् धान्यधनानि रान्त्यो
लान्त्यश्च काश्चित् कुसुमानि दान्त्यः ॥ ४९ ॥

[3]ख्यान्त्यः कथाः प्राणमुदां पतीनां
निर्मान्त्य इष्टानि चटून् वचत्यः ।
नार्यो विदित्वोपगमं मुरारे-
रासन् गता राजपथं सुमृष्टम् ॥ ५० ॥

तदा नार्यो मुरारेः उपगमं विदित्वा सुमृष्टं सम्यक्शोधितं राजपथं गता आसन् । [4]स्नान्त्यः स्नानं कुर्वत्यः । अन्याः श्राणं पक्वमन्नम् उपाश्य भुक्त्वा निद्रां गताः । तथा प्सातिपरा भोजनपराः । शिशून् पान्त्यो रक्षन्त्यः । धान्यधनानि रान्त्यः तत्तज्जनेभ्यो [5]प्रयच्छन्त्यः । लान्त्यः तान्येव तेभ्य आददानाश्च । काश्चित् कुसुमानि दान्त्यः लुनत्यः । कथाः [6]ख्यान्त्यः कथयन्त्यः । प्राणमुदां पूर्णहर्षाणां[7] पतीनाम् इष्टानि निर्मान्त्यः

---

1 In the printed editions of the *Puruṣakāra* we get मर्दनं for अर्दनम्—'गन्धनं मर्दनं हिंसा' (vide *Puruṣakāra* under *Daiva* 10).

2 E चतुर्दशभिः.

3 D1 K3 खान्त्यः.

4 K2.5.6 add कीदृश्यो नार्यः तदाह before.

5 E यच्छन्त्यः

6 K3 खान्त्यः.

7 K2.5.6 मुदां for हर्षाणां.

कुर्वाणाः । चटून् प्रियवाक्यानि वचत्यः भाषमाणाश्च । एवं तत्तत्प्रवृत्तिं कुर्वाणाः ॥

स्नान्त्य इति । ष्णा शौचे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' [७.१.८०] [1]इति नुम् । श्राणम् । श्रा पाके । पाकोऽत्र विक्लित्तिः । कर्तरि क्ते यण्वत्त्वान्नत्वम् । निद्राम् । द्रा [2]कुत्सितायां गतौ । सा च पलायनस्वापौ । स्वापे निपूर्वः । 'आतश्चोपसर्गे' [३.३.१०६] इत्यङ् । प्साति । प्सा भक्षणे । क्तिन् । पान्त्यः । रान्त्यः । लान्त्यः । दान्त्यः । ख्यान्त्यः । पा रक्षणे । रा दाने । ला आदाने । द्वावपि दानार्थावित्येके । दाप् लवने । ख्या प्रकथने । [3]क्शा इत्यपि केचित् । एभ्यः[4] शतरि ङीप् । प्राणेति । प्रा पूरणे । कर्तरि क्ते नत्वम् । निर्मान्त्यः । मा माने । मानमिहान्तर्भावः । [5]निष्पूर्वत्वादर्थभेदः । शतरि ङीप् । वचत्यः । वच परिभाषणे । शतरि ङीपि सत्यकाराभावाद् 'आच्छीनद्योः' इति नुम् न । इणादयोऽनुदात्ताः परस्मैभाषाः । इङ् त्वात्मनेपदी । विदित्वा । विद ज्ञाने । क्त्वा । आसन् । अस भुवि । लङ् । सुमृष्टम् । मृजू शुद्धौ । [6]शोधना सा । कर्मणि क्तः ॥

**विलम्बहेतोः समरोददन्या**
**विलोक्य सुप्ता इव तस्थुरन्याः ।**
**उदश्वसन् प्राणमिवाप्य काश्चिद्**
**दृष्ट्वा सलीलं मृदु जक्षतं तम् ॥ ५१ ॥**

---

1 K1.3.5.6 om. इति नुम्.

2 E कुत्सायां.

3 K1.3.4 E क्ष्ना.

4 K2 adds पञ्चभ्यः.

5 K2.5.6 तेनाकर्मकत्वेऽपि निष्पूर्वत्वात् सकर्मकत्वात् शतरि ङीप्.

6 K2.5 om. शोधना सा.

अन्या मृदु मन्दं जक्षतं हसन्तं सलीलं तं दृष्ट्वा विलम्बहेतोः पूर्वमेव दर्शनाभावेन हेतुना समरोदत्। अन्या विलोक्य सुप्ता इव तस्थुः [1]स्तब्धाः सत्य इव तस्थुः। काश्चित् प्राणम् आप्य लब्ध्वा इव उदश्वसन्। उच्छ्वासमकुर्वन्॥

समरोददिति[2]। रुदिर् अश्रुविमोचने। लङि 'अड् गार्ग्यगालवयोः' [७.३.९९] इत्यडागमः। विदादय उदात्ता उदात्तेतः। सुप्ताः। **ञि ष्वप** शये। 'हलन्त्यम्' [१.३.३] इतीत्त्वप्रसङ्गात् 'ञि ष्वप् शये' इत्यपपाठः। अस्मात् कर्तरि क्ते 'वचिस्वपि'—[६.१.१५] इत्युत्वम्। उदश्वसन्। **श्वस** प्राणने। लङ्। प्राणम्। **अन** च। [3]प्रपूर्वाल्ल्युट्[4]। जक्षतम्। **जक्ष** भक्षहसनयोः। शतरि [5]'नाभ्यस्ताच्छतुः' [७.१.७८] इति नुमभावः। रुदादिपञ्चकं गतम्॥

**तं जाग्रतं दीनदरिद्रपोषे**
**चकासतं शासतमप्रशान्तान्।**
**देवं स्फुरद्दीधितिमम्बुजाक्ष्यो**
**वेव्यानमालोक्य विमोहमापुः॥ ५२॥**

अम्बुजाक्ष्यो वेव्यानं गच्छन्तं तं देवमालोक्य विमोहमापुः। कीदृशम्। दीनदरिद्रपोषे जाग्रतम्। दीनानामनाथानां दरिद्राणां च पोषणे वर्धने[6] जाग्रतम् उन्निद्रम्। चकासतं स्वतः शोभमानम्।

---

1 K2 om. स्तब्धाः.......तस्थुः.
2 K2 om. इति.
3 E प्रपूर्वत्वाल्ल्युट्.
4 The suffix ल्युट् is inapplicable here. It is better to derive with घञ् by the sūtra हलश्च following *MDV*.
5 K2.5.6 नाभ्यस्तादिति.
6 E adds च.

अप्रशान्तान्। पर्युदासे नञ्। शासतं शिक्षयन्तम्। स्फुरद्दीधितिं प्रसरत्कान्तिम्॥

जाग्रतमिति। **जागृ** निद्राक्षये। शता। दरिद्रेति। **दरिद्रा** दुर्गतौ। कः। चकासतम्। **चकासृ** दीप्तौ। शासतम्। **शासु** अनुशिष्टौ। विविच्य ज्ञापनं तत्। द्वयोः शता। प्राग्वन्नुमभावः। [1]श्वसादय उदात्ताः परस्मैभाषाः। दीधितिम्। **दीधीङ्** दीप्तिदेवनयोः। देवनं क्रीडाविजिगीषादि। अस्मात् क्तिनि ग्रहादित्वादिट्[2]। वेव्यानम्। **वेवीङ्** वेतिना तुल्ये। 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्युक्तेन वेतिना [3]तुल्येऽर्थ इत्यर्थः। अस्माच्छानच्॥

**कदा न्वहं सस्मि समं रतान्ते**
**प्रसंस्ततानेन वशानुगेन।**
**इत्यादि संबोभुवतोऽभिलाषां-**
**स्ता निह्नुवाना ददृशुस्तमीशम्॥ ५३॥**

ताः 'अहं रतान्ते प्रसंस्तता निद्रां गतेन वशानुगेन स्वाधीनतां प्राप्तेन अनेन सह कदा नु सस्मि स्वपिमि' इत्यादि संबोभुवत एवमाद्यहमहमिकया पुनः पुनर्जायमानान् अभिलाषान् निह्नुवानाः छादयन्त्यः सत्यः तमीशं ददृशुः॥

सस्मीति। **षस** [4]**षस्ति** स्वप्ने। [5]ससेर्लट्। प्रसंस्तता। [6]संस्तेः शता। इदित्त्वात् सकारात्पूर्वं नुम्। वशेति। **वश** कान्तौ। कान्तिरिच्छा।

---

1 K2 om. this sentence.
2 Vide Bhoja sūtra cited in *PS*. under 3.3.96—ग्रहस्निहकुचपठवदभणदीधीमेधादिभ्यः क्तेरिट्.
3 K2 समे for तुल्ये.
4 E सस्ति.
5 K2.5.6 षसेः for ससेः.
6 K2.5.6 सस्तेः for संस्तेः,

'वशिरण्योरब्वाच्यः'[1] इत्यप्। षसादय उदात्ता उदात्तेतः। संबोभुवत इति। **चर्करीतं च** इति भुवो यङ्लुकि शब्लुक्। परस्मैपदे ततः शता। निह्नुवानाः। **ह्नुङ्** अपह्नवे। शानच्। अनुदात्त आत्मनेभाषः। लुग्विकरणं समाप्तम्॥

[इत्यदादिगणः]

[जुहोत्यादिगणः]

एवं रागाकुलासु स्त्रीषु भगवतो वृत्तिमाह—

**जुह्वत्प्रियो भीरुजनं ह्रियार्तं**
**पिप्रत् कृपाभारभृतैरपाङ्गैः।**
**अमेयधामा स जहेऽघहानिं**
**ददज्जनेभ्यो मुदमादधानः॥ ५४॥**

जुह्वत्प्रियः स जहे। जुह्वतामग्निकर्मानुष्ठातॄणां प्रियः [2]ते प्रिया वा यस्य, स कृष्णो राजमार्ग एव किंचित् संचरितवान्। कीदृशः। कृपाभारेण भृतैः पूर्णैरपाङ्गैः भीरुजनं पिप्रत् संकटात् पालयन्, [3]मुदं पूरयंश्च। ह्रिया लज्जया आर्तं व्याकुलं स्त्रीजनम्। जनेभ्यः भक्तजनेभ्यः अघहानिं दुरितक्षयं ददत् प्रयच्छन्। मुदम् आनन्दातिशयम् आदधानश्च॥

जुह्वदिति। हु [4]दानादानयोः। प्रीणनेऽपीति भाष्ये[5]। दान-

1 Vār. under 3.3.58.
2 K1.3 E om. ते........यस्य.
3 K1.3 E om. मुदं पूरयंश्च.
4 E दानादनयोः.
5 Vide *Mahābhāṣya* under 2.3.3—जुहोतिश्च प्रीणात्यर्थे, तद्यथा—यवाग्वाग्निहोत्रं जुहोति, अग्निं प्रीणाति.

मग्न्यादौ प्रक्षेपः तन्त्रेण। शतरि [1]'नाभ्यस्ताच्छतुः' [७.१.७८] इति नुमभावः। भीरु इति। ञिभी भये। 'भियः क्रुक्लुकनौ' [३.२.१७४] इति क्रुः। ह्रिया। ह्री लज्जायाम्। भावे क्विप्। ह्रादयोऽनुदात्ताः परस्मैभाषाः। पिप्रत्। पॄ पालनपूरणयोः। ह्रस्वान्त इत्येके। उदात्तः परस्मैभाषः। ह्रस्वान्तस्त्वनुदात्तः। शता। भारभृतैः। डुभृञ् धारण-पोषणयोः। टु भृञ् इति द्रुमे[2]। कर्मणि घञ्। क्तश्च। अनुदात्त उभयतोभाषः। अमेयेति। माङ् माने शब्दे च। 'अचो यत्' [३.१.९७]। जहे। ओ हाङ् गतौ। लिट्। भृञादित्रयं गतम्। अनुदात्तावात्मनेभाषौ। हानिम्। ओहाक् त्यागे। 'ग्लाम्ला—'[3] इति निः। अनुदात्तः परस्मैभाषः। ददत्। डु दाञ् दाने। शता। आदधानः। डु धाञ् धारणपोषणयोः। दानेऽपीत्येके। शानच्॥

मथुरां प्राप्तस्य भगवतः स्वज्ञातीनां [4]यादवानां प्रथमसंगममाह—

**प्रणेनिजद्भिर्मतिमर्थतत्त्वं**
**सुवेविजानैर्यदुभिः स विष्णुः।**
**घर्मोष्मभिस्तत्र समारताग्रे**
**नभस्तुरैस्तैः [5]प्रधनप्रवीणैः॥ ५५॥**

स विष्णुः तस्मिन् देशे तैः यदुभिः अग्रे समारत सङ्गतोऽभूत्। कीदृशैर्यदुभिः। मतिं प्रणेनिजद्भिः शुद्धां परिपुष्टां च कुर्वाणैः। अर्थतत्त्वं पुरुषार्थानां [5]सारासारत्वं सुवेविजानैः सुतरां विभजद्भिः।

1 K2 नाभ्यस्तादिति.
2 टुडुभृञ् भृतिपुष्ट्योः—*KK*. 69.
3 Vār. under 3.3.94.
4 K1 E यदूनां.
5 E प्रधने प्रवीणैः.
6 K1 E सारासारतत्त्वं.

घर्मोष्मभिः ग्रीष्मसदृशप्रतापैः नभस्तुरैः मेघवद्वेगवद्भिः । प्रधने युद्धे प्रवीणैः ॥

प्रणेनिजद्भिः[1] । **णिजिर्** शौचपोषणयोः । शता । सुवेविजानैः । **विजिर्** पृथग्भावे । शानच् । विष्णुः । **विष्लृ** व्याप्तौ । उदिदित्येके । [2]इरिदिति द्रुमे[3] । 'विषेः किच्च' [उण्. ३.३९] इति नुप्रत्ययः[4] । निजादयोऽनुदात्ताः स्वरितेतः । घर्मेति । **घृ** क्षरणदीप्त्योः । [5]'घर्मग्रीष्मः' [उण्. १.१३८] इति मनि[6] निपातितः । समारतेति । **ऋ** गतौ । [7]संपूर्वात् [8]'सर्तिशास्त्यर्तिभ्यश्च' [३.१.५६] इत्यङ् । 'समो गम्यृच्छि—' [१.३.२९] इति तङ् । [9]अनुदात्ताः परस्मैभाषाः । नभ इति । **भस** भर्त्सनदीप्त्योः । उदात्त उदात्तेत् । नञ्पूर्वात् क्विप् । [10]तुरैरिति । **तुर** त्वरणे । [11]उदात्त उदात्तेत् । 'इगुपध—' [३.१.१३५] इति कः । प्रधनेति । **धन** धान्ये । [12]अन्यमरणार्थादस्माद् घञर्थे कः । [13]अयमप्युदात्त उदात्तेत् । वृत् । जुहोत्यादयो वृत्ताः । श्लुविकरणं समाप्तम् ॥

[ इति जुहोत्यादिगणः ]

---

1 K1.3 add इति.
2 K2.5.6 द्रुमे त्विरिच्च.
3 विषिर् लिञौ उ व्याप्तौ—*KK*. 324-25.
4 K2.5.6 add वृत्.
5 K1.3.E om. घर्म .. तितः.
6 According to Uṇādipāṭha the pratyaya is मक्.
7 K1.3 om. सं ...... तङ्.
8 E om. सर्ति ...... इत्यङ्.
9 K2.5.6 om. अनु भाषा.
10 K1.3 तुरेति.
11 K2.5.6 om. उदा ...... त्.
12 K2 मरणाद्यर्थात् for अन्य .. स्मात्.
13 K2 om. अय ....... वृत्ताः.

[ दिवादिगणः ]

अथ रजकवधप्रसङ्गमाह—

**दीव्यन् देवो विचित्रस्युवमथ रजकं प्रैक्षतास्रूतमग्रे[1]**
**ष्ठीव्यन्तं तत्र तत्र स्नुसितफलगणान्[2] क्नोव्युषः प्योसहीनम् ।**
**तं प्लुष्यद्दृष्टिनृत्यद्रुषमपि च गतत्रासमुत्कुथ्यदङ्गं**
**पोथ्यं प्रोचे स्वरेण स्वजनविगुधितं क्षिप्यता पुष्पमाध्वीम्**
**॥ ५६ ॥**

अथ दीव्यन् गच्छन् देवः क्रीडादि कुर्वन् हरिरग्र [3]आस्रूतम् आगतं रजकं प्रैक्षत । कीदृक् देवः । क्नोव्युषः क्नसां कुटिलीभवतां [4]व्युषः दाहकः । कीदृशं रजकम् । विचित्रस्युवम् । नानारूपं सूचिकर्म कुर्वन्तम् । स्नुसितान् भक्षितान् फलगणान् प्योसहीनं विभागशून्यं यथा तथा तत्र तत्र ष्ठीव्यन्तं [5]ष्ठीवनं कुर्वन्तम् । प्योसहीनमिति रजकविशेषणं वा । अपि च पुष्पमाध्वीं क्षिप्यता निरस्यता स्वरेण तं प्रोचे । [6]कीदृशं तम् । प्लुष्यन्त्यां [7]ज्वलन्त्यां दृष्टौ नृत्यन्ती रुट् यस्य तम् । [8]गतत्रासं नष्टभयम् । उत्कुथ्यत् पूतीभवदङ्गं यस्य तम् । पोथ्यं [9]हिंसनीयम् । स्वजनेन विगुधितं परिवृतम् ॥

दीव्यन्निति । **दिवु** क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु । व्यवहारः उक्तिः [10]क्रयादिश्च । दिवि रैश्वर्यार्थ इति [11]देवतान्तादिसूत्रे

---

1 D1.2 K3 आस्यूतं K1 E आस्म्यूतं for आस्रूतं.
2 M1.2 गणं for गणान्.
3 K3 आस्यूतं, K1 E आस्म्यूतं.
4 K2.5.6 om. this word.
5 K5.6 निष्ठीवनं.
6 K2 om. कीदृशं तम्.
7 K2 दहन्त्यां for ज्वलन्त्यां, K5.6 om. this word.
8 All Mss. other than K2 om. गत ·· भयम्.
9 K2.5.6 हिंस्यम् for हिं··· म्.
10 K1 E क्रियादिश्च.
11 K2 om. देव····त्रे.

प्राह हरः[1]। [2]अस्मात् गत्यर्थे शता। [3]देव इति। क्रीडादौ पचाद्यच्। विचित्वस्युवम्। षिवु तन्तुसंताने। क्विपि ऊठ्। [4]आस्यूतम्। स्रिवु गतिशोषणयोः। कर्तरि क्ते 'ज्वरत्वरस्रिव्यवि' [६.४.२०] इत्यूठ्। ष्ठीव्यन्तम्। ष्ठिवु निरसने। आस्यान्निःसरणं तत्। शता। स्नुसितेति। [5]ष्णुस अदने। कर्मणि क्तः। [6]ष्णुसु निरसने इति [7]केचित्। क्न इति। क्नसु ह्वरणदीप्त्योः। क्विप्। व्युषः। व्युष दाहे। 'इगुपध—' [३.१.१३५] इति कः। प्योसेति। प्युस विभागे इत्येके। घञ्। प्लुष्यदिति[8]। प्लुष च। दाहे इति शेषः। [9]शता। नृत्यदिति। नृती गात्रविक्षेपे। [10]शता। त्रासेति। त्रसी उद्वेगे। घञ्। उत्कुथ्यदिति। कुथ पूतीभावे। [11]दुर्गन्धीभावस्तत्। शता। पोथ्यम्। पुथ हिंसायाम्। ण्यत्। विगुधितम्। गुध परिवेष्टने। कर्मणि क्तः। क्षिप्यता। क्षिप प्रेरणे। तच्च निरसनम्। शता। पुष्पेति। पुष्प विकसने। घञर्थे कः॥

**तिम्यन्मते स्तिम्यति नाम मन्मनः**
**स्तीम्यत्सु तद्व्रीलमृते वदाम्यहम्।**
**देहि प्रभोः प्रेष्य सुसोहनाय मे**
**जीर्णांशुकाय त्वमझीर्णमंशुकम्॥ ५७॥**

---

1 Vide *Padamañjarī* under 5.4.24—देवशब्दः पचाद्यचि ऐश्वर्यार्थाद्दिवेः साध्यः.
2 K2 om. अस्मात् गत्यर्थे.
3 K2.5.6 om. देव···दौ.
4 K3 आस्यूतं, K1 E आस्यूतं.
5 E ष्णुसु.
6 K1 ष्णसु, K2 ष्णुस.
7 K2 एके for केचित्.
8 K2.5.6 adds नृत्यदिति.
9 K2.5.6 om. शता·······दिति.
10 K2.5.6 add द्वयोः before.
11 K2.5.6 om. दुर्ग·········स्तत्.

हे तिम्यन्मते आर्द्रीभवद्बुद्धे रजक, मन्मनः स्तीम्यत्सु आर्द्रीभवत्सु स्तिम्यति आर्द्रीभवति नाम। तत् तस्मादहं व्रीलं लज्जामृते वदामि। हे प्रभोः प्रेष्य जीर्णांशुकाय भिन्नाम्बराय मे मह्यं सुसोहनाय सम्यक्तृप्त्यर्थम् अझीर्णं नवम् अंशुकं देहि। जीर्णांशुः क्षीणशोभः कायो यस्य तस्य [1]संबुद्धिर्वा॥

तिम्यदिति। **तिम ष्टिम ष्टीम** आर्द्रीभावे। **तीम** इत्यप्येके। तिमेः शता। स्तिम्यति। [2]ष्टिमेर्लट्। स्तीम्यत्सु। सन्धिसाम्यात् तीम्यत्स्विति वा छेदः। [3]ष्टीमितीम्योः शता। व्रीलम्। **व्रीड** चोदने। [4]चोदनं लज्जा। प्रेरणे च द्रुमे[5]। घञ्। प्रेष्य। **इष** गतौ। ण्यत्। सुसोहनाय। **षुह** चक्यर्थे। स च तृप्तिः। ल्युट्। सह इत्यप्येके। जीर्ण इति। झीर्ण इति। **जॄष् झॄष्** वयोहानौ। द्वयोः कर्तरि क्तः। दिवादय [6]उदात्तेतः उदात्ताः क्षिपिवर्जम्॥

[7]रजकवाक्यमाह—

**किं सूयसे गिरमदून नितान्तदीना-**
**मुड्डीनकाकसम भूपतिधीनमेतत्।**
**मीयस्व रीणनय मा क्षितिपालयेऽस्मिन्**
**व्रीयस्व धार्ष्ट्यमिति दुर्मतिरीशमूचे॥ ५८॥**

हे अदून अपीडित, उड्डीनकाकसम, त्वं [8]किं नितान्तदीनां गिरं सूयसे उत्पादयसि। एतत् त्वया याच्यमानमंशुकं[9] भूपतिधीनं [10]भूपाधारं

---

1 K2 हे स इति वा for सं...र्वा.
2 K5.6 स्तिमेर्लट्.
3 K2.5.6 स्तीमतीम्योः.
4 K2 लज्जा तत् for चो...ज्जा.
5 व्रीड् यञि क्षिपि लज्जे— *KK*. 166–67.
6 E transposes उदात्तेतः and उदात्ताः.
7 K2.5.6 om. रजक···ह.
8 E om. किं.
9 K2 वासः for अंशुकं.
10 K2 भूपत्याधारं.

तदायत्तम् । हे रीणनय गतविनय । अस्मिन् क्षितिपालये राजगृहे मा मीयस्व मृतो भव । धार्ष्ट्यं व्रीयस्व छादय । दुर्मतिरिति ईशमूचे ॥

सूयसे इति[1] । **षूङ्** प्राणिप्रसवे । प्राणिग्रहणमतन्त्रम् । अयमसू-यार्थोऽपि । अस्माल्लट् । अदून । **दूङ्** परितापे । स्वादय ओदित इति ओदित्त्वान्निष्ठानत्वम्[2] । दीनाम् । **दीङ्** क्षये । उड्डीनेति । **डीङ्** [3]विहायसां गतौ । गतिमात्रे च [4]द्रुमे[5] । धीनम् । **धीङ्** आधारे । एषु कर्तरि क्तः । मीयस्व । **मीङ्** हिंसायाम् । हिंसात्र मृतिः । लोट् । रीणेति । **रीङ्** स्रवणे । प्राग्वत् क्तः । आलये । **लीङ्** श्लेषणे । 'एरच्' [३.३.५६] । व्रीयस्व । **व्रीङ्** । वृणोत्यर्थे । छादनं परिग्रहो वा तत् । लोट् । स्वादय ओदितः ॥

**आपीय तद्गिरममाननिरीतरोषः**
**प्रीतिं श्यतोऽस्य स करेण शिरोधिमच्छात् ।**
**धर्मावसायजनदः खलु योऽजनिष्ट**
**दीप्तोष्मपूर्णभुजतूर्णविघूर्णवैरी ॥ ५९ ॥**

स तद्गिरम् आपीय[6] श्रुत्वा अमाननिरीतरोषः अमानमनवधि यथा तथा निरीतो निर्गतो रोषो यस्य तादृशः सन् स्वस्य प्रीतिं श्यतः तनूकुर्वतः वासोदानाभावेन नाशयतोऽस्य रजकस्य शिरोधिं करेण अच्छात् चिच्छेद । यः खलु धर्मावसायजनदो धर्मनाशकजनानामवखण्डयिता[7] सन् अजनिष्ट । दीप्तोष्मपूर्णेन भुजेन तूर्णं यथा तथा विघूर्णा हिंसिता वैरिणो येन सः ॥

---

1 K2 om. इति.
2 K2.5.6 om. निष्ठा.
3 E विहायसा गतौ.
4 All MSS. other than K2 om. द्रुमे.
5 ओ डी ङय गतौ, डी ङ्च नभो-गतौ—*KK*.52.
6 K2 inserts अनुभूय between आपीय and श्रुत्वा.
7 K2.5.6 खण्डयिता for अवखण्डयिता.

आपीयेति । **पीङ्** पाने । ल्यप् । अमानेति । [1]**माङ्** माने । ल्युट् । निरीतेति । **ईङ्** गतौ । कर्तरि क्तः । [2]प्रीतिमिति । **प्रीङ्** प्रीतौ । क्तिन् । अकर्मकोऽयम् । [3]षूङादय आत्मनेपदिनः [4]षूङ्दूङ्डीङ्वर्जमनुदात्ताः । श्यतः । **शो** तनूकरणे । शता । [5]'ओतः श्यनि' [७.३.७१] इति लोपः । अच्छात् । **छो** छेदने । लुङि 'विभाषा घ्राधेट्शाच्छासः' [२.४.७८] इति सिज्लुक् । [6]अवसायेति । **षो** अन्तकर्मणि । ['श्याद्व्यध'—(३.१.१४१) इत्यादिना णे 'आतो युक्'—(७.३.३३) इति युक् ।] जनद इति । **दो** अवखण्डने । क्विप् । श्यत्यादयोऽनुदात्ताः परस्मैपदिनः । अजनिष्ट । **जनी** प्रादुर्भावे । [7]अयमुत्पादनायामपि । लुङ् । [8]दीप्तेति । **दीपी** दीप्तौ । [9]पूर्णेति । **पूरी** आप्यायने । अकर्मकोऽयम् । द्वयोः कर्तरि क्तः । तूर्णेति । **तूरी** गतित्वरणहिंसनयोः । त्वरणमात्रे च द्रुमे[10] । अस्मात्[11] क्तः । विघूर्णेति । **घूरी गूरी** हिंसागत्योः । घूरेः कर्मणि क्तः ॥

**गूर्णोऽस्मिन्बहुजन्तुघूरिणि खले जूर्णैः शशंसे [12]नृभिः**
**शौरिः शूरकगर्वचूरणपरः संतप्यमानः सताम् ।**
**देवौघस्य तपन् भुवश्च पतिता वावृत्तभूमाप्यसौ**
**वृत्तक्लेशलवैरकाश्यत समं संवाश्यमानैः स्वकैः ॥ ६० ॥**

---

1 K1.3 om. माङ् माने.
2 K1.3 om. प्रीतिमिति.
3 K2.5.6 दीङादय.
4 K2.5.6 om. षूङ्दूङ्.
5 K2.5.6 om. ओतः···लोपः.
6 All MSS. other than E om. अव···र्मणि.
7 K2.5 6 om. अय·······मपि.
8 K2 दीप्तोष्मपूर्णेति.
9 K2 om. पूर्णेति.
10 In *KK.*, however, it is in Juhotyādigaṇa that we get this root in the sense of त्वरा; vide—तुर् यीङ् हिंसे च, तुर् लिर् वेगे (लि denotes the third conjugation).
11 K2.5.6 insert भावे between अस्मात् and क्तः.
12 M1.2 जनैः for नृभिः.

शौरिः अस्मिन् खले गूर्णे हिंसिते सति जूर्णैः वृद्धैः नृभिः जनैः शशंसे स्तुतः । बहुजन्तुघूरिणि[1] सर्वजन्तुहिंसाशीले[2] । कीदृशः शौरिः । शूरकगर्वचूरणपरः शूरकाणां हिंसकानां स्तंभनकर्तृणां च दर्पस्य दाहपरः । सतां संतप्यमान ईश्वरो देवौघस्य तपन् ईश्वरो भवन् भुवश्च पतिता ईशिता । इत्थंभूतोऽसौ वावृत्तभूमा [3]अपि छादितैश्वर्योऽपि सन् वृत्तक्लेशलवैः छादितक्लेशलेशैः[4] । अत एव संवाश्यमानैः 'जय केशवाच्युत' इति शब्दायमानैः स्वकैः समम् अकाश्यत दीप्तोऽभूत् ॥

गूर्णेति । गूरेः कर्मणि क्तः । [5]जन्तुघूरिणि । **घूरी जूरी** हिंसावयोहान्योः । घूरेर्णिनिः । जूर्णैः । जूरेः कर्तरि क्तः । शूरकेति । **शूरी** हिंसास्तम्भनयोः । ण्वुल् । चूरणेति । **चूरी** दाहे । ल्युट् । संतप्यमानः । **तप** ऐश्वर्ये वा । तपिरस्मिन्नर्थे वा तङ्श्यनौ प्राप्नोतीत्यर्थः । कोपे च द्रुमे[6] । शानच् । तपन् । तङ्श्यनोरभावे [7]शपि शता । पतिता । **पत** ऐश्वर्ये वा इत्येके । तस्मिन् पक्षे तृच् । वावृत्तेति । वृत्तेति । **वृतु** वरणे । केचित् पूर्वत्र वाग्रहणमस्यादिं कृत्वा '**वावृतु** वरणे' इत्याहुः । द्वयोः कर्मणि क्तः । [8]क्लेशेति । **क्लिश** उपतापे । घञ् । अकाश्यत । **काशृ** दीप्तौ । लङ् । संवाश्यमानैः । **वाशृ** शब्दे । शानच् । जन्यादय उदात्ता अनुदात्तेतः तपिस्त्वनुदात्तः ॥

---

1 E inserts सर्वजन्तुघूरिणि between घूरिणि and सर्व.
2 K2 adds खले.
3 E अविच्छादितैश्वर्यो, K2.5.6 om. अपि.
4 K3 लवैः for लेशैः.
5 K2 adds बहु before.
6 But what is found in *KK.* is तप् यौङ् दवैश्ययोः—(230).
7 E अपि.
8 K2.5.6 om. क्लेशेति....घञ्.

तन्मृष्यमाणास्त्वथ शुच्यदङ्गका
भृत्याः सुनद्धं बहुरक्तमंशुकम् ।
विसृज्य शप्यन्त इमं प्रदुद्रुवुः
कृष्णः प्रपेदे वसनान्यखेदवान् ॥ ६१ ॥

अथ भृत्याः तत् स्वामिवधादिकं मृष्यमाणाः सहमानाः सुनद्धं भस्त्रायां निधाय सम्यग्बद्धं बहु [1]अनल्पम् अंशुकं विसृज्य त्यक्त्वा इमं शप्यन्तो निन्दन्तः प्रदुद्रुवुः । शुच्यदङ्गकाः स्वेदादिभिः पूतीभवत्कुत्सिताङ्गाः । रक्तं कुसुम्भादिभिः कृतनानावर्णम् । कृष्णो वसनानि [2]अंशुकानि प्रपेदे उद्धृतवान् ॥

मृष्यमाणा [3]इति । **मृष** तितिक्षायाम् । शानच् । शुच्यदिति । **ई शुचिर्** पूतीभावे । [4]दुर्गन्धीभावस्तत् । शौचविशरणक्लेदेषु[5] च द्रुमे[6] । शता । द्वावुदात्तौ । सुनद्धम् । **णह** बन्धने । कर्मणि क्तः । रक्तम् । **रन्ज** रागे । कर्तरि क्तः । शप्यन्तः । **शप** आक्रोशे । शता । त्रयोऽनुदात्ताः । मृषादयः [7]पञ्च स्वरितेतः । प्रपेदे । **पद** गतौ । लिट् । खेदेति । **खिद** दैन्ये । घञ् ॥

प्राग्विद्यमानवसनेष्वधृतैकमीशो
बुद्ध्वा ददौ च रिपुयोधजयी[8] निजेभ्यः ।
कंसानुरोध्यणनहृन्मतिमद्युगर्च्यः
शेषं व्यसृज्यत पटौघमलिश्यमानम् ॥ ६२ ॥

---

1, 2 K2.5.6 om. this word.

3 K2 om इति.

4 K2.5.6 om. दुर्ग तत्.

5 K1.3 E क्लेश for क्लेद.

6 शुचिर् यञी शौचे विशरणे क्लेदे—*KK* 110.

7 K2 om. पञ्च.

8 K2.5.6 यौध.

ईशो विद्यमानवसनेषु अनर्घवस्त्रेषु [1]एकं प्राक् अन्येभ्यः पूर्वम् [2]अधृत परिहितवान्, बुद्ध्वा निजेभ्यो ददौ च। स्वीयानां तारतम्यमवगम्य दत्तवांश्च। शेषं पटौघ व्यसृज्यत त्यक्तवान्। कसानुरोध्यणनहृत् कंसानुवर्तिनाम् अणनहृत् प्राणहृत्। मतिमद्युगर्च्यः मतिमतां ज्ञानिनां युजां समाधिकर्तॄणाम्[3] अर्च्यः। अलिश्यमानम् अनल्पीभवन्तं पटौघम्॥

विद्यमानेति। **विद** सत्तायाम्। शानच्। बुद्ध्वा। **बुध** अवगमने। ज्वलादिगतबोधतिवदुद्बोधो ज्ञानं चार्थः। तस्मात् क्त्वा। [4]योधेति। **युध** संप्रहारे। अच्। कंसानुरोधीति। अनो **रुध** कामे। [5]अनुपूर्वो रुधिः कामेऽर्थे तङ्श्यनौ भजते। तस्मादत्र तु णिनिः। अणनेति। **अण** प्राणने। अन इत्येके। ल्युट्। मतीति। **मन** ज्ञाने। क्तिन्। युगिति। **युज** समाधौ। [6]अकर्मकोऽयमिति माधवः[7]। क्विप्। व्यसृज्यत। **सृज** विसर्गे। स चोत्पादनत्यागौ। लङ्। अलिश्यमानम्। **लिश** अल्पीभावे। शानच्। [8]पदादयोऽनुदात्तेतः अण्यतिवर्जमनुदात्ताः॥

**राध्यद्वेषगुणोऽथ वायकवराद्दैत्याविदेषोऽपुष-**
**च्छोषं तोषकृतोऽस्य दोषविततेराश्लिष्टलक्ष्मीस्तनः।**
**शक्यन् गर्वमशक्यमानमनसामास्विद्यदास्योऽक्रुधं**
**क्षुध्यद्भक्तदमाप मालिकवर शुद्धं स सिद्धेप्सितम्॥ ६३॥**

---

1 K3 om. एकं प्राक्.
2 K2.5.6 om. अधृत.
3 K2 adds च.
4 K2.5.6 यौधेति.
5 K2.5.6 om. अनु....तु.
6 K2 om. this sentence.
7 Vide *MDV*. सामधिश्चित्त-निरोधः, तेनायमकर्मकः.
8 E पदादयोऽनुदात्ताः अण्यतिवर्ज-मनुदात्तेतः.

अथ एषः दैत्यावित् दैत्यच्छेत्ता[1] वायकवरात् सौचिकश्रेष्ठात् तद्दत्तोष्णीषादिभिः राध्यद्वेषगुणः सिध्यन्मनोज्ञवेषः सन् तोषकृतः अस्य दोषवितते: [2]शोषं नाशम् अपुषत् अवर्धयत्। तदनन्तरं च स मालिकवरं [3]मालाकारश्रेष्ठम् आप। कीदृशः। अशक्यमानमनसाम् [4]असहमानमनसां गर्वं शक्यन् सहमानः। आस्विद्यदास्यः ईषत्स्विद्यन्मुखः। कीदृशं [5]मालिकवरम्। अक्रुधं क्रोधहीनम् क्षुध्यतां बुभुक्षमाणानां भक्तदम् [6]अन्नप्रदम्। शुद्धं सिद्धप्रार्थितं च ॥

राध्यदिति। **राधो**ऽकर्मकाद्वृद्धावेव। वृद्ध्यर्थ इव अकर्मकादेव राधेः श्यन्। अस्य तु सिद्धिद्रोहदैवपर्यालोचनादयोऽर्थाः। शता। दैत्यावित्। **व्यध** ताडने। तच्च प्रायेण विदारणपर्यन्तम्। क्विपि 'नहि वृति[7]—' [ ६.३.११६ ] इत्यादिना दीर्घः। अपुषत्। **पुष** पुष्टौ। अयमकर्मकोऽपि। इतो गणान्ताः पुषादयः। तेन 'पुषादिद्युतादि—' [३.१.५५] इत्यङ्। शोष तोष दोष इति। **शुष** शोषणे। **तुष** प्रीतौ। **दुष** वैकृत्ये। वैकृत्यं विकृतता। त्रयाणां घञ्। आश्लिष्टेति। **श्लिष** आलिङ्गने। कर्मणि क्तः। शक्यन् अशक्यमानेति। **शक** विभाषितो मर्षणे। विभाषित इत्युभयपदिनां पूर्वाचार्यसंज्ञा। शतृशानचौ। आस्विद्यदिति। ञि **ष्विदा** गात्रप्रक्षरणे। शता। अक्रुधम्। **क्रुध** कोपे। भावे क्विप्। क्षुध्यदिति। **क्षुध** बुभुक्षायाम्। शता। शुद्धम् सिद्धेति। **शुध** शौचे। **षिधु** संराद्धौ। संसिद्धिः सा। द्वयोः कर्तरि क्तः ॥

---

1 K2.5.6 छित् for छेत्ता.
2 K1.3 E om. शोषं.
3 K2 om. this word.
4 K2 om. अस····सां.
5 K2 मालिकम् for मालिकवरम्.
6 K2 अन्नदम्.
7 K2 adds वृषि.

**रद्धारये सोऽयमनश्वराय**
**तृप्यन्मना दृप्तजनद्रुहेऽस्मै ।**
**मुग्धस्मितस्नोहिमुखाय [1]मालां**
**स्निह्यन् ददौ सादरमस्तवीच्च ॥ ६४ ॥**

सोऽयमस्मै स्निह्यन् सादरं [2]मालां ददौ अस्तवीच्च। कीदृशाय। अनश्वराय नित्याय। मुग्धस्मितस्नोहिमुखाय मुग्धस्मितोद्गिरणशीलं मुखं यस्य तस्मै। रद्धारये निहतशत्रवे। दृप्तजनद्रुहे दुष्टजनहन्त्रे। तृप्यन्मनाः प्रीणितान्तरात्मा ॥

रद्धेति। **रध** हिंसासंराध्योः। संराद्धिः पाकः। कर्मणि क्तः। अनश्वराय। **णश** अदर्शने। 'इण्नशि—' [ ३.२.१६३ ] इति क्वरप्। तृप्यदिति। **तृप** प्रीणने। तच्च तृप्तिस्तर्पणं च। शता। दृप्तेति। **दृप** [3]हर्षणमोहनयोः। मोहनं गर्वः। मोचनयोरित्येके। कर्तरि क्तः। द्रुह इति। **द्रुह** जिघांसायाम्। क्विप्। मुग्धेति। **मुह** वैचित्ये। [4]अविवेकस्तत्। कर्तरि क्तः। स्नोहीति। **ष्णुह** उद्गिरणे। णिनिः। स्निह्यन्। **ष्णिह** प्रीतौ। शता। वृत्। विकल्पितेट उदात्तेतो रधादयो वृत्ताः ॥

**अशाम्यदात्मापि तमी नमामि**
**दमिप्रियं श्रान्तिहरं भवन्तम् ।**
**श्राम्यामि भोः क्षाम्य ममापराधं**
**क्लान्तं मनो माद्यति दर्शनात्ते ॥ ६५ ॥**

अहमशाम्यदात्मा अशान्तमना अपि त्वां नमामि। तमी त्वयि काङ्क्षाशीलः संसारेण पीडाशीलो वा। दमिप्रियं दमशीलानामिष्टम्। अहं

1 M1 K2 मालाः.
2 K2 मालाः.
3 E3 हर्ष for हर्षण.
4 K2 om. अवि····क्तः.

भ्राम्यामि अनवस्थितो भवामि ।। भवाब्धावित्यर्थात् । भो मम अनादरादिकमपराधं क्षाम्य क्षमस्व । क्लान्तं तवादर्शनात् पीडितं मनस्ते दर्शनात् माद्यति । श्रान्तिहरं संसरणदुःखनिरासकम् ॥

अशाम्यदिति । **शमु** उपशमे[1] । शतरि 'शमामष्टानाम्—' [७.३.७४] इति दीर्घः । तमीति[2] । **तमु** काङ्क्षायाम् । ग्लानावेव प्रयोगः । मुरारिस्तु [3]'द्रष्टुं बहूत्ताम्यति' इति काङ्क्षायामेवाह[4] । 'शमित्यष्टाभ्यः' [३.२.१४१] इति घिनुण् । दमीति । **दमु** उपशमने । अयमकर्मकोऽपि । प्राग्वत् घिनुण् । श्रान्तीति । **श्रमु** तपसि खेदे च । क्तिन् । भ्राम्यामि । **भ्रमु** अनवस्थाने । अयमकर्मकः सकर्मकश्च । लट् । क्षाम्येति । **क्षमू** सहने । अयमषित् । लोट् । क्लान्तम् । **क्लमु** ग्लानौ । कर्तरि क्तः । माद्यति । **मदी** हर्षे । हर्षोऽत्र गर्वः । [ लट् ] । वृत् । शमादयो वृत्ताः ॥

**अस्तायासविजस्तविश्वतसनो निर्दस्तवासैर्नुतो**
**वेदव्योषकृदप्लुषो बिसितधीकुस्यज्जनांहोबुसम् ।**
**मुस्तामोष्यमसः किटिस्त्वमसमो [5]लुव्यन् खलानोकसो**
**भृश्यद्भ्रंशनवर्शकाकृशदयस्तृष्णाहरो हृष्य मे ॥ ६६ ॥**

त्वं बिसितधीकुस्यज्जनांहोबुसम् अप्लुषः । बिसितया प्रेरितया धिया कुस्यतां संश्लिष्यतां जनानामंहोरूपं बुसमप्लुषः[6] दग्धवानसि । कीदृशः । अस्तायासं त्यक्तप्रयासं यथा तथा विजस्तविश्वतसनः मोक्षितलोकक्षयः । निर्दस्तवासैः । निर्दस्तः उपक्षीणः वासः स्तम्भः अनम्रताभावः येषां

1 K1 उपशमने.
2 K1.3 om. इति.
3 K2.5.6 om. द्रष्टुं·······इति.
4 Vide *Anargharāghava*, *V*. 46.
5 E लुट्यन्.
6 K2 om. अप्लुषः.

तैः । नुतः । वेदव्योषकृद् व्यासरूपेण वेदानां विभागकृत् । अमसोऽपरिमाणः [1]परिणामहीनो वा । त्वं मुस्तामोषी मुस्ताखण्डी किटिः वराहरूपो असमः परिणतवानसि । खलान् ओकसः [2]स्वस्थानात्[3] [4]लुट्यन् क्षोभयन् । भृश्यद्भ्रंशनवर्शकाक्रुशदयः भृश्यताम् अधःपततां स्वभक्तानां भ्रंशस्य अधःपतनस्य वर्शका छादयित्री अक्रुशा दया यस्य स ताद्दशस्त्वं[5] मे हृष्य तुष्टो भव ॥

अस्तेति । **असु** क्षेपणे । कर्मणि क्तः । आयासेति । **यसु** [6]प्रयत्ने । घञ् । विजस्तेति । **जसु** मोक्षणे । कर्मणि क्तः । तसनेति । **तसु** उपक्षये । ल्युट् । निर्दस्तेति । **दसु** च । कर्मणि क्तः । वासेति । **वसु** स्तम्भे । बसु इत्येके । वसेर्घञ् । [7]शमादयः [8]क्षमिमदिवर्जमुदितः । व्योषेति । **व्युष** विभागे । व्युस इति चैके । व्युषेर्घञ् । अप्लुष इति । **प्लुष** दाहे । लुङि पुषाद्यङ् । बिसितेति । **बिस** प्रेरणे । कर्मणि क्तः । कुस्यदिति । **कुस** [9]श्लेषणे । शता । बुसम् । **बुस** उत्सर्गे । इगुपधात् कः । मुस्तेति । **मुस** खण्डने । 'व्रातालातसुतपुतचित्तनिमित्तमुस्त—' इत्यादिना भोजेन क्ते निपातितः[10] । मोषी । **मुष** इत्येके । णिनिः । अमसः । **मसी** परिणामे । परिमाणे इति द्रुमे[11] । [12]पचाद्यच् । असम इति । 'समी परिणामे' इति दन्त्यादिरित्येके । तस्माल्लुङि पुषाद्यङ् । [13]लुट्यन् ।

---

1 E परिमाणहीनो.
2 K1.3 om स्व.
3 E स्थानान्.
4 E लुठ्यन्.
5 K3 om. त्वं.
6 K2.3 यत्ने.
7 K2.5.6 om. शमा दितः.
8 K3 om. मदि, E शमिदमिवर्जं but the editor emends दमि into मदि.
9 E संश्लेषणे.
10 Vide *SKĀ*. 2.2.134.
11 मसिर् यई परिमाणे परिणामे—*KK*. 339.
12 E om. पचाद्यच्.
13 E लुठ्यन्.

[1]**लुट** विलोडने। शता। ओकसः। **उच** समवाये। 'ओक उचः के' [७.३.६८] इति निपातितः[2]। भृश्यद्भ्रंशनेति। **भृशु भ्रन्शु** अधः-पतने। द्वयोः शतृल्युटौ। वर्शकेति। **वृश** वरणे। ण्वुल्। अक्रशेति। **कृश** तनूकरणे। 'अनुपसर्गात्फुल्लक्षीबकृश—' [८.२.५५] इति निपातितः। तृष्णेति। **तृष** पिपासायाम्। 'तृषिशुषिरसिभ्यः कित्' [उण् ३.१२] इति नन् प्रत्ययः। हृष्य[3]। **हृष** तुष्टौ। लोट्॥

**रुष्यद्रिष्यदरातिडेपक विभो कोपादिगोपो न ते**
**किं चायोप्यविरोपिलोपक न वा लोभादिसंक्षोभिता।**
**नभ्यांस्तुभ्य विभो जयेति नुवते क्लिद्यन् प्रमेद्यद्रुजं**
**क्ष्विद्यन् ऋद्धिमगृध्नवेऽपि स विमृश्याक्षीयमाणां ददौ॥६७॥**

रुष्यतां कुप्यतां [4]परान् रिष्यतां हिंसतां च रिपूणां [5]डेपक क्षेपक हे विभो, ते तव कोपादिभिर्गोपो व्याकुलत्वं न। किं च अयोप्यविरोपिलोपक [6]अयोप्यविरोपिनाम् अमोह्यमोहयितॄणां लोपक मोहक, ते लोभादिसंक्षोभिता वा न। त्वं नभ्यान् हिंस्यान् तुभ्य हिंसय। विभो त्वं जयेति नुवते [7]तस्मै क्लिद्यन् कृपया आर्द्रीभवन्। प्रमेद्यद्रुजं वर्धमानां पीडां

---

1 E लुठ.

2 By this sūtra the form can only be ओक (अकारान्त) since the suffix is क by घञर्थे कविधानम्, and not ओकस् which is required here for the ablative ओकसः. The सकारान्त form can be got only by the Uṇādi असुन्, the कुत्व being got by उणादयो बहुलम्.

3 K2 adds इति.

4 K3 om. परान्....च.

5 K2 om. this word.

6 K2 om. this word.

7 K2.5.6 om. this word.

क्ष्विद्यन् मोचयंश्च स विमृश्य स्वयमेव विचिन्त्य अगृध्नवे [1]अनिच्छवे अपि[2] अक्षीयमाणाम् [3]अक्षीणाम् ऋद्धिं ददौ ॥

रुष्यद्रिष्यदिति। **रुष** रोषे। **रिष** हिंसायां चेत्येके। द्वयोः शता। डेपक इति। **डिप** क्षेपे। ण्वुल्। कोपादिगोप इति। **कुप** क्रोधे। **गुप** व्याकुलत्वे। द्वयोर्घञ्। अयोप्यविरोपिलोपकेति। [4]**युप रुप लुप** विमोहने। क्रमेण ण्यण्णिनिण्वुलः। लोभादिसंक्षोभितेति। **लुभ** गार्ध्ये। **क्षुभ** संचलने। द्वयोर्घञ् णिनिश्च। नभ्यान् तुभ्य। **णभ तुभ** हिंसायाम्। यत् लोट् च। क्लिद्यन् प्रमेद्यत् क्ष्विद्यन्निति। **क्लिदू** आर्द्रीभावे। **ञिमिदा** स्नेहने। **ञिक्ष्विदा** स्नेहनमोचनयोः। त्रयाणां शता। मिदेस्तु 'मिदेर्गुणः' [७.३.८६] इति गुणः। ऋद्धिम्। **ऋधु** वृद्धौ। क्तिन्। अगृध्नवे। **गृधु** अभिकाङ्क्षायाम्। 'त्रसिगृधि—' [३.२.१४०] इति क्नुः। वृत्त। पुषादयो दिवादयश्च वृत्ताः। दिवादयस्त्ववृत्त्कृता इत्येके। तेन मृश्यति क्षीयते इत्याद्यपि। तत्र मृशेर्ल्यप्। क्षीयतेः शानच्। शमादय उदात्ता उदात्तेतः। [5]श्यन्विकरणं समाप्तम् ॥

[ इति दिवादिगणः ]

---

1 K3 om. this word.
2 K3.5.6 om. अपि.
3 K2.5.6 om. this word.
4 The editor of E unnecessarily emends these into युपु रुपु लुपु.
5 K1.3 E om. this sentence.

[ स्वादिगणः ]

अथ कुब्जानुग्रहकथामाह—

**सुन्वत्प्रियं तमथ रागसिता शिताग्र-**
**मारोन्मितास्त्रनिचयास्तृतमानसान्ता ।**
**कुब्जा कृतारिबलमैक्षत वृण्वती सा**
**पात्रं समीरधुतसौरभधूतभृङ्गम् ॥ ६८ ॥**

अथ सा कुब्जा सैरन्ध्री सुन्वत्प्रियं सुन्वन्तो यज्ञं कुर्वन्तो द्विजाः प्रिया यस्य तं [1]श्रीकृष्णम् ऐक्षत । कीदृशी कुब्जा । रागसिता रागेण[2] बद्धा । [3]शिताग्रेण मारोन्मितेन कामक्षिप्तेन अस्त्रनिचयेन आस्तृतं छादितं मानसान्तं यस्याः सा । तथा [4]समीरधुतेन वायुचलितेन सौरभेण धूताः संभ्रान्ताः भृङ्गाः यस्मिंस्तत् [5]तादृशं पात्रं वृण्वती स्वीकुर्वती । कीदृशं हरिम् । कृतारिबलं कृतं हिंसितमरिबलं येन तम् ॥

सुन्वदिति । षुञ् अभिषवे । अभिषवो निष्पीडनस्नपनसुरासन्धानस्नानादिः । शता । सिता । षिञ् बन्धने । कर्मणि क्तः । शितेति । शिञ् निशातने । प्राग्वत् क्तः । उन्मितेति । डुमिञ् [6]प्रक्षेपणे । प्राग्वत् क्तः । निचयेति । चिञ् चयने । 'एरच्' [३.३.५६] । आस्तृतेति । स्तृञ् छादने । लक्षणया विक्षेपे । प्राग्वत् क्तः । कृतेति । कृञ् हिंसायाम् । प्राग्वत् क्तः । वृण्वती । वृञ् वरणे । स्वीकारश्छादनं

1 K2.5 6 om. this word.
2 K2 inserts सिता between रागेण and बद्धा.
3 K2 adds शिताग्र ...मानसान्ता of the text before.
4 K2 adds समीर........भृङ्ग of the text before.
5 K2.5.6 om. this word.
6 K3 प्रक्षेपे.

वा तत् । शतरि ङीप् । धुतेति । धूतेति । **धुञ्** कम्पने । **धूञ्** इत्येके । द्वयोः कर्मणि क्तः । स्वादय उभयतोभाषाः अनुदात्ता [1]धूञ्वर्जम्[2] ॥

**कन्दर्पेण दुता विलेपकुशला सा चान्तिकं हिन्वता**
**पृष्टा तेन पृता विलेपनमदात् स्पार्याय लोकस्मृते ।**
**संप्राप्यो निजशक्तिराद्धतपसः साधोः स देवोऽपि ता-**
**[3]मृज्वीकर्तुमुपानशे सुकृतिनीं प्रस्तिघ्नुवानः खलान् ॥ ६९ ॥**

कन्दर्पेण दुता पीडिता सा च विलेपे तत्संपादने कुशला अन्तिकं हिन्वता प्राप्नुवता तेन पृष्टा [4]पृता प्रीणिता स्पार्याय प्रीणनीयाय लोकस्मृते लोकपालकाय भगवते विलेपनं कलभमदात्[5] । निजशक्तिराद्धतपसो निजशक्त्या स्वस्य सेवाशक्त्या राद्धं सिद्धफलं तपो यस्य तस्य साधोः संप्राप्यः स देवोऽपि ताम् [6]ऋज्वीकर्तुम् ऋजुदेहां कर्तुम् उपानशे समीपं प्राप । यतः सा सुकृतिनी । कीदृशो देवः । खलान् प्रस्तिघ्नुवानः आस्कन्दन् अभिभवन् ॥

दुतेति । **टुदु** उपतापे । कर्मणि क्तः । हिन्वता । **हि** गतौ वृद्धौ च । शता । पृता । **पृ** प्रीतौ । कर्मणि क्तः । स्पार्याय । **स्पृ** प्रीति-पालनयोः । ण्यत् । लोकस्मृते । **स्मृ** इत्येके । क्विप् । संप्राप्यः । **आप्लृ** व्याप्तौ । ण्यत् । शक्तीति । **शक्लृ** शक्तौ । क्तिन् । राद्धेति । **राध साध** संसिद्धौ । राधेः कर्तरि क्तः । साधोः । 'कृवापाजिमिस्वदि-

1 E धुञ्.

2 According to both *MDV* and *Ks* वृञ् is उदात्त. But according to this commentator it is अनुदात्त.

3 K1.2.5.6 ऋज्वीं कर्तुं.

4 K2.5.6 om. पृता प्रीणिता.

5 K5.6 add पृता प्रीणिता, K2 adds तेन भगवता स्व-स्वरूपाविष्करणेनैव पृता प्रीणिता.

6 K1.2.5.6 ऋज्वीं कर्तुं.

साध्यशूभ्य उण्' [ उण्.१.१ ] इति साधेरुण्प्रत्ययः । [1]द्वादयोऽनुदात्ताः [2]परस्मैभाषाः । उपानशे । अशू व्याप्तौ । संघाते च [3]द्रुमे[4] । [5]लिट् । 'अश्नोतेश्च' इति नुट् । प्रस्तिघ्नुवानः । ष्टिघ [6]आस्कन्दने । शानच् ॥

ऋज्वीकर्तुमित्युक्तम् । ऋज्वीकृतिप्रकारमाह—

**तामातिक्य पदे पदेन चिबुके चातिग्नुवन् पाणिना**
**चक्रे सघ्नुवतां वधे दधृगसावृज्वीं मनोज्ञाकृतिम् ।**
**किं चादभ्नुवतीमिमां मम गृहानेहीति याच्ञापरा-**
**मेष्यामीत्यमुचत् समृद्धकरुणः क्षिण्वन् कटाक्षैर्धृतिम् ॥७०॥**

असौ तां पदे चरणे पदेन आतिक्य आक्रम्य चिबुके पाणिना च आतिग्नुवन् आक्रामन् ऋज्वीम् अवक्रदेहां मनोज्ञाकृतिं चक्रे । कीदृशः । सघ्नुवतां हिंसतां वधे दधृक् प्रगल्भः । किं च 'ममगृहानेहि' इति याच्ञापराम् अदभ्नुवतीं व्याजमकुर्वाणाम् अव्याजभक्ताम् इमाम् एष्यामीत्युक्त्वा अमुचत् । अत्र हेतुः—समृद्धकरुणः । कटाक्षैः धृतिं धैर्यं क्षिण्वन् । नाशयन् ॥

आतिक्येति । तिक तिग च । एतावप्यास्कन्दने । आद्याल्ल्यप् । [7]आतिग्नुवन् । तिगेः शता । सघ्नुवताम् । षघ हिंसायाम् । शता । दधृक् । ञिधृषा प्रागल्भ्ये । 'ऋत्विग्दधृक्—' [ ३.२.५९ ] इति

1 K3 स्वादयो, K2.5.6 आप्यादयो for द्वादयो.

2 K2.5.6 om. परस्मैभाषाः but add उदात्तेतः.

3 K2.5.6 om. द्रुमे.

4 अशू ङ्न व्याप्तिसंहत्योः *KK.* 298.

5 K2.5.6 E om. लिट्.

6 K3 अवस्कन्दने.

7 K2.5.6 om. this word.

क्विन्[1]। अदभ्नुवतीम्। **दन्भु** दम्भे। [2]दम्भो लोकरञ्जनार्थं कर्मानुष्ठानम्[3]। शतरि ङीप्। समृद्धेति। **ऋधु** वृद्धौ। अयमकर्मकः सकर्मकश्च। कर्तरि क्तः। क्षिण्वन्। **रि क्षि चिरि जिरि दाश द्रु** हिंसायाम्। 'एषु छान्दसेषु क्षिधातुः सर्वथा लोकेऽस्ति' इत्युक्तस्य क्षेः शता॥

कुब्जावैरूप्यहरणानन्तरं केऽपि भाग्यवन्तो भगवन्तं ज्ञातवन्त इत्याह—

**क्ष्मां दघ्नुवन् मखचमिव्यसनानि रिण्वन्**
**ऋक्षिण्वतां चिरयणैरपथं जिरिण्वन्।**
**कंसं प्रदाश्यमतिदुर्द्रवमुद्दुदूषु-[4]**
**श्छन्दःश्रुतोऽपि स हि कैश्चिदबोधि लोके॥ ७१॥**

छन्दःश्रुतः छन्दसि वेदे एव श्रुतः प्रसिद्धोऽपि स लोके [5]मनुजानां मध्ये कैश्चित् भाग्यवद्भिः अबोधि ईश्वरत्वेन ज्ञात आसीत्। कीदृशः। क्ष्मां महीं दघ्नुवन् पालयन् मखचमिनां क्रतुगतहविष्याशिनां देवानां व्यसनानि दुःखानि रिण्वन् नाशयन् ऋक्षिण्वतां हिंसकानां चिरयणैः वधैः अपथं कुमार्गं जिरिण्वन् नाशयन्। हिंसितुमशक्यं कंसम् उद्दुदूषुः उच्चैरधिकं हिंसितुमिच्छुः॥

दघ्नुवन्निति। **दघ** घातने पालने च। शता। मखचमीति। **चमु** [6]भक्षणे। णिनिः। रिण्वन्। रि क्षि इत्यत्रादौ [7]रिधातोः शता।

---

1 K1.3 E क्विप्.
2 K2.5.6 om. this sentencc.
3 According to *MDV* it is लोकार्जवार्थमेव कर्मानुष्ठानम्.
4 D1.2 दुर्जव for दुर्द्रव.
5 E मनुष्याणाम्.
6 K2 अदने.
7 K1.3. E om. रि.

ऋक्षिण्वताम् । 'आद्य ऋक्षि इत्येके' इत्युक्तस्य [1]धातोः शता । चिरयणैः । चिरिधातोर्ल्युट् । जिरिण्वन् । जिरेः शता । दुर्द्रवम् । द्रुधातोः खल् । उद्दुदूषुः । 'दुङ् [2]इत्यपि केचित्' इत्यस्य सन्युः । केचित् 'छन्दस्यह व्याप्तौ' इति पठित्वा दघादिर्लोकेऽप्याहुः । एतदेव छन्दःश्रुतोऽपीतिपादेन द्योतितम् । तिकादय उदात्तेतः रिक्षिद्रुदुङ्वर्जमुदात्ताः । दुङ्त्वात्मनेभाषः । [3]वृत् । स्वादयो वृत्ताः । [4]श्नुविकरणं समाप्तम् ॥

[ इति स्वादिगणः ]

[ तुदादिगणः ]

एवं राजमार्गसंचारेण तत्रत्यभक्तानन्दमुक्त्वा गोपुरान्तर्गतानां सुकृतातिशयेन तत्प्राप्तिमाह—

**तुदन् कुचरितान् शुभे प्रणुदमान इष्टं दिशन्**
**प्रभृष्टपललान् क्षिपन्नरिमतिं कृषन् माधवः ।**
**ऋषन्नजुषत क्रमान्नगरगर्भमुद्वेजय-**
**न्नलग्नमनसः खलानवशलज्जमानाङ्गनम् ॥ ७२ ॥**

माधवः क्रमात् तत्र तत्र विलम्बमानः ऋषन् गच्छन् नगरगर्भम् [5]अभ्यन्तरप्राकारान्तर्भागम् अजुषत असेवत आश्रितवान् । तत्रत्यजनं प्रीणितवानिति वा । कीदृशं कुर्वन्नित्यत्राह—कुचरितान् रजकादीन् तुदन् मालाकारादीन् शुभे प्रणुदमानः प्रेरयन् तेषामेव इष्टं [6]दिशन् । [7]प्रभृष्ट

1 K2.5.6 om. this word.
2 K2 इत्येके for इ.........त्.
3 K2.5.6 om. वृत्.........वृत्ताः.
4 K1.3 E om. this sentence.
5 K2 आन्तर for अभ्यन्तर.
6 E ददन् emended by the editor as ददत्.
7 K2 adds प्रभृष्टपललान्.

पक्वं [1]पललं मांसं यैस्तान् दुष्टान् क्षिपन् प्रेरयन् निरस्यन्। अत एव अरिमतिं कृषन् विलिखन् विदारयन्। अलग्नमनसो दुर्व्यापारेषु अलग्नम् अलज्जितं मनो येषां तान् खलान् उद्वेजयन् भीषयन् कम्पयन् वा। एतानि षट् तत्कालविशेषणानि। कीदृशं नगरगर्भम्। भगवत्प्रेम्णा [2]अवशा व्याकुला [3]लज्जमानाः सलज्जाः[4] [5]अङ्गनाः यस्मिंस्तम्॥

तुदन्निति। **तुद** व्यथने। शता। प्रणुदमानः। **णुद** प्रेरणे। शानच्। दिशन्। **दिश** अतिसर्जने। दानं तत्। शता। प्रभृष्टेति। **भ्रस्ज** पाके। [6]कर्मणि क्तः। कित्वात् संप्रसारणम्। 'स्कोः—' [८.२.२९] इति सलोपः। क्षिपन्। **क्षिप** प्रेरणे। निरसननिन्दादयोऽपि प्रेरणभेदा एव। कृषन्। **कृष** विलेखने। तदत्र हलकर्म। द्वयोः शता। तुदादयोऽनुदात्ताः स्वरितेतः। ऋषन्। [7]**ऋषी** गतौ। शता। उदात्त उदात्तेत्। अजुषत। **जुषी** प्रीतिसेवनयोः। लङ्। उद्वेजयन्। **ओ विजी** भयचलनयोः। प्रायेणोत्पूर्वः। अस्माण्णिचि शता। **ओ लजी ओ लस्जी** व्रीडने। [8]अलग्नेति। लजेः कर्तरि क्तः। लज्जमानेति। लस्जेः शानच्। सस्य जश्त्वम्। [9]'ओ नजी ओ नस्जी व्रीलने' इति चान्द्रमतं माधवदूषितम्[10]। जुषादय उदात्ता अनुदात्तेतः॥

---

1 K2 om. this word.
2 K2 om. this word.
3 K2 om. this word.
4 K2 adds च.
5 K2.5.6 स्त्रियः for अङ्गनाः.
6 K2 om. कर्मणि....णम्.
7 K2.5.6 ऋषि.
8 K1.3.E om. this word.
9 E ओ लजी ओ लस्जी.
10 Vide *MDV*–अयं तवर्गपञ्चमादिरिति चान्द्राः। तन्मतेन नग्ननग्निकाशब्दव्युत्पत्तौ तवर्गादिरयं स्वामिना पठितो, न तु स्वमतेन.

नगरगर्भं वर्णयति पञ्चभि :—

**वृक्णव्याचरसोञ्छती फलगणानव्युच्छितायां निशि**
**स्नान्ती नर्च्छति मिच्छिता सुजनता यस्मिन् हितं जर्जती ।**
**चर्चन्ती कटु झर्झती बुधजनं दोषं त्वचित्वार्चती**
**नित्यं भूपतिमुब्जनोज्झितमना यत्रास्त खल्या सुखम् ॥७३॥**

सुजनता [1]सज्जनसमूहः । 'ग्रामजन—' [४.२.४३] इति तल् । सामूहिकेषु तदन्तविधिरिष्यते इति जनान्तादपि । मिच्छिता क्लेशिता यस्मिन् न ऋच्छति प्राप्नोति । कीदृशी सुजनता । वृक्णव्याचरसा । वृक्णः छिन्नः व्याचे व्याजे रसः आग्रहः यस्याः सा । फलगणान् उञ्छती पृथक् पृथगाददाना[2] । निशि अव्युच्छितायाम् अनतिक्रान्तायां प्रत्यूषे एव स्नान्ती । एतैरत्युत्तमत्वमुक्तम् । हितं श्रेय एव जर्जती सर्वतो वदन्तीति कंसस्यानिष्टत्वे हेतुः । खल्या खलसमूहो यत्र सुखं यथा तथा आस्त स्थितवती । कीदृशी खल्या । कटु क्रूरं चर्चन्ती परिभाषमाणा । बुधजनं झर्झती [3]संतर्जयन्ती । भूपतिं राजानं दोषं त्वचित्वा आच्छाद्य नित्यं सर्वदा ऋचती प्रशंसन्ती । उब्जनोज्झितमनाः । [4]उब्जनेन आर्जवेन उज्झितं त्यक्तं मनो यस्याः सा ॥

वृक्णेति । ओ **व्रश्चू** छेदने । कर्मणि क्तः । व्याचेति । **व्यच** व्याजीकरणे । घञ् । उञ्छती । **उछि** उञ्छे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' [७.१.८०] इति विकल्पान्नुमभावः । अव्युच्छितायाम् । [5]**उछ** विवासे । अतिक्रमबन्धनवर्जनेषु च द्रुमे[6] । कर्तरि क्तः । ऋच्छति ।

---

1 K2 सुजन for सज्जन.
2 K2 उपाददाना for आददाना.
3 K2 तर्जन्ती for संतर्जयन्ती.
4 K2 उब्जने आर्जवे उत्सृष्टं त्यक्तं.
5 E उछी.
6 उछीश् बन्धसमापने वर्जनेऽतिक्रमे *KK*. 112.

**ऋछ** गतीन्द्रियप्रलयमूर्तिभावेषु । इन्द्रियप्रलयो मोहः । मूर्तिभावः काठिन्यम् । अस्माल्लट् । मिच्छिता । **मिछ** उत्क्लेशे । स च पीडा । कर्मणि क्तः । जर्जती । चर्चन्ती । झर्झती । **जर्ज चर्च झर्झ** परिभाषणसंतर्जनयोः । आद्यान्त्यावपि चान्तावित्येके । एषां [1]शतरि ङीप् । त्वचित्वा । **त्वच** संवरणे । क्त्वा । ऋचती । **ऋच** स्तुतौ । [2]शतरि ङीप् । उब्जनेति । **उब्ज** आर्जवे । ल्युट् । उज्झितेति । **उज्झ** उत्सर्गे । दस्य चुत्वम्[3] । कर्मणि क्तः ॥

**शत्रूल्लोभकरेफरीढितृपिता तृम्फाय तोपार्थिनो**
**राज्ञो नित्यमतुम्पकान् वितुफती बन्धूंश्च संतुम्फती ।**
**युद्धेषूद्दपिताहितेष्वद्दफिता यस्मिन् ऋफन्ती सुरान्**
**ऋम्फार्हा पृतना स्थिता सुगुफितैर्माल्यैः कचान् गुम्फती ॥७४॥**

यस्मिन् पृतना स्थिता । पृतनां विशिनष्टि—शत्रूल्लोभकरेफरीढितृपिता । शत्रूणाम् उल्लोभकस्य मोहकस्य रेफस्य युद्धस्य रीढ्या कत्थनेन अस्माभिरेवं शत्रूनाकुलीकृत्य युद्धं कृतमिति परस्परोक्त्या तृपिता सदा संतुष्टा । तोपार्थिनः हिंसेच्छोः राज्ञः तृम्फाय सन्तोषाय अतुम्पकान् अहिंसकान् सदा वितुफती हिंसती बन्धूंश्च संतुम्फती हिंसती । [4]उद्दपिताहितेषु । उद्दपिताः उच्चैः क्लेशिताः शत्रवो येषु तेषु युद्धेषु अद्दपिता अक्लेशिता अप्रयत्ना । सुरान् ऋफन्ती हिंसती । एवंरूपत्वात् ऋम्फार्हा । भगवत्कृतं वधमर्हतीति ऋम्फार्हा । सुगुफितैः सम्यग्बद्धैः माल्यैः कचान् गुम्फती बध्नती । अनेन तस्या जितशत्रुत्वमुक्तम् ॥

---

1,2. K2 5.6 शतुर्ङीप्.

3 This is because the root is taken as दोपध—उद् झ.

4 E om. this word.

उल्लोभकेति । लुभ विमोहने । विमोहनं व्याकुलीकरणम् । ण्वुल् । रेफेति । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । अस्माद् घञि रेफः । रीढीति । रिह इत्येके । क्तिन् । तृपिता । तृप तृन्फ तृप्तौ । प्रीणने द्रुमे[1] । आद्यः तृफ इत्येके । तृपेः कर्तरि क्तः । तृम्फाय । तृम्फेर्घञ् । तोपेति । तुप तुन्प तुफ तुन्फ हिंसायाम् । तुपेर्घञ् । अतुम्पकान् । तुम्पेर्ण्वुल् । वितुफती संतुम्फती । तुफितुम्फ्योः शतरि ङीप् । उदृपितेति । दृप दृन्फ उत्क्लेशे । आद्योऽपि[2] फान्त इत्येके । दृपेः कर्मणि क्तः । अदृफिता । दृम्फेः कर्मणि क्तः । नकारलोपः । ऋफन्ती । ऋफ ऋन्फ हिंसायाम् । ऋफेः [3]शतरि ङीप् । ऋम्फेति । ऋम्फेर्घञ् । सुगुफितैः । गुफ गुन्फ ग्रन्थे । गुफेः कर्मणि क्तः । गुम्फतीति । गुम्फेः [4]शतरि ङीप् ॥

**पीयूषोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा**
**दृब्धस्रग्धरचृत्तकैश्यविधितां शोभां जुडन्त्योऽजुनन् ।**
**नार्यः संमृडदालिकेलिपृडिता यस्मिन् पृणन्त्यः प्रियान्**
**नित्यं तैर्वृणिता मृणालकमनीयाङ्ग्यो वितोणाशयाः ॥ ७५ ॥**

यस्मिन् नार्यः अजुनन् समचरन् । कीदृशः[5] । पीयूषेण उभितः पूरितः यो हेमकुम्भः तद्वद् [6]विशुभद्भ्यां शोभमानाभ्यां वक्षोजाभ्यां शुम्भत्तमाः अत्यन्तं शोभमानाः । दृब्धस्रजः [7]ग्रथितायाः मालायः धरं धारकं चृत्तं भङ्ग्यनुरूपं बद्धं च यत् कैश्यं केशसमूहः तेन विधितां विहितां शोभां जुडन्त्यः प्राप्नुवत्यः । संमृडदालिकेलिपृडिताः । संमृडन्तीनां सुखायमानानान् आलीनां [8]केल्या पृडिताः सुखिताः । प्रियान् पृणन्त्यः

---

1 तृप् न च प्रोणने—*KK*. 231.
2 K3 om. अपि.
3, 4 K2.5.6 शतुर्ङीप्.
5 K2 adds स्त्रियः.
6 K2.5.6 विशुम्भद्भ्यां.
7 K2 om. this word.
8 E केल्यां.

[1]प्रीणयन्त्यः । तैर्नित्यं वृणिताः [2]प्रीणिताः । मृणालकमनीयाङ्ग्यः मृणाल-वत्कोमलमङ्गं यासां ताः । वितोणाशयाः । वितोणः विगतकौटिल्यः आशयः यासां ताः । अनेन नगरगर्भस्य सुखकरत्वमुक्तम् ॥

उभितेति । **उभ उन्भ** पूरणे । उभेः कर्मणि क्तः । कुम्भेति । केन [3]जलेन उभ्यते इति कुम्भः । [4]उम्भेः कर्मणि घञ् । पृषोदरादित्वाद-कारलोपः । विशुभत् शुम्भदिति । **शुभ शुन्भ** शोभार्थे । हिंसायां च द्रुमे[5] । शता । दृब्धेति । [6]दृभी ग्रन्थे । कर्मणि क्तः । चृत्तेति । **चृती** हिंसाग्रन्थनयोः । प्राग्वत् क्तः । विधिताम् । **विध** विधाने । प्राग्वत् क्तः । जुडन्त्यः । **जुड** गतौ । **जुन** इत्येके । जुडेः [7]शतरि ङीप् । अजुनन् । जुनेर्लङ् । संमृडदिति । **मृड** [8]सुखे । शता । पृडिता इति । **पृड** च । कर्मणि क्तः । पृणन्त्यः । **पृण** प्रीणने । शतरि ङीप् । वृणिताः । **वृण** इति च भाष्ये[9] । कर्मणि क्तः । मृणालेति । **मृण** हिंसायाम् । 'तमिविडिमृणिकुलिपलिपञ्चिभ्यश्च' इति भोजोक्तेः कालन्[10] तोणेति । **तुण** कौटिल्ये । घञ् ॥

---

1 K5.6 E om. this word.

2 K2 om. this word.

3 K2.5.6 om. this word.

4 K1.3 E कुम्भेः.

5 शुम्लृङ् दीप्तौ शुभप् शुन्भ् श षुन्भा च षिन्भु च हिंसने— *KK.* 149.

6 E दृभि.

7 K2 शतुर्ङीप्.

8 E सुखने.

9 This seems to be based on *MDV* which states वृण इति दन्त्योष्ठ्यादिरत्र पठितव्यः, तथा च भाष्यम्— 'धात्वन्तरे पृणिवृणी' इति. But what we actually get in the *M.Bh.* is धात्वन्तरे पृणिमृणी। यर्त्तहि न धात्वन्तरं यत्र भूम्यां वृणसे-नैष इनम्. (vide Bhāṣya 3.1.78)

10 Vide *SKĀ*. 2.3.101.

चाणूरादयोऽपि पुरे सुखं स्थिता इत्याह—

**ईशस्य पुण्यसुगमस्य वधं मुणन्तो**
**मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः ।**
**विद्रोणनेष्वघुणिता मदघूर्णदक्षा**
**युद्धे सुरानपि खरोत्कुरिताः खुरन्तः ॥ ७६ ॥**

यत्र मल्लाश्च शुनकाः श्वान इव उच्चैश्चुकुणुः शब्दमकुर्वन् । कीदृशाः । [1]पुण्यसुगमस्य ईशस्य वधं मुणन्तः प्रतिजानानाः । विद्रोणनेषु हिंसासु अघुणिताः असम्भ्रान्ताः । मदेन घूर्णन्ति भ्रमन्ति अक्षीणि येषां ते मदघूर्णदक्षाः । युद्धे सुरानपि खरोत्कुरिताः खरं परुषम् उत्कुरितम् [2]उच्चैस्तर-शब्दो येषां तादृशाः । खुरन्तः छिन्दन्तः । अनेन पुरस्य [3]दुःसेव्यत्वं द्योतितम् ॥

पुण्येति । **पुण** कर्मणि शुभे । 'जनिकृतिपुणिभ्यः क्यप्' इति भोजोक्तेः[4] क्यप् । मुणन्तः । **मुण** प्रतिज्ञाने । शता । चुकुणुः । **कुण** शब्दोपकरणयोः । उपकरणं वाद्यवादनसाधनभावः । लिट् । शुनकाः । **शुन** गतौ । क्वुन् । विद्रोणनेषु । **द्रुण** हिंसागतिकौटिल्येषु । ल्युट् । अघुणिताः । **घुण घूर्ण** भ्रमणे । घुणेः कर्तरि क्तः । घूर्णदिति । घूर्णेः शता । सुरान् । **षुर** ऐश्वर्यदीप्त्योः । 'इगुपध—' [३.१.१३५] इति कः । उत्कुरितेति । **कुर** शब्दे । 'नपुंसके भावे क्तः' [३.३.११४] । खुरन्तः । **खुर** छेदने । शता ॥

---

1 K2 transposes ईशस्य and पुण्य........स्य.

2 K2.5.6 उच्चैस्तरं कुरितं शब्दो.

3 K2 दुस्सेवत्वं.

4 *SKĀ*. 2.3.3.

कंसस्य सुखासनस्थानमिदमित्याह—

**मुरादिबन्धुः क्षुरघोरचेताः**
**पुरन् खलानां जनजीववर्ही[1] ।**
**कंसः स्थितो यत्र ततर्ह लोकं**
**स्तृढामरस्तृंहकरानभीच्छन् ॥ ७७ ॥**

कंसो यत्र स्थितो लोकं ततर्ह हिंसितवान् । कीदृशः कंसः । मुरादयो बन्धवो यस्य सः । क्षुर इव घोरं चेतो यस्य सः । खलानां पुरन् अग्रे गच्छन् । श्रेष्ठ इत्यर्थः । जनजीववर्ही[2] जनजीवमुन्मूलयितुं त्यक्तुं शीलं यस्य सः । स्तृढा अर्दिता अमरा येन सः । तृंहकरान् हिंसाकरणशीलान् आभीक्ष्ण्येन इच्छन् । एतैः कंसस्य लोकहिंसायां सौकर्यमुक्तम् ॥

मुरेति । **मुर** संवेष्टने । कः । क्षुरेति । **क्षुर** विलेखने । खनने च द्रुमे[3] । कः । घोरेति । **घुर** भीमार्थशब्दयोः । घञ् । पुरन् । **पुर** अग्रगमने । शता । जनजीववर्ही[4] । **वृहू** उद्यमे । स चोन्मूलनम् । णिनिः । ततर्ह । **तृहू** [5]**ष्टृहू तृन्हू** हिंसार्थाः । ष्टृन्हू इत्यप्येके । तृहेर्लिट् । स्तृढेति । [6]ष्टृहेः कर्मणि क्तः । तृंहेति । तृंहेर्घञ् । अभीच्छन् । **इष** इच्छायाम् । केचिदुदितं [7]पठन्ति । शता ॥

तत्रापि भाग्यवन्तो भगवन्तमतृप्तदृष्टयो दृष्टवन्त इत्याह—

**गतनिमेषमुदैक्षि किलन् विभुः**
**सुकृतिभिः स जगत्तिलकाकृतिः ।**

---

1 E बर्ही, D1.2 K3 वाही for वर्ही.

2 E बर्ही, K3 वाही.

3 क्षुरश् विलेखे खनने *KK.* 262—263.

4 E बर्ही, K3 वाही.

5 K2.5.6 स्तृहू; editor of E emends as स्तृहू.

6 K2.5.6 स्तृहेः.

7 K3 वदन्ति.

**चिलितपीतपटेन चलन्निल-**

**न्नविलितोरुकृपां परितो दृशम् ॥ ७८ ॥**

किलन् क्रीडन् स विभुः सुकृतिभिर्गतनिमेषं यथा तथा उदैक्षि उच्चैरधिकं दृष्टः । विभुं विशिनष्टि—चिलितपीतपटेन वेष्टितेन पीताम्बरेण चलन् विलसन् । जगत्तिलकाकृतिः लोकालङ्कारभूतश्रीदेहः । अविलितोरुकृपाम् अविलिता असंवृता प्रकाशिता [1]उर्वी कृपा यस्यां तां दृशं परितः इलन् प्रेरयन् । एतैर्भक्तानन्दकरत्वमुक्तम् ॥

निमेषेति । **मिष** स्पर्धायाम् । अयमुन्मीलनार्थोऽपि । अस्माद् घञ् । किलन् । **किल** [2]श्वैत्ये श्वैत्यक्रीडनयोरित्येके[3] । शता । तिलकेति । **तिल** स्नेहने । इगुपधात् केति कः । अस्मादिवार्थे कन्[4] । चिलितेति । **चिल** वसने । कर्मणि क्तः । चलन् इलन् । **चल** विलसने । **इल** स्वप्नप्रेरणयोः । द्वयोः शता । अविलितेति । **विल** संवरणे । कर्मणि क्तः ॥

भक्तमनोनन्दनाय अतिक्रूरेऽप्यत्र क्रीडितवानित्याह—

**बिलशयप्रतिमैर्निलिते पुरे**

**स हि सुहृत्सु हिलन्नचरत् सुखम् ।**

**शिलितधान्यसिलप्रणतो[5] हरिः**

**प्रमिलतां हृदये लिखिताकृतिः ॥ ७९ ॥**

स हरिः । हि प्रसिद्धौ । बिलशयप्रतिमैः सर्पसमैर्दुष्टैः निलिते गहनीभूते पुरे सुहृत्सु अक्रूरादिषु हिलन् स्वाभिप्रायं प्रकाशयन्

---

1 K3 उरुकृपा.

2 K5.6 E om. श्वैत्ये.

3 K5.6 E om. इत्येके.

4 By the sūtra इवे प्रतिकृतौ ( 5.3.96 ). In *PS* it is derived by the same suffix कन् but by the sūtra स्थूलादिभ्यः प्रकारवचने कन् (5.4.3).

5 M1.2 K2 प्रणुतो.

[1]सुखं यथा तथा अचरत् । कीदृशः । शिलितधान्यसिलप्रणतः[2] । शिलितं कणश आत्तं धान्यानां सिलं क्षेत्रविकीर्णबीजं यैस्तैः [3] प्रणतः । प्रमिलतां स्वस्मिन् सम्यक् संश्लिष्यतां हृदये लिखिता तद्वत् स्थिरीभूता आकृतिः श्रीमूर्तिर्यस्य सः ॥

बिलेति । **बिल** भेदने । अस्याकर्मकत्वं स्वाम्याह[4] । अस्मादिगुपधात् कः । निलिते । **णिल** गहने । कर्तरि क्तः । हिलन् । **हिल** भावकरणे । [5]अभिप्रायसूचनं तत् । शता । शिलितेति । **शिल षिल** उञ्छे । शिलेः कर्मणि क्तः । सिलेति । उञ्च्यत इति सिलः । घञर्थे कः । प्रमिलताम् । **मिल** [6]संश्लेषणे । शता । लिखितेति । **लिख** अक्षरविन्यासे । कर्मणि क्तः ॥

[7]अथ कंसस्यातिभयेन दृढध्यानसिद्धये धनुर्भञ्जनं कृतमित्याह—

**ततोऽतिकुटिलाशयैः प्रपुटितैः कुचञ्जीवितै–**
**र्गुजद्भिरपि सैनिकैः सुगुडितां डिपद्भिर्जनान् ।**
**सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुटन्**
**धनुस्त्रुटनतो मनाक् प्रतुटनाय शालामगात् ॥ ८० ॥**

ततो धनुस्त्रुटनतः चापछेदनेन मनाक् प्रतुटनाय कंसस्य कलहं कर्तुं शालां धनुःशालाम् अगात् [8]प्राप्तः । [9]कथमगात् । सुधया छुरिता लिप्ता । विस्फुटा विकसिता प्रकाशिता या स्मितरुक् तयैव धैर्यं मुटन् प्रमर्दयन् नाशयन् । कीदृशीं शालाम् । सैनिकैः भटैः योद्धृभिः । सुगुडितां सम्यग्रक्षिताम् । कीदृशैर्भटैः । अतिकुटिलाशयैः वक्रचित्तैः । प्रपुटितैः

---

1 K2.5.6 E om. सुखं.
2,3 K2 प्रणुतः.
4 But in *Kṣ* we do not find this.
5 K2.5.6 om. अभि....तत्.
6 E om. सं.
7 K2 om. अथ....आह.
8 K2 om. this word.
9 K3 om. कथमगात्.

सम्यगेकत्व संघातीभूतैः । जनान् डिपद्भिः क्षिपद्भिः निरस्यद्भिः । गुजद्भिः सदा क्रन्दद्भिः । [1]कुचज्जीवितैः कुचत् संकुचितं गतप्रायं जीवितं [2]प्राणाः येषां तैः ॥

कुटिलेति । **कुट** कौटिल्ये । [3]इतः कुङन्ताः कुटादयः । अस्मात् 'गुपादिभ्यः कित्' [उण्. १.५५] इति इलच् । अत्र कित्त्वं वृथा, ङित्त्वेनैव गुणाभावात् । प्रपुटितैः । **पुट** संश्लेषणे । कर्तरि क्तः । कुचदिति । **कुच** संकोचने । शता । गुजद्भिः । **गुज** शब्दे । अव्यक्त इत्येके । शता । सुगुडिताम् । **गुड** रक्षायाम् । कर्मणि क्तः । डिपद्भिः । **डिप** क्षेपे । शता । छुरितेति । **छुर** छेदने । लेपनेऽपि दृष्टः । कर्मणि क्तः । विस्फुटेति । **स्फुट** विकसने । कः । मुटन् । **मुट** [4]आक्षेप-प्रमर्दनयोः । शता । [5]त्रुटनतः । **त्रुट** छेदने । [6]प्रायोऽस्य द्वैधीभावे वृत्तिः । ल्युट् । प्रतुटनाय । **तुट** कलहकर्मणि । ल्युट् ॥

**पोड्योऽयं चुडतेति केऽपि जुडतेत्यन्ये कडन्तोऽलुठन्**
**देवे स्वैर्लुलिते कुडत्विषि कुडद्गात्रे पुडित्वादरम् ।**
**ईशश्चाघुटितस्तुडन् खलमुदं रोपं थुडन् प्रस्फुडन्**
**धाम स्वं स्फुरितो जगाम धनुषः पार्श्वं क्षणादस्फुलन् ॥८४॥**

केऽपि भटाः, अयं पोड्यः छेद्यः, एनं सर्वे चुडत छिन्त, इत्येवं वदन्तः, अन्ये जुडत बध्नीत [7]इति वदन्तः, कडन्तो माद्यन्तः सन्तः स्वैः आत्मीयैः लुलिते संश्लिष्टे कुडत्विषि घनीभवच्छोभे कुडद्गात्रे

---

1 K2 om. this word.
2 K2 प्राणो.
3 K2.5.6 om. this sentencc.
4 K5 6 E आक्षेपमर्दनयोः.
5 K1.3 त्रुटनेति.
6 K2 om. this sentence.
7 K2 इत्युक्त्वा for इनि वदन्तः.

शिशुभवद्देहेऽपि देवे आदरं बहुमानं पुडित्वा त्यक्त्वा अलुठन् संश्लिष्टाः [1]संघातीभूता आसन्। ईशश्च ईशोऽपि अघुटितः अप्रतिहतः खलमुदं तुडन् दारयन् नाशयन् रोषं थुडन् आच्छादयन् स्वम् असाधारणं धाम तेजःप्रभावं प्रस्फुडन् तिरोहितं कुर्वन् स्फुरितः शोभमानः अस्फुलन् अकम्पमानश्च[2] सन् क्षणात् शीघ्रं धनुषः पार्श्वं समीपं जगाम ॥

पोड्य इति। **पुड चुड** छेदने। पुडेर्ण्यत्। चुडत। चुडेर्लोट्। जुडत। **जुड** बन्धने। लोट्। कडन्तः। **कड** मदे। शता। अलुठन्। **लुठ** संश्लेषणे। **लुड** इत्येके। लुठेर्लङ्। लुलितेति। लुडेः कर्तरि क्तः। कूडदिति[3]। **कूड** घनत्वे। सान्द्रता तत्। [4]शता। कुडदिति। **कुड** बाल्ये। संघाते इत्येके। भक्षणे च द्रुमे[5]। [6]शता। पुडित्वा। **पुड** उत्सर्गे। क्त्वा। अघुटितः। **घुट** [7]प्रतीघाते। कर्तरि क्तः। तुडन्। **तुड** तोडने। तच्च भेदनम्। शता। थुडन् प्रस्फुडन्। **थुड स्फुड** संवरणे। कुड छुड इत्येके। आद्ययोः शता। स्फुरितः। **स्फुर स्फुल** संचलने। स्फुर स्फुरणे, [8]स्फुल संचलने इति केचित्। तत्र स्फुरणं शोभा। स्फुरेः कर्तरि क्तः। अस्फुलन्। स्फुलेः शता ॥

**क्षौमेण स्फुडितं स्रजा निचुलितं चात्रोड्यशोभं धनु-**
**र्गेहक्रोडतले स मोदकुलितो दृष्ट्वागुरिष्ट क्षणात्।**
**[9]नूत्या किं भयधूतविद्रुतगुवल्लोकं तदा तद्ध्रुवत्-**
**कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥ ८२ ॥**

1 K5 सङ्घीभूता.
2 K2 om. च.
3 K2 adds कुडदिति.
4 K2 om. शता....इति.
5 कुड् शि बाल्येऽदने *KK.* 155.
6 K2 adds द्वयोः before.
7 E प्रतिघाते.
8 E स्फुर.
9 M1.2 नुत्या.

सः क्षौमेण स्फुडितं छादितं स्रजा निचुलितं संवृत्तं च एवंरूपमपि अत्रोड्यशोभम् अनाच्छादनीयप्रभं धनुः गेहक्रोडतले [1]गृहस्य संवृतप्रदेशे अन्तर्भागे दृष्ट्वा मोदे [2]कुलितः निमग्नः सन् क्षणात् शीघ्रम् अगुरिष्ट उद्धृतवान्। नूत्या किं बहुप्रशंसया किम्। न किंचित् कार्यम्। तदा ध्रुवत् स्थिरीभवत् [3]तत् कोदण्डं भयधूतविद्रुतगुवल्लोकं भयेन धूतो वेपितो विद्रुतो धावितो गुवन् पुरीषमुत्सृजंश्च लोको जनो यस्मिन् शब्दे तथा कुवमानं शब्दायमानं भोजेश्वरस्य कंसस्य आकूतम् अभिप्राय इव दलितं खण्डितम् ऐक्षि सर्वैः दृष्टम् ॥

स्फुडितमिति। **स्फुड चुड ब्रुड** संवरणे। **क्रुड** इत्यप्येके। स्फुडेः कर्मणि क्तः। निचुलितम्। चुडेः [4]प्राग्वत् क्तः। अत्रोड्येति। त्रुडेर्ण्यत्। क्रोडेति। क्रुडेर्घञ्। कुलितः। **कुड** रुड निमज्जने इति चैके। कुडेः कर्तरि क्तः। व्रश्चादय उदात्ता उदात्तेतः। अगुरिष्ट। **गुरी** [5]उद्यमे। उद्धरणं तत्। अयमुदात्तोऽनुदात्तेत्। लुङ्। नूत्या। **णू** स्तवने। क्तिन्। धूतेति। **धू** विधूनने। क्तः। गुवदिति। **गु** पुरीषोत्सर्गे। उवङ्। शता। ध्रुवत्। **ध्रु** गतिस्थैर्ययोः। [6]ध्रुव इत्येके। द्वयोः सह शता। अनजन्तस्य सेट्त्वं भेदः। गुध्रू अनुदात्तौ, ध्रुव उदात्तः। णूप्रभृतयः परस्मैभाषाः। कुवमानम्। कुङ् [7]शब्दे। शानच्। आकूतेति। **कूङ्** इत्येके। क्तः। वृत्। कुटादिर्वृत्तः ॥

1 K2 गेहस्य.
2 K1.3 om. this word.
3 K2 om. तत्.
4 K2.5.6 om. this word.
5 The editor of E emends this as उद्यमने, probably following *MDV* but the reading in *Kṣ* is उद्यमे.
6 K2.5.6 om. this sentence.
7 K2.5.6 add आर्त before.

[1]अनेन धनुर्भङ्गेन कंसस्य महद् भयं जातमित्याह—

**व्यपारेऽत्र तदामरानपि रियन्नाशाः पियन्नाधित-**
**क्रौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद्गरम् ।**
**येनानादरवान् धृतोऽपि स चलन् पृच्छन् किमित्युत्सृजन्**
**धैर्यं मग्नमनाश्च हृद्रुजि चिरं भुग्नाननस्तस्थिवान् ॥ ८३ ॥**

तदा अत्र ईदृशे व्यापारे अमरानपि रियन् प्राप्नुवन् आशाः दिशः पियन् व्याप्नुवन् आधितक्रौर्योत्क्षीणधनुष्प्रसूतनिनदः । आधितक्रौर्यः सम्यग्धारितक्रौर्यः[2], उत्क्षीणः उद्गतः धनुषा प्रसूतः प्रेरितश्च यो निनदः[3] स कंसे गरं विषं व्यकारीत् [4]क्षिप्तवान् । अत्यन्तपीडामकरोदित्यर्थः । येन सः अनादरवान् निरस्तबहुमानः सन् धृतोऽवस्थितोऽपि चलन् वेपमानः किमिदमिति पृच्छन् धैर्यमुत्सृजन् त्यजन् हृद्रुजि मग्नमनाश्च चिरं भुग्नाननः अवनतमुखः तस्थिवान् स्थितोऽभूत् ॥

व्यापार [5]इति । पृङ् व्यायामे । स च प्रवृत्तिमात्रम् । प्रायेण व्याङ्पूर्वोऽयम् । घञ् । अमरान् । मृङ् प्राणत्यागे । अच् । कुङादयो [6]आत्मनेभाषाः अनुदात्ताः कुङ्वर्जम् । रियन् पियन् । रि पि गतौ । द्वयोः शता । आधितेति । धि धारणे । गताविति द्रुमे[7] । कर्मणि क्तः । उत्क्षीणेति । क्षि निवासगत्योः । कर्तरि क्तः । 'निष्ठायामण्यदर्थे' [६.४.६०]

---

1 Is all MSS. except E, this introduction to the verse is given at the beginning of the commentary on it.

2 K2 धृत for धारित.

3 K2.5.6 add शब्दः.

4 K2.5.6 विकीर्णमकार्षीत् for क्षिप्तवान्.

5 K2 om. इति.

6 E transposes अनुदात्ताः and आत्मनेभाषाः.

7 This sense is not found in *KK*. We get there only धिश् धृतौ (48).

इति दीर्घः । 'क्षियो दीर्घात्' [ ८.२.४६ ] इति नत्वम् । प्रसूतेति । **षू** प्रेरणे । कर्मणि क्तः । व्यकारीत् । कॄ विक्षेपे । लुङ् । गरम् । **गॄ** निगरणे । अच् । रियत्यादयः परस्मैभाषाः । अनादरेति । **दृङ्** आदरे । अत्रैव निपातनात् घञ्यवृद्धिः[1] । धृतः । **धृङ्** अवस्थाने । धारणे च द्रुमे[2] । अनुदात्तावात्मनेभाषौ । पृच्छन् । **प्रच्छ** ज्ञीप्सायाम् । तुक् । शता । [3]'ग्रहिज्या—' [ ६.१.१६ ] इति संप्रसारणम् । वृत् । किरादिर्वृत्तः । उत्सृजन् । **सृज** विसर्गे । [4]विसर्गः उत्पादनं त्यागश्च । शता । मग्नेति । **टु मस्जो** शुद्धौ । कर्तरि क्तः । रुजि । **रुजो** भङ्गे । भावे क्विप् । भुग्नेति । **भुजो** कौटिल्ये । कर्तरि क्तः ॥

चापरक्षकेषु हतेषु कंसः पर्याकुलचित्तोऽपि मल्लयुद्धोद्योगमकरोदित्याह—

**रोषच्छुप्तधियाथ रोष्टुमभितो [5]योधान् द्विषद्रेशकान्**
**आलिष्टानजितो जघान धनुषः खण्डेन मर्मस्पृशा ।**
**ते विच्छायदघा दिवं प्रविविशुः कंसो विमर्शाकुलो**
**मल्लादीननुदत् परेद्यवि हरेरुत्सन्नशत्रोर्वधे ॥ ८५ ॥**

अथ अजितो रोषच्छुप्तधिया रोषेण छुप्तया स्पृष्टया धिया हेतुभूतया रोष्टुं हन्तुमभितः सर्वत आलिष्टान् आगतान् [6]योधान् भटान् मर्मस्पृशा मर्मवेधिना धनुषः खण्डेन जघान । कीदृशान् [7]योधान् । द्विषतां रेशकान् हिंसकान् । ते [8]योधाः विच्छायदघा गच्छदघाः सन्तः दिवं भगवल्लोकं प्रविविशुः । कंसो विमर्शाकुलः चिन्तया व्याकुलोऽपि मल्लादीन् परेद्यवि ऊर्ध्वदिने उत्सन्नशत्रोरपि हरेर्वधे अनुदत् प्रेरितवान् ॥

---

1 In *MDV* derived with अप् by the sūtra ग्रहवृदृनिश्चिगमश्च (3.3.58); so too in *PS*.

2 धृ शङ् स्थितौ धृ ञ् च धृत्याम्—*KK*. 67-68.

3,4 K2 om. this sentence.

5,6,7 K2.5.6 यौधान्.

8 K2.5.6 भटाः for योधाः.

छुप्तेति । छुप [1]स्पर्शने । कर्मणि क्तः । रोष्टुम् । रुश रिश हिंसायाम् । रुशेस्तुमुन् । रेशकान् । रिशेर्ण्वुल् । आलिष्टान् । लिश गतौ । कर्तरि क्तः । मर्मस्पृशा । स्पृश संस्पर्शने । 'स्पृशोऽनुदके—' [३.२.५८] इति क्विन् । विच्छायदिति । विछ गतौ । [2]'गुपूधूपिविच्छि'— इत्यायान्ताच्छता । प्रविविशुः । विश प्रवेशने । लिट् । विमर्शेति । मृश आमर्शने । स्पर्शनं तत् । घञ् । अनुदत् । णुद प्रेरणे । लङ् । उत्सन्नेति । षद्लृ विशरणगत्यवसादनेषु । कर्मणि क्तः । शत्रोः । शद्लृ शातने । अस्माण्णिजन्तात् 'शातेर्ह्रस्वश्च' इति[3] [4]क्रुन् भोजोक्तः[5] । [6]पृच्छ्या-दयः उदात्तेतः अनुदात्ता विच्छिवर्जम् ॥

मित्रैः संमिलमान एत्य नगरोद्यानं विशुश्वन् भयं[7]
गोपानां भयलोपिवाग्भिरबलाविन्नानुलेपं वहन् ।
भुक्त्वा गोरससिक्तमन्नमजितः कंसस्य कृन्तन् [8]मुदं
तं खेत्स्यन् पिशिताशदारुणमसौ मोदेन निन्ये निशाम्[9] ॥८५ ॥

---

1 K3 संस्पर्शने; the editor of E emends as स्पर्शे.
2 E धूप.
3 *SKĀ*. 2.1.96.
4 E भोजोक्तेः क्रुन्.
5 According to *PS*. the word शत्रु is derived either by रुशातिभ्यां क्रुन् (Uṇādi 4.113) or जत्रादयश्च (Uṇādi 4.112).
6 E प्रच्छादयः.
7 K1 E भियं.
8 D2 K3 मदं.
9 After this D1.2 इति धाधुकाव्ये द्वितीयः सर्गः. D1 does not extend further. M1.2 इति नारायणकृतौ वासुदेवविजयस्य कंसवधभागे द्वितीयः सर्गः. M2 does not extend further.

असौ अजितः मित्रैः संमिलमानो[1] नगरोद्यानमेत्य भयलोपिवाग्भिः भयनिरासकैर्वचनैः गोपानां भयं विमुञ्चन् त्यजन् अबलाविन्नं कुब्जाया लब्धम् अनुलेपं वहन् धारयंश्च गोरससिक्तमन्नं भुक्त्वा कंसस्य मुदं कृन्तन् छिन्दन् निरस्यन् तं [2]कंसं खेत्स्यन् [3]निहनिष्यन्। हेतौ शता। मोदेन निशां निन्ये ॥

संमिलमान इति। **मिल** संगमे। उदात्तः स्वरितेत्। शानच्। विमुञ्चन्। मुच्लृ मोक्षणे। इतः परं मुचादित्वान्नुम्। शता। भयलोपीति। **लुप्लृ** छेदने। णिनिः। विन्नेति। **विद्लृ** लाभे। कर्मणि क्तः। अनुलेपम्। **लिप** उपदेहे। अस्य दहनार्थत्वमप्याह शङ्कराचार्यः। अस्माद्घञ्। सिक्तम्। **षिच** क्षरणे। तच्चेहार्द्रीभावनम्। कर्मणि क्तः। मुचादयोऽनुदात्ताः स्वरितेतः। विन्दिः सेडिति केचित्। कृन्तन्। **कृती** छेदने उदात्त उदात्तेत्। शता। खेत्स्यन्। **खिद** परिघाते। अनुदात्त उदात्तेत्। लृडन्तात् शता। पिशितेति। **पिश** अवयवे। अयं दीपनायामपि। उदात्त उदात्तेत्। भक्षणार्थमवयवशः क्रियते इत्यर्थे 'पिशिपृषिभ्यां कित्' इति भोजोक्तेः इतन्[4]। वृत्। तुदादयो मुचादयश्च वृत्ताः। शविकरणं समाप्तम् ॥

[ इति तुदादिगणः ]

[5]इति सव्याख्याने धातुकाव्ये द्वितीयः सर्गः।

---

1 In K3 the commentary on this verse breaks off here in folio 80a. Then nine Kārikās beginning with क्वचित् सुयोज्या धात्वर्थाः and ending सर्वत्र दृश्यताम् from among those found at the close in K1 are given. The space after this in folio 80b is left blank and the third canto is commenced in the next folio.

2 K2 om. this word.

3 K2 om. नि.

4 उच्चिकुसिपिशिवृषिभ्यः कित् *SKĀ*. 2.2.143.

5 K2.5.6 इति श्रीनारायणकविशिष्यकृतौ वासुदेवविजयोर्ध्वभागरूपस्य व्याख्याने द्वितीयः सर्गः,

## तृतीयः सर्गः

[ रुधादिगणः ]

अथानन्ताभारहरणोद्यतस्यानन्तांशसहितस्यानन्तस्य[1] भगवतः श्रीकृष्णस्य तृतीयदिवसवृत्तं[2] सप्रपञ्चं वर्णयिष्यन् प्रथमतो रङ्गप्रवेशं वक्तुं पीठिकां प्रतिष्ठापयति—

**रुन्धन् दिशो दिनमुखेऽथ जगन्ति भिन्दन्**
**प्रच्छिन्नसंशयमतिर्मुदमाशु रिञ्चन् ।**
**भेरीरवश्चतुरघातविविक्तताल-**
**श्चुक्षोद कर्णमुदयुङ्क्त च मल्ललोकः ॥ १ ॥**

अथ दिनमुखे भेरीरवः कर्णं चुक्षोद श्रोत्रपुटं चूर्णीचकार । कीदृशो भेरीरवः । दिशो रुन्धन् पूरयन् । जगन्ति लोकान् भिन्दन् विभिद्य बहिर्गच्छन् । प्रच्छिन्नसंशया कंसव्यवसायबोधिनी मतिर्येन सः । अत एव सर्वेषां मुदं रिञ्चन् त्यजन् चतुरेण विदग्धेन घातेन अभिहननेन विविक्ताः स्पष्टीकृताः ताला यस्मिन् सः । मल्ललोकः उदयुङ्क्त च [3]उद्युक्तोऽभूच्च ॥

रुन्धन्निति । **रुधिर्** आवरणे । भिन्दन् । **भिदिर्** विदारणे । द्वयोः शता । प्रच्छिन्नेति । **छिदिर्** द्वैधीकरणे । कर्मणि क्तः । रिञ्चन् । **रिचिर्** विरेचने । शता । विविक्तेति । **विचिर्** पृथग्भावे । कर्मणि क्तः । चुक्षोद । **क्षुदिर्** संपेषणे । लिट् । उदयुङ्क्त । **युजिर्** योगे । लङ् । 'अजादेरप्यजन्तादप्युपसर्गात्तङिष्यते' इति तङेव । रुधादयोऽनुदात्ताः ॥

---

1 K1.3 om. अनन्तांशसहितस्य, K6 om. अनन्तस्य.

2 E व्रतं for वृत्तं.

3 K2.5.6 उद्यतोऽभूच्च.

**संछृण्णगात्रमथ शात्रवतर्दिनस्ते**
**चाणूरमुष्टिकमुखा वसनान्यकृन्तन् ।**
**इन्धानखेदमुदविन्त विशिष्टलोकः**
**पेक्ष्यत्सु माधवमभङ्गभुजेषु तेषु ॥ २ ॥**

अथ ते चाणूरमुष्टिकमुखाः संछृण्णगात्रं सम्यक् दीप्तं गात्रं यस्मिन् तथा वसनानि मल्लयुद्धोचितानि अकृन्तन् अवेष्टन्त । शात्रवाणां शत्रूणां तर्दनं[1] हिंसनमनादरो वा शीलं येषां ते मल्लाः । विशिष्टलोकः सज्जनः तेषु माधवं पेक्ष्यत्सु संचूर्णयिष्यत्सु । हेतौ शता । इन्धानखेदं वर्धमानं दुःखं यस्मिन् तथा । उदविन्त उच्चैर्विचारमकरोत्[2] । [3]अभङ्गभुजेषु भङ्गरहितः शक्तिक्षयरहितो भुजो [4]येषां तेषु ॥

संछृण्णेति । **उछृदिर्** दीप्तिदेवनयोः । देवनं क्रीडाविजिगीषादि । 'दीप्तिवमनयोः' इत्येके । अस्मात् कर्तरि क्तः । शात्रवतर्दिनः । **उतृदिर्** हिंसानादरयोः । णिनिः । द्वावुदात्तौ । रुधादयः स्वरितेतः इरितश्च । अकृन्तन् । **कृती** वेष्टने । उदात्त उदात्तेत् । लङ् । इन्धानेति । ञि **इन्धी** दीप्तौ । दीपनायामपि । उदात्तोऽनुदात्तेत् । अस्माच्छानच् । खेदम् । **खिद** दैन्ये । घञ् । उदविन्त । **विद** विचारणे । लङ् । अनुदात्तावनुदात्तेतौ । विशिष्टेति । **शिषॢ** विशेषणे । उत्कर्षार्थत्वात् अकर्मकादस्मात् कर्तरि क्तः । पेक्ष्यत्सु । **पिषॢ** संचूर्णने । ऌटि हेतौ शता । अभङ्गेति । **भञ्जो** आमर्दने । घञ् । भुजेति । **भुज** पालनाभ्यवहारयोः

---

1 K2 adds मर्दनं.
2 K2 विषादं for विचारं.
3 K2 न भङ्गः शक्तिक्षयो येषां तादृशभुजो for अभङ्ग....भुजो.
4 One folio (No.110) which comprises the portion from here upto पृची सम्पर्के in the commentary on the next verse is missing in K2.

[1]अनुभवेऽपि। 'भुजन्युब्जौ पाण्युपतापयोः' [७.३.६१] इति निपातितः। शिषादयोऽनुदात्ताः॥

**को नस्तृणेढि हिनसाम समुत्तमास्रै-**
**स्तं गोपसूनुमिति तैलवाक्तगात्राः।**
**संतक्तनद्धवसनाः परिवेगवृक्ता**
**रङ्गं समेत्य पपृचुः स्वजनांश्च मल्लाः॥ ३॥**

को नः अस्मान् तृणेढि [2]निहन्ति। न कोऽपि। तं गोपसूनुमास्रैः रुधिरैः समुत्तं सिक्ताङ्गं कृत्वा वयं हिनसाम मारयाम। मल्ला इति एवमुक्त्वा रङ्गं समेत्य स्वजनान् पपृचुः योजितवन्तः। कीदृशा मल्लाः। संतक्तं सङ्कोचितं यथा तथा नद्धं बद्धं वसनं यैस्ते। परिवेगेन भयेन कम्पेन वा वृक्ता हीनाः॥

तृणेढीति। **तृह हिसि** हिंसायाम्। तृहेर्लट्। हिंसेर्लोट्। समुत्तम्। **उन्दी** क्लेदने। कर्मणि क्तः। 'नुदविदोन्द—' [८.२.५८] इति नत्वाभावे रूपम्। अक्तेति। **अन्जू** [3]व्यक्तिम्रक्षणकान्तिगतिषु[4]। व्यक्तिः प्रकाशनम्। [5]म्रक्षणं मिश्रीकरणम्। अस्मात्कर्मणि क्तः। संतक्तेति। **तन्चू** संकोचने। तन्जू इत्येके। द्वयोस्तन्त्रेण कर्मणि क्तः। परिवेगेति। ओ **विजी** भयचलनयोः। घञ्। वृक्ताः। **वृजी** वर्जने। वृत्तौ च द्रुमे[6]। 'वृची वरणे' इति केचित्। कर्मणि क्तः। पपृचुः। **पृची** सम्पर्के। सकर्मकोऽयं भट्टिनोक्तः[7]। तस्माल्लिट्। तृहादय उदात्ता उदात्तेतः। वृत्।

1 K5.6 om. this.
2 K5.6 हिनस्ति.
3 K3 व्यक्तिश्लक्षणगतिकान्तिषु.
4 K2 om. कान्ति.
5 D2 श्लक्ष्णं मिश्रीकरणम्.
6 वृजी घ् वृतौ च— *KK*. 129.
7 Vide *Bhaṭṭikāya* VI. 39—एवं वदन् दाशरथिरपृणग्धनुषा शरम्.

रुधादयो वृत्ताः । [1]अवृत्कृता इत्येके । तेन लुनत्तीति सिद्धम् । इति श्नम्विकरणम्[2] ॥

[ इति रुधादिगणः ]

[ तनादिगणः ]

**तन्वन् स मञ्चभुवि [3]सातरसः स्वबन्धून्**
**[4]अक्षण्वतां क्षितिकरो मुदमर्णुवानः[5] ।**
**कंसस्तृणीकृतरिपुर्घृणिमान् वतार्प्तिं**
**मन्वान एकमथ मञ्चमलंचकार ॥ ४ ॥**

अथ स कंसः स्वबन्धून् मञ्चभुवि तन्वन् विस्तारेण निवेशयन् तत्तत्स्थानेषु कुर्वन् वा । वतार्प्तिं प्रार्थितप्राप्तिं मन्वानः एकं मञ्चमलंचकार [6]अलंकृतवान् । सातरसो दत्तरसः । बन्धूनामित्यर्थात् । अक्षण्वताम् अहिंसकानां क्षितिकरः [7]हिंसनकृत् । मुदम् [8]अर्णुवानः प्राप्नुवन् । घृणिमान् शोभावान् ॥

तन्वन् । **तनु** विस्तारे । अयं कृञर्थेऽपि । अस्माच्छता । सातेति । **षणु** दाने । कर्मणि क्ते 'जनसन—' [६.४.४२] इति आत्वम् । अक्षण्वताम् । [9]**क्षणु** हिंसायाम् । **क्षिणु** च । क्षणेः शता । क्षितीति । क्षिणेः क्तिन् । 'अनुदात्तोपदेश—' [ ६.४.३७ ] इति नलोपः ।

---

1 E om. अवृत्....सिद्धम्.
2 K2.5.6 विकरणाः.
3 M1 सातरसं.
4 D2 K3 अक्षिण्वतां.
5 E अर्णवानः for अर्णुवानः.
6 K2.5.6 om. this word.
7 K2.5.6 हन्ता for हिंसनकृत्.
8 E अर्णवानः.
9 D2 K3 क्षिणु हिंसायाम्, क्षणु च.

[1]अर्णुवानः। **ऋणु** गतौ। शानच्। तृणीकृतेति। **तृणु** अदने। घञर्थे कः। तृणम्। तस्मात् अभूततद्भावे इति च्विः। घृणीति। **घृणु** सन्दीपने। घण इत्येके। 'इक्कृषादिभ्यः'[2] इति घृणेरिक्। तनादय उदात्ताः स्वरितेतः। वतेति। **वनु** याचने। वनेः कर्मणि क्तः। मन्वानः। **मनु** अवबोधने। शानच्। उदात्तावनुदात्तेतौ। वनुः परस्मैपदीति चान्द्राः। अलंचकार। डु **कृञ्** करणे। अनुदात्त उभयतोभाषः। अस्माल्लिट्। [3]उविकरणं समाप्तम्॥

[ इति तनादिगणः ]

[ क्र्यादिगणः ]

अथ भगवतो रङ्गप्रवेशमाह—

**क्रीणन् गुणैर्जनमतिं प्रियरूप ईशो**
**मांसश्रियां प्रमयकृत् सितपीतचेलः।**
**मोदस्कुतोऽथ कबरीं प्रयुनन् सरामः**
**क्नूनन्मृदङ्गमिह रङ्गमगादरिद्रूः**[4] ॥ ५ ॥

अथ ईशः कबरीं प्रयुनन् बध्नन् सरामो रामेण सहित इह अस्मिन् काले रङ्गमगात्। कीदृशः। गुणैर्जनमतिं क्रीणन् विनिमयन् वशीकुर्वन्। मांसश्रियां मांसपाचकानां तद्बद्विणां प्रमयकृत् हिंसनकृत्। सितपीतचेलो

1 E अर्णवानः.
2 Vār. under 3.3.108.
3 K2.5.6 इत्युविकरणाः.
4 D2 K3 अरिद्रुः for अरिद्रूः.

बद्धपीताम्बरः। मोदे स्कुतः आप्लुतः। [1]अरिद्रूः शत्रुहिंसकः। क्नूनन्मृदङ्गम् [2]क्नूनन् [3]शब्दायमानो मृदङ्गो यस्मिंस्तं रङ्गम् ॥

क्रीणन्निति। **डुक्रीञ्** द्रव्यविनिमये। शता। प्रियेति। **प्रीञ्** [4]तर्पणे कान्तौ च। कान्तिः कामना। 'इगुपधज्ञाप्रीकिरः कः'[5] [३.१.१३५] [6]इति कः। मांसश्रियाम्। **श्रीञ्** पाके। क्विप्। प्रमयेति। **मीङ्** हिंसायाम्। 'एरच्' [३.३.५६]। सितेति। **षिञ्** बन्धने। कर्मणि क्तः। स्कुतेति। **स्कुञ्** आप्रवणे। आप्लवनं तत्। आवरण इत्येके। उद्धृताविति द्रुमे[7]। अस्मात्कर्तरि क्तः। [8]प्रयुनन्। **युञ्** बन्धने। शता। क्र्यादयोऽनुदात्ता उभयतोभाषाः। क्नूनदिति। **क्नूञ्** शब्दे। शता। [9]अरिद्रूः। [10]**द्रूञ्** हिंसायाम्। [11][गतौ] इत्यप्येके। क्विप् ॥

**द्वारं पुनन् पदतलेन स लूनवैरी**
**स्तीर्णाननं मदजलेन करीतुकामम्।**
**नागं ददर्श पटबूर्णमुखं धुनानं**
**कर्णौ शृणन्तमखिलानभिपूर्तरोषम् ॥ ६ ॥**

सः श्रीकृष्णः पदतलेन द्वारं पुनन् श्रीपादारविन्दं रङ्गद्वारि निदधानः सन्। तत्र करीतुकामं हिंसितुमिच्छुं नागं कुवलयापीडाख्यं[12]

---

1 K3 अरिद्रुः.

2 K2 om. this word.

3 K2 शब्दायमानमृदङ्ग for शब्दा .........तं.

4 D2 K1 कान्तितर्पणयोः.

5 K1.3 om. किरः कः.

6 K2 om. इति कः.

7 स्कु ग्नञुद्धृतौ (v. l. उद्वृत्तौ) *KK*. 62.

8 E om. प्र.

9 K3 अरिद्रुः.

10 D2 K3 द्रुञ्.

11 *KK*. gives this sense also.

12 K2 पीडं.

गजश्रेष्ठं ददर्श। लूनवैरी छिन्नशत्रुः। कीदृशं नागम्। मदजलेन स्तीर्णाननं छन्नवक्त्रम्[1]। पटबूर्णमुखं पटच्छादितं मुखं यस्य तम्। कर्णौ धुनानं कम्पयन्तम्। अखिलान् शृणन्तं [2]हिंसयन्तम्। अभिपूर्तरोषं संपूर्णकोपम्[3]॥

पुनन्निति। **पूञ्** पवने। पवनं शोधना। शतरि 'प्वादीनां ह्रस्वः' [७.३.८०] इति ह्रस्वः। लूनेति। **लूञ्** छेदने। कर्मणि क्ते 'ल्वादिभ्यः' [८.२.४४] इति नत्वम्। स्तीर्णेति। **स्तॄञ्** छादने। कर्मणि क्तः। करीतुकामम्। **कॄञ्** हिंसायाम्। तुमुनि 'तुमः कामे मनस्यपि'[4] इति मलोपः। बूर्णेति। **बॄञ्** वरणे। भरणे [5]इति द्रुमे[6]। [7]कर्मणि क्तः। धुनानम्। **धूञ्** कम्पने। शानच्। क्नूञादय उदात्ता उभयतोभाषाः। शृणन्तम्। **शॄ** हिंसायाम्। शता। अभिपूर्तेति। **पॄ** पालनपूरणयोः। कर्तरि क्ते 'न ध्याख्यापॄमूर्छिमदाम्' [८.१.५७] इति नत्वाभावः॥

**तत्र स्परीतुमनसं रुषमाव्रृणन्त-**
**मम्बष्ठमुन्मदभरं स भृणन् बभाषे।**
**त्वामेष संप्रति मृणामि दृणामि नागं**
**नो चेज्जृणत्तम नरानक्षणन्नृणीहि॥ ७॥**

सः तत्र अम्बष्ठं [8]हस्तिपकं भृणन् भर्त्सयन् बभाषे। कीदृशं [9]हस्तिपकम्। स्परीतुमनसं हन्तुकामम्। रुषम् आव्रृणन्तं स्वीकुर्वन्तं

---

1 K2 मुखं for वक्त्रं.
2 K2.3 हिंसन्तम्.
3 E रोषं for कोपम्.
4 Vār. under 6.1.144.
5 E इत्यप्येके.
6 बॄ गि वृत्यां भृत्याम् *KK*. 73.
7 K3.5.6 E om. this word.
8,9 K2.5.6 om. this word, K3 reads हस्तिपं.

छादयन्तं वा। उन्मदभरम् उद्भूतदर्पातिशयम्। एषोऽहं त्वां संप्रति मृणामि हिंसयामि। नागं गजं दृणामि विदारयामि। हे जृणत्तम वृद्धतम नो चेत् एतन्नेच्छसि चेत्। त्वं नरान् अक्रुणन् अहिंसन् ऋणीहि मार्गात् अपगच्छ॥

स्परीतुमनसमिति। स्पॄ हिंसायाम्। तुमुन्। प्राग्वन्मलोपः। आवृणन्तम्। वॄ वरणे। शता। वॄ वरणभरणयोरित्येके। भरम् भृणन्। भॄ भर्त्सने। भरणे इति [1]केचित्। 'ऋदोरप्' [३.३.५७] शता च। मृणामि। मॄ हिंसायाम्। दृणामि। दॄ विदारणे। भये च द्रुमे[2]। द्वयोर्लट्। जृणदिति। जॄ वयोहानौ। [3]धॄ इत्येके। जृणातेः शता। नरान्। नॄ नये। पचाद्यच्। अक्रुणन्। क्रॄ हिंसायाम्। शता। [4]ॠणीहि। ॠ गतौ। लोट्॥

**इत्थं हरौ गृणति हस्तिपकोऽपि कोपी**
**जीनोऽप्यहं न तु रिणामि भियेति वादी।**
**पार्श्वे लिनन् गजमचोदयदुन्मदान्ध-**
**मव्लीनशक्तिमतिघोरजवं प्लिनन्तम्॥ ८॥**

हरौ इत्थं गृणति वदति सति, हस्तिपकोऽपि कोपी सन् अहं जीनो वृद्धोऽपि भिया नतु नैव रिणामि गच्छामीति वादी वदनशीलो गजं पार्श्वे लिनन् श्लिष्टो भवन् अचोदयत् हन्तुं प्रेरितवान्। उन्मदान्धम् उद्भूतेन मदेन अन्धम्। अव्लीनशक्तिम् [5]अतिरोहितं प्रकाशितं बलं यस्य तादृशं सन्तम्। अतिघोरजवं यथा तथा प्लिनन्तं गच्छन्तम्॥

---

1 K2 एके for केचित्.

2 दॄ गि दॄ मृ भियि दॄ यगि विदारे *KK*. 72-73.

3 K3 E झॄ.

4 K2 om. this word.

5 K1.3 अव्लीना आच्छादिता शक्तिर्यस्य.

गृणतीति । **गॄ** शब्दे । शता । शॄप्रभृतय उदात्ताः परस्मैभाषाः । जीनः । **ज्या** वयोहानौ । कर्मणि क्ते 'ग्रहिज्या' [ ६.१.१६ ] इति संप्रसारणे 'हलः' [६.४.२] इति दीर्घे ल्वादित्वान्नत्वम् । रिणामि । **री** गतिरेषणयोः । रेषणं वृकशब्दः । लट् । लिनन् । **ली** श्लेषणे । शता । अव्लीनेति । **व्ली** वरणे । गतौ श्लेषणे च द्रुमे[1] । कर्मणि क्तः । प्लिनन्तम् । **प्ली** गतौ । शता । वृत् । [2]ल्वादयो वृत्ताः । प्वादिस्तु गणान्तः ॥

**व्रीताशबृंहितजुषाभ्रिणता गजेन**
**[3]प्रक्षेतुमञ्जमनसा समनुद्रुतेन ।**
**बद्धः करेण भगवान् विहृतिं वृणानः**
**श्रश्नन् [4]निबन्धममुमाशु तलैरमश्नात्** ॥ ९ ॥

[5]प्रक्षेतुं [6]हन्तुं समनुद्रुतेन वेगादनुगतेन गजेन करेण बद्धो भगवान् विहृतिं वृणानः स्वीकुर्वन् [7]निबन्धं श्रश्नन् विमोचयन् अमुं गजं तलैराशु अमश्नात् ताडयामास । कीदृशेन गजेन । व्रीताशबृंहितजुषा व्रीताशं छादितदिक्तटं बृंहितं गर्जितं कुर्वता । अभ्रिणता अभीतेन ॥

व्रीतेति । **व्री** वरणे । गतौ च द्रुमे[8] । कर्मणि क्तः । अभ्रिणता ।

1 What we get in *KK.* is व्ली गि गत्यां च (56), the च indicating वृत्यां given earlier. The sense श्लेषण is not seen there for this root. That sense is found for ली—vide ली ङ्यओ श्लिषि (55).

2 E प्वादयो वृत्ताः ल्वादिषु [स्तु] गणान्तः.

3 K2 प्रक्षेप्तुं.

4 E निबद्धं for निबन्धं.

5 K2 प्रक्षेप्तुं.

6 K3 om. this word.

7 E निबद्धं.

8 In *KK.* it is व्ली that has the sense of गति; vide—वी गिग् वृत्यां, व्रीङ्चओ च, व्ली गि गत्यां च (56).

भ्री भये । [1]भरणे इति केचित् । शता । अस्य ल्वादित्वमप्यस्ति द्रुमे[2] । [3]प्रक्षेतुम् । क्षीष् हिंसायाम् । तुमुन् । अज्ञेति । ज्ञा अवबोधने । 'इगुपधज्ञा[4]' [३.१.१३५] इति कः । बद्धः । बन्ध बन्धने । कर्मणि क्तः । ज्यादयोऽनुदात्ताः परस्मैभाषाः । वृणानः । वृङ् संभक्तौ । [5]संभक्तिः स्वीकारः । उदात्त आत्मनेभाषः । शानच् । श्रश्नन् । श्रन्थ विमोचनप्रतिहर्षयोः । प्रतिहर्षो न ज्ञातः । अस्माच्छता । अमथ्नात् । मन्थ विलोडने । लङ् ॥

**तद्ग्रन्थनं परिहरन् गतिभिर्विकुथ्य**
**पृष्ठे करोन्मृदितपुच्छमकर्षदेनम् ।**
**भूयो निपात्य मृडितस्वजनः स गुध्नन्**
**दन्तौ विकुष्य गजमुत्क्षुभितं व्यनभ्नात् ॥ १० ॥**

स [6]श्रीकृष्णो गतिभिः संचारभेदैस्तद्ग्रन्थनं तस्य बन्धनं परिहरन् वर्जयन् । एनं पृष्ठे विकुथ्य संश्लिष्य निलीय करोन्मृदितपुच्छं हस्तसंचूर्णित-लाङ्गूलं[7] सन्तम् अकर्षत् । क्रियाविशेषणं वा । भूयो गुध्नन् कुप्यन् उत्क्षुभितं गजं निपात्य दन्तौ विकुष्य [8]उन्मूल्य व्यनभ्नात् अहिंसीत् । मृडितस्वजनः सुखितबन्धुजनः ॥

---

1 K2 om. this sentence.

2 भ्री गगि भृत्यां च--*KK.* 54. The गि indicates that the root belongs to the ल्वादि class, and by अपूः स ल्वादिः (*KK.* 9) it gets ल्वादित्व also.

3 K2 प्रक्षेप्तुं.

4 E gives the full sūtra adding प्रीकिरः कः.

5 K2.5.6 om. this sentence.

6 K2.5.6 om. this word.

7 K2.5.6 पुच्छं for लाङ्गूलं.

8 K3 E उन्मील्य.

ग्रन्थनमिति। **ग्रन्थ** संदर्भे। [1]श्रन्थ इत्यप्येके। ग्रन्थेर्ल्युट्। विकुथ्य। **कुन्थ** संश्लेषणे। संक्लेशे इति [2]केचित्। **कुथ** [3]इत्येके। द्वयोस्तन्त्रेण ल्यप्। उन्मृदितेति। **मृद** क्षोदे। संचूर्णनं तत्। कर्मणि क्तः। [4]मृडितेति। **मृड** च। क्षोदे इति शेषः। सुखे चेति केचित्। सुखने इत्यन्ये। अस्मात् कर्मणि क्तः। गुध्नन्। **गुध** रोषे। शता। विकुष्य। **कुष** निकर्षे। स च बहिर्निःसारणम्[5]। ल्यप्। उत्क्षुभितम्। **क्षुभ** सञ्चलने। कर्तरि क्तः। व्यनभ्नात्। **णभ तुभ** हिंसायाम्। लङ्॥

**आधोरणानपि च दन्तवरेण तुभ्नन्**
**क्लिश्नन् मतिं पलसुरादिकमश्नतां सः।**
**ध्रस्तं फलप्रकरमुध्रसितांश्च शालीन्**
**प्रादद्भिरैष्यत गिरा परिविष्टपापैः॥ ११॥**

आधोरणान् हस्तिपकान् अपि च दन्तवरेण तुभ्नन् हिंसन् स श्रीकृष्णः ध्रस्तम् उञ्छनेन अर्जितं फलप्रकरम् उध्रसितान् [6]उञ्छनार्जितान् शालींश्च प्रादद्भिः भक्षयद्भिः सद्भिः गिरा ऐष्यत पुनः पुनः भृशं वा स्तुतोऽभूत्। कीदृशः श्रीकृष्णः। पलसुरादिकं मांसमद्यादिकम् अश्नतां मतिं क्लिश्नन् पीडयन्। परिविष्टं विप्रयुक्तमपगतं[7] पापं येषां तैः सद्भिः॥

तुभ्नन्निति। तुभेः शता। क्लिश्नन्। [8]अश्नताम्। **क्लिशू** विबाधने। **अश** भोजने। द्वयोः शता। ध्रस्तम्। उध्रसितान्। **उध्रस**

1 K1.3 E श्रन्थमपि केचित् पठन्ति; K5.6 om. this sentence.
2 K2 एके for केचित्.
3 K2 इत्यन्ये.
4 K3 E om. this.
5 D2 K3 निस्सरणम्.
6 K2.5.6 उञ्छादितान्.
7 K2 गतं for अपगतं.
8 E reads अश्नताम् after क्लिशू विबाधने.

उञ्छे । उकार इदित्येके । मतद्वये कर्मणि निष्ठा । ऐप्यत । [1]इष आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । तच्च [2]प्रकरणादिप्राप्तायाः क्रियाया इत्यौचित्यात् ज्ञेयम् । अस्मात्कर्मणि लङ् । परिविष्टेति । **विष** विप्रयोगे । कर्तरि क्तः ॥

**प्रुष्णन् सतां प्रियमयं प्लुषिताङ्गरागः**
**पुष्णन् मुदं मृगदृशां रिपुधाम मुष्णन् ।**
**वक्त्रारविन्दखचितस्मितखौनदाभो**
**रङ्गं गतोंऽसभुवि दन्तवरं प्रगृह्णन् ॥ १२ ॥**

अयं भगवान् अंसभुवि दन्तवरं प्रगृह्णन् रङ्गं गतः [3]प्राप्तः । कीदृशः[4] । सतां प्रियं प्रुष्णन् पूरयन् । प्लुषितः स्निग्धो निबिडो अङ्गरागो यस्य सः । रिपूणां धाम प्रतापं मुष्णन् । मृगदृशां मुदं पुष्णन् । वक्त्रारविन्दात् खचितेन नितान्तोत्पन्नेन स्मितेन खौनती नितान्तं उत्पद्यमाना आभा यस्य सः ॥

प्रुष्णन् । **प्रुष प्लुष** स्नेहनसेचनपूरणेषु । [5]मोहनदाहनयोरप्याह शङ्करः । प्रुषेः शता । प्लुषितेति । प्लुषेः कर्तरि क्तः । पुष्णन् । [6]मुष्णन् । **पुष** पुष्टौ । **मुष** स्तेये । द्वयोः शता । खचितेति । **खच** भूतप्रादुर्भावे । [7]भूतप्रादुर्भावो नितान्तोत्पत्तिः । **खव** इत्येके । [8]हेठ इत्यप्येके । खचेः कर्तरि क्तः । खौनदिति । खवेरनुनासिकादौ श्नि परे ऊठ् । तस्य शता ।

1 E ईष.
2 K2 प्रकरणप्राप्तक्रियायाः.
3 K2.5.6 om. this word.
4 K2 adds अयम्.
5 K2.5.6 om. मोहन............ शङ्करः.
6 K3 E read मुष्णन् after पुष पुष्टौ.
7 K2.5.6 स च for भूतप्रादुर्भावो.
8 E हेट, K2.5.6 हच.

श्रन्थादय उदात्तेतः [1]विषिवर्जमुदात्ताश्च। प्रगृह्णन्। **ग्रह** उपादाने। उदात्तः स्वरितेत्। अस्माच्छता। इति श्नाविकरणम्[2] ॥

[ इति क्र्यादिगणः ]

[ चुरादिगणः ]

अथ मल्लरङ्गं गते भगवति कंसस्यावस्थामाह—

**संचोरयन्तमरिगर्वमशेषभद्रं**
**चिन्तन्तमन्तकमिवाप्तमयन्त्र्यवीर्यम्।**
**प्रस्फुण्डयन्नपि तमप्युपलक्ष्य कंस-**
**स्तत्रास कुन्दकसुलालितमिन्दितश्रीः ॥ १३ ॥**

प्रस्फुण्डयन् परिहसन्नपि कंस आप्तं प्राप्तं तं [3]श्रीकृष्णम् अन्तकमिव अभ्युपलक्ष्य दृष्ट्वा तत्रास भीतवान्। कुन्दकैः अनृतभाषिभिः सुलालिता मिन्दिता प्रवृद्धा श्रीर्यस्य सः। कीदृशं तम्। अरिगर्वं संचोरयन्तम्। अशेषभद्रम् अशेषाणां मङ्गलम्। चिन्तन्तं निरूपयन्तम्। अयन्त्र्यम् असंकोच्यम् [4]अनिवारणीयं वीर्यं यस्य तम् ॥

संचोरयन्तमिति[5]। चुर स्तेये। अकार उक्त्यर्थः। 'णिचश्च' इति तङ् चुरादेर्नेति मतं माधवदूषितम्[6], तेनोभयपदित्वमेव। अस्माच्चुरेर्णिचि शता ॥

---

1 K1.3 E add क्लिशि before.
2 K2.5.6 श्नाविकरणाः.
3 K2.5.6 om. this word.
4 K2.5.6 अवारणीयं.
5 K2.5.6 om. इति.
6 Vide *MDV* under चुर स्तेये.

केचित्सर्वचुरादीनामनित्यण्यन्ततां जगुः ।
येषां विकल्पचिह्नं स्यात्तेषामेवेति माधवः ॥[1]

चिन्तन्तम् । **चिति** स्मृत्याम् । णिचि 'अनिदितां—'[2] [६.४.२४] इति नलोपाप्रसङ्गात् तन्निषेधार्थमिदित्त्वानुपयोगादिदितां णिजनित्यः । तेन णिजभावे शपि शता । अयन्त्र्येति । **यत्रि** संकोचने । णिजन्तादचो यत् । प्रस्फुण्डयन् । **स्फुडि** परिहासे । स्फुटि इत्येके । स्फुण्डेः शता । अभ्युपलक्ष्य । **लक्ष** दर्शनाङ्कनयोः । ल्यप् । कुन्दकेति । **कुदि** अनृतभाषणे । कुद्द इत्येके । कुन्देर्ण्वुल् । सुलालितेति । **लड** उपसेवायाम् । कर्मणि क्तः । मिन्दितेति । **मिदि** स्नेहने । मिद इत्येके । मिन्देः कर्तरि क्तः ॥

**ओलण्डिताद्रिरपि जालितदिव्यधामा**
**निष्पीडितारिरनुनाटितमर्त्यभावः ।**
**अश्राथबाधितमनाः स निरीक्षकाणां**
**आनन्दमन्तरपरत् परमूर्जयन्तम् ॥ १४ ॥**

निरीक्षकाणाम् अश्राथबाधितमनाः अप्रयत्नवशीकृतचित्तः सन् स भगवान् अन्तः [3]मनसि परम् [4]अधिकम् आनन्दम् अपरत् पूरयामास । कीदृशः । ओलण्डिताद्रिः उत्क्षिप्तगोवर्धनोऽपि जालितदिव्यधामा छादितामानुषप्रभावः । अनुनाटितमर्त्यभावः अनुकृतमनुष्यस्वभावः[5] । ऊर्जयन्तं [6]प्रबलीभवन्तम् आनन्दम् ॥

---

1 *PS* under चुर स्तेये.
2 E adds हल.
3,4 K2 om. this word.
5 K3 मनुष्यभावः.
6 K3 E om. प्र.

ओलण्डितेति [1]जालितेति निष्पीडितेति अनुनाटितेति । **ओलडि** उत्क्षेपणे । ओकार इदित्येके[2] । **जल** अपवारणे । **पीड** अवगाहने । तच्च बाधनम् । बाधनगाहनयोरिति द्रुमे[3] । **नट** अवस्यन्दने । तच्च नाट्येनार्थप्रकाशनम् । एषां कर्मणि क्तः । अश्राथेति । **श्रथ** प्रयत्ने । [4]प्रख्याने इति केचित् । 'एरच्'[5] [ ३.३.५६ ]। 'एरजण्यन्तानाम्' इति मते घञ्[6] । बाधितेति । **बध** संयमने । बन्ध इति [7]केचित् । बाधेः कर्मणि क्तः । अपरत् । **पॄ** पूरणे । दीर्घोक्तिफलं परितेति इडणिच्येव स्यादिति णिज्विकल्पः । णिजभावे शपि [8]लङ् । ऊर्जयन्तम् । **ऊर्ज** बलप्राणनयोः । शता ॥

श्रीकृष्णदर्शनसंजातानन्दानां[9] संभाषणमाहाष्टभिः श्लोकैः—

**संपश्य तन्निजदृशैवमवर्णि लोकै-**
**रेषोऽजनिष्ट किल दुष्टविचूर्णनार्थम् ।**
**अश्राथितो व्रजगृहेऽपि च पर्थितोऽभू-**
**दासम्बयन् जनमतिं निजशाम्बरीभिः ॥ १५ ॥**

---

1 K2 om. this and the next two words here, but inserts them before the root जल.

2 K2 adds here कर्मणि क्तः । जालितेति, निष्पीडितेति, अनुनाटितेति ।

3 पीड्ृक् बाधगाहे—*KK*. 161.

4 E प्रस्थाने.

5 The इदन्तत्व of the root is because of णिच्, vide *PS* under 3.3.56—ण्यन्ताना-मिदन्तत्वादेरच्.

6 Vide Kaiyaṭa under 3.3.56.

7 K2 एके for केचित्.

8 E घञ् (which is totally inapplicable here).

9 K1.2 जात for संजात; K2 adds जनानां.

लोकैः निजदृशा तं संपक्ष्य परिगृह्य दृष्ट्वा एवमवर्णि कथितम् । एष दुष्टविचूर्णनार्थम् अजनिष्ट किल । अपि च व्रजगृहे अप्राथितः अप्रख्यातः सन् पर्थितः प्रक्षिप्तोऽभूत् । निजशाम्बरीभिः स्वमायाभिर्जनमतिमासम्बयन् स्वसम्बद्धां कुर्वन् ॥

संपक्ष्येति । **पक्ष** परिग्रहे । ल्यप् । अवर्णि । **वर्ण** वर्णने । [1]प्रेरणेऽपीति केचित् । भावे चिण् । विचूर्णनेति । **चूर्ण** प्रेरणे । अस्य क्षोदनमप्यर्थः । तदेव वा प्रेरणमित्युक्तम् । अस्माल्ल्युट् । अप्राथितः । **प्रथ** प्रख्याने । क्षेपे च द्रुमे[2] । कर्तरि क्तः । पर्थितः । **पृथ** प्रक्षेपे । पथ इत्येके । कर्मणि क्तः । आसम्बयन् । **षम्ब** सम्बन्धने । **शम्ब** इत्येके । साम्बे इत्यन्ये । सम्बेः शता । शाम्बरीभिः । शम्बेर्बाहुलकादरप्रत्यये शम्बरः । तस्येयं शाम्बरी ॥

**सा पूतना च शिशुभक्षणकुट्टनोत्का**
**जघ्ने प्रपुट्टितकृपेण विचुट्टिताघा ।**
**वात्यासुरः पुनरनट्टयविसुट्टकः स-**
**न्नेतेन [3]लुण्टितबलोऽजनि शाठितात्मा ॥ १६ ॥**

ऐतेन सा पूतना च जघ्ने । प्रपुट्टिता अल्पीभूता कृपा यस्य तेन । शिशूनां भक्षणे कुट्टने छेदने च उत्का उत्सुका, विचुट्टितम् अल्पीभूतं गतम् अघं यस्याः सा । पुनः वात्यासुरः एतेन [4]लुण्टितबलः मुषितबलः अजनि [5]जनितः । अनट्टयविसुट्टकः आदरणीयानाम् अनादरकृत् सन् भवन् शाठितात्मा असंस्कृतचित्तः ॥

---

1 K2 प्रेरणे चेत्येके for प्रेरणेऽपीति केचित्.

2 पृथ क् प्रक्षेपे, प्रथ् क च, प्रथ् मषङ् च ख्यातौ—*KK*. 187-88.

3,4 E लुण्ठित.

5 K2 om. this word.

भक्षणेति कुट्टनेति । **भक्ष** अदने **कुट्ट** छेदनभर्त्सनयोः । [1]पूरणयोरित्येके । द्वयोर्ल्युट् । प्रपुट्टितेति विचुट्टितेति । **पुट्ट चुट्ट** अल्पीभावे । द्वयोः कर्तरि क्तः । अनट्ट्यविसुट्टकः । **अट्ट षुट्ट** अनादरे । अल्पीभावे च द्रुमे[2] । क्रमात् 'अचो यत्' [३.१.५७] इति यत्, ण्वुल् च । [3]लुण्टितेति । **लुण्ट** स्तेये । अनादरे च द्रुमे[4] । शाठितेति । **शठ श्वठ** असंस्कारगत्योः । श्वठि इति केचित् । संस्कारे च द्रुमे[5] । आद्य आलस्ये च[6] । [7]लुण्टिशाठ्योः कर्मणि क्तः ॥

**आश्वाठितारिकुलतुञ्जविपिञ्जशीलः**
**संपेसयन् गृहमसान्त्वयदेष गोपीः ।**
**सुश्वल्कनाः सुमधुरप्रियवल्कनाभिः**
**प्रस्नेहयन्न च कदाचिदसिस्मिटत्ताः ॥ १७ ॥**

एष गृहं संपेसयन् प्राप्नुवन् गोपीरसान्त्वयत् । आश्वाठितस्य आगतस्य अरिकुलस्य तुञ्जविपिञ्जशीलो हिंसाग्रहणशीलः । हननशील इति यावत् । ताः सुमधुरप्रियवल्कनाभिः सुमधुरैः प्रियभाषणैः प्रस्नेहयन् स्निग्धाः कुर्वन् कदाचिदपि न असिस्मिटत् अनादृतवान् । सुश्वल्कनाः शोभनोक्तीर्गोपीः ॥

---

1 E पूरणे इत्येके.

2 अट्ट क् तौच्छ्ये ऽनादरे; शिट् षिटानादरे, षुट्टक् तौच्छ्ये च *KK*. 133; 145.

3 E लुण्ठितेति, लुण्ठ.

4 लुण्ट क्यवज्ञाचौर्ये—*KK* 143.

5 श्वठ्श्वठि क् च गत्यसंस्कृतसंस्कृते—*KK*. 152.

6 Two folios, Nos. 118 and 119, containing the portion from here upto अनादरे च द्रुमे in the commentary on verse 20 are missing in K2.

7 E लुण्ठि.

आश्वाठितेति । श्वठेः कर्तरि क्तः । तुञ्जविपिञ्जेति । **तुजि पिजि** हिंसाबलादाननिकेतनेषु । दाने च द्रुमे[1] । तुज पिज इत्येके । लजि लुजि इत्यन्ये । तुजिपिज्योर्घञ् । संपेसयन् । **पिस** गतौ । शता । असान्त्वयत् । **षान्त्व** सामप्रयोगे । लङ् । सुश्वल्कनेति । **श्वल्क वल्क** परिभाषणे । श्वल्केर्ल्युट् । वल्कनाभिः । वल्केः 'ण्यासश्रन्थ' [३.३.१०७] इति युच् । प्रस्नेहयन् । **ष्णिह** स्नेहने । शता । असिस्मिटत् । **स्मिट** अनादरे । लुङि चङ् ॥

**कः स्माययेत विभुमेनमशिश्लिषद् यः**
**पन्थन् व्रजेऽत्र भवपिच्छनभाग्भिरेव ।**
**छन्दञ्छुचं वरमशिश्रणदाश्रितानां**
**संताडनैर्वृषभदैत्यमखाडयच्च ॥ १८ ॥**

योऽत्र व्रजे पन्थन् संचरन् भवपिच्छनभाग्भिः संसारच्छेदभाग्भिः आसन्नमुक्तिभिरेव अशिश्लिषत् [2]सम्पर्कं प्राप्तवान् । एनं विभुं कः स्माययेत अनाद्रियेत । आश्रितानां शुचं छन्दन् नाशयन् वरं प्रार्थितम् अशिश्रणत् दत्तवान् । संताडनैः प्रहारैः वृषभदैत्यमखाडयत् विदारितवांश्च ॥

स्माययेत । **स्मिङ्** अनादरे इत्येके । ङित्वात्तङ्ङेव । अस्मालिङ् । अट स्मिट गतावित्यप्यन्ये । अशिश्लिषत् । **श्लिष** श्लेषणे । लुङि चङ् । पन्थन् । **पथि** गतौ । शपि शता । पिच्छनेति । **पिच्छ** कुट्टने । ल्युट् । छन्दन् । **छदि** संवरणे । शपि शता । अशिश्रणत् ।

1 तुजिक् भाषट्टार्थे; पिजि क् भाषट्टार्थे *KK.* 120,122. See also षट्टक् निकेतने हिंसे बले दाने—146,

2 The editor of E unnecessarily emends this as सपक्षं.

**श्रण** दाने। प्रायेण विपूर्वः। अस्माल्लुङि चङ्। संताडनैः। **तड** आघाते। [1]शोभार्थश्च [2]द्रुमे। ल्युट्। अखाडयत्। **खड खडि कडि** भेदने। अन्त्यो रक्षणे च द्रुमे[3]। खडेर्लङ्॥

**अश्वं व्यखण्डदचकण्डदघासुरादीन्**
**धेनूरकुण्डदभिगुण्डितपीतचेलः।**
**किंच स्वगात्रमवकुण्ठयतो महाहे-**
**र्दर्पं चुखुण्ड विषमेष मुखाद्विवण्टन्॥ १९॥**

किं च। अश्वं व्यखण्डत्, अघासुरादीन् अचकण्डत्। द्वयोरखण्डयदित्यर्थः। धेनूरकुण्डत् रक्षितवान्। अभिगुण्डितं वेष्टितं पीतचेलं येन सः। स्वगात्रमवकुण्ठयतश्छादयतः। महाहेः कालियस्य मुखात् विषं विवण्टन् विभाजयन् छर्दयन् दर्पं चुखुण्ड खण्डितवान्॥

व्यखण्डदिति। खण्डेः शपि लङ्। अचकण्डत्। कण्डेर्णिचि चङ्। अकुण्डत। **कुडि** रक्षणे। शपि लङ्। अभिगुण्डितेति। **गुडि** वेष्टने। रक्षणे चैके। **कुठि** इत्यन्ये। गुण्डेः कर्मणि क्तः। अवकुण्ठयतः। कुण्ठेः शता। चुखुण्ड। **खुडि** खण्डने। णिजभावे लिट्। विवण्टन्। **वटि** विभाजने। वडि इत्येके। वण्टेः शपि शता॥

**बर्हादिमण्डितसुभण्डितविग्रहोऽसौ**
**प्रच्छर्दितः किल बकेन च पुस्तितार्तिः।**
**संबुस्तिते गिरिमखे परिचोद्य गोपान्**
**प्रानकयद्धरिमखं मदधक्कनार्थी॥ २०॥**

बर्हादिमण्डितः सुभण्डितो भृशं कल्याणीभूतो विग्रहो यस्य सः।

---

1 E शोभायां च.
2 तडक् त्विषि तडिड्ङ्प्याहतौ— *KK*. 159.
3 कडिक् भेदे रक्षणे—*KK*. 155.

असौ बकेन प्रच्छर्दितः किल। पुस्तिता दत्ता बकस्य आर्तिर्येन सः। संबुस्तिते आदृते गिरिमखे गोपान् परिचोद्य प्रेरणं कृत्वा मदधक्कनार्थी इन्द्रस्य [1]दर्पनाशनार्थी सन् हरिमखं प्रानक्कयत् अनाशयत्॥

मण्डितेति। **मडि** भूषायां हर्षे च। [2]कर्मणि क्तः। सुभण्डितेति। **भडि** कल्याणे। कर्तरि क्तः। प्रच्छर्दितः। **छर्द** वमने। कर्मणि क्तः। पुस्तितेति। **पुस्त बुस्त** दानादरयोः। अनादरे च द्रुमे[3]। कर्मणि क्तः। संबुस्तितेति। प्राग्वत् क्तः। परिचोद्य। **चुद** संचोदने। [4]संचोदनं प्रश्नः प्रेरणा च। ल्यप्। प्रानक्कयत्। **नक्क धक्क** नाशने। नक्केर्लङ्। धक्कनेति। धक्केर्ल्युट्॥

**[5]दुर्दान्तचक्रु पशुपचुक्कनमप्यरौत्सीत्**
**प्रक्षालितक्षितितलातुलवर्षरोधी[6]।**
**सन्दोलयन्नधिकपोलितमद्रिराजं**
**सञ्चोलितं सुबहुमूलितशाखिवृन्दैः॥ २१॥**

अद्रिराजं गोवर्धनं सन्दोलयन् उत्क्षिपन् प्रक्षालितक्षितितलं [7]मज्जितभूतलम् अतुलं वर्षं रोद्धुं शीलं यस्य तादृशः सन्। पशुपानां चुक्कनं व्यथाम् अरौत्सीत् निवारितवान्। दुर्दान्तचक्रु अशान्तपीडकः। अधिकपोलितम् अतिमहान्तं सुबहुभिः मूलितैः प्ररूढैः शाखिवृन्दैः सञ्चोलितम् अत्युच्छ्रितं च अद्रिराजम्॥

---

1 K5.6 मद for दर्प.

2 K1. om. कर्मणि क्तः.

3 पुस्त क वन्दे बुस्तक् च नादृत्यादृत्योः—*KK*. 182.

4 K5.6 तच्च for संचोदनं.

5 M1 दुर्दान्तचक्रपशुचुक्कन.

6 D2 K3 तला इव वर्ष.

7 E मार्जित–K3 मण्डित.

दुर्दान्तचगिति। चक्क चुक्क व्यथने। चिक्क इति चैके। चक्कः क्विप्। चुक्कनम्। चुक्केर्ल्युट्। प्रक्षालितेति। क्षल शौचकर्मणि। कर्मणि क्तः। [1]तलेति। तल प्रतिष्ठायाम्। अच्। [2]अतुलेति। तुल उन्माने। कः। चुरादिणिचोऽनित्यत्वात् तदभावः। सन्दोलयन्। दुल उत्क्षेपे। शता। [3]पोलितम् सञ्चोलितम् [4]मूलितेति पुल महत्त्वे। चुल समुच्छ्राये। मूल रोहणे। त्रिभ्यः कर्तरि क्तः॥

**काल्यप्रवेलनकरोऽयमवेलयद्द्राग्**
**अन्यांश्च तेलितकृपः खलु कंसचाल्यान्।**
**सम्पालयेद् विमतलूष्यपशुल्वभूमा**
**क्ष्मामेष राम इव [5]शूर्पणखाविचोटी॥ २२॥**

काल्यप्रवेलनकरः [6]निरसनीयानां [7]निरासकः अयम् अन्यांश्च कंसचाल्यान् कंसभृत्यान् द्राक् शीघ्रम् अवेलयत् खलु विदारितवान्। तेलितकृपः निबिडीभूतदयः एष शूर्पनखाविचोटी [8]शूर्पनखाङ्गच्छेदी राम इव क्ष्मां सम्पालयेत्। विमतलूषी शत्रुघाती। अपशुल्वभूमा अमानमहिमा॥

---

1 K2.5.6 om. तलेति····अच्.

2 K2.5.6 om. अ.

3 K2 अधिकपोलितम्.

4 E मूलितम्, K3 मूलितमिति.

5 All *MSS*. other than M1 read शूर्पनखा and that is the reading as explained in the commentary. But such a form cannot be grammatically justified. If only the यौगिकार्थ is meant then the prohibition of ङीष् will not apply and we can get only the form शूर्पनखी.

6 K2 निरसनीयनिरासकरः, K5.6—नीयनिरासकः.

7 K1 निरासकरः.

8 K3 शूर्पनखाच्छेदी.

काल्येति । प्रवेलनेति । **कल** **विल** क्षेपे । द्वयोर्ण्यल्ल्युटौ । किल इत्यप्येके । अबेलयत् । **बिल** भेदने । लङ् । तेलितेति । **तिल** स्नेहने । कर्तरि क्तः । चाल्यान् । **चल** भृतौ । ण्यत् । सम्पालयेत् । पाल रक्षणे । लिङ् । विमतलूषी । **लूष** हिंसायाम् । णिनिः । शुल्बेति । **शुल्ब** माने । घञ् । शूर्पनखेति । **शूर्प** चेत्येके । तस्माद् घञि शूर्पः । शूर्पसदृशं नखमस्या इति शूर्पनखा । 'नखमुखात्संज्ञायाम् [ ४.१.५८ ]' इति [1]ङीप् 'पूर्वपदात्संज्ञायामगः' [ ८.४.३ ] इति णत्वं च संज्ञायामेवेति णत्वाभावष्टाप् च[2] । विचोटी । **चुट** छेदने । णिनिः ॥

**इत्यादिवादिषु जनेषु विमोटितारिः**
**पापप्रपण्डिपदपांसुरवाज्यधामा ।**
**सुव्राजितेन मनसा परिमार्ग्य एषां**
**तोषं व्यशुल्कयदसौ नयनप्रचम्पैः ॥ २३ ॥**

जनेषु इत्यादिवादिषु सत्सु असौ नयनप्रचम्पैः कटाक्षसंचारैः एषां तोषं व्यशुल्कयत् संपादितवान् । कीदृशः । विमोटितारिः संचूर्णितशत्रुः । पापप्रपण्डिपदपांसुः पापनाशिपादरजाः । अवाज्यधामा अज्ञेयस्वरूपः । सुव्राजितेन सम्यक् संस्कृतेन मनसा परिमार्ग्यः प्राप्यः ॥

विमोटितेति । **मुट** संचूर्णने । कर्मणि क्तः । [3]प्रपण्डि इति । **पडि** **पसि** विनाशने । पण्डेर्णिनिः । पांसुरिति । 'अर्जिदृशिकम्यमिपंसि-

---

1 E न ङीष् । पूर्व—

2 There is some confusion in the commentary here. It seems to take the sūtra नखमुखात् etc, as laying down ङीष् while actually it prohibits it. Even if the word is taken in its यौगिकार्थ, although णत्व can be avoided the ङीष् cannot be prohibited.

3 K2 पापप्रपण्डि.

बाधाम्[1] [ उ. १.१७ ] इत्यादिना पंसेः कुप्रत्ययो दीर्घश्च । [2]अवाज्येति । **वज मार्ग** संस्कारगत्योः । **व्रज** इत्येके । वाजेर्ण्यत् । व्राजितेनेति । व्राजेः कर्मणि क्तः । परिमार्ग्यः । मार्गेर्ण्यत् । मार्गसंस्कारो धात्वर्थ इत्येके । व्यशुल्कयत् । **शुल्क** सर्जने । अर्जनं तत् । वर्जनभाषणयोश्च द्रुमे[3] । लङ् । प्रचम्पैः । **चपि** गत्याम् । घञ् ॥

**क्षम्पद्धियामभिमतः स च कंसपीडा-**
**प्रक्षञ्जितस्वजनचिन्तनजातरोषः ।**
**आश्वर्तितो रणभुवं सबलोऽत्र रेजे**
**विश्वभ्रिताभ्रकुहरे सति तूर्यनादे ॥ २४ ॥**

तूर्यनादे विश्वभ्रिताभ्रकुहरे सति व्याप्ताकाशे सति स च सबलः रणभुवम् आश्वर्तितः प्राप्तोऽत्र रेजे । क्षम्पद्धियामभिमतः[4] । क्षम्पन्ती धीर्येषां तेषामिष्टः । कंसपीडया प्रक्षञ्जितानां कृच्छ्रेण जीवतां स्वजनानां चिन्तनेन जातरोषः ॥

क्षम्पदिति । **क्षपि** क्षान्त्याम् । शपि शता । प्रक्षञ्जितेति आश्वर्तितेति विश्वभ्रितेति । **क्षजि** कृच्छ्रजीवने । **श्वर्त** गत्यां च । **श्वभ्र** च । आद्ययोः कर्तरि क्तः । श्वभ्रेः कर्मणि क्तः । श्वभ्रिः बिलार्थे च द्रुमे[5] ॥

**चाणूर एनमथ विज्ञपयन्नृपाज्ञां**
**चण्डातकं सुयमयंश्चहको बभाषे ।**

---

1 K2 gives the full sūtra by adding ऋजिपशितुकुबुक्-[दीर्घ]हकाराश्च.

2 K2 om. अ—.

3 We get in *KK*. only the meanings सर्जन and वर्जन, the meaning भाषण is given for श्वल्क. Vide शुल्क क सर्जने वर्जने श्वल्कक् च भाषे (87–88).

4 K2.5.6 om. अभिमतः.

5 श्वभ्रक् बिले गतौ—*KK*. 238.

**युध्यस्व भीतिरहितो बलयन् खलु त्वं**
**कीर्तिं चयस्व चपयापि नृपप्रसादम् ॥ २५ ॥**

[1]अथ चाणूरः एनं नृपाज्ञां विज्ञपयन् बोधयन् बभाषे । हेतौ शता । चण्डातकं मल्लयुद्धोचितं वासः सुयमयन् दृढं वेष्टमानो बध्नन् । चहकः शाठ्यकर्ता । बलयन् शक्तो भवन् । [2]त्वं भीतिरहितो युध्यस्व कीर्तिं चयस्व नृपप्रसादमपि चपय । द्वयोरार्जयेत्यर्थः ॥

इतः परं सप्त मितः । **ज्ञप** मिच्च । अस्य ज्ञानज्ञापने अर्थाविति स्थितम् । विज्ञपयन्निति[3] । ज्ञपेः शता । [4]सुयमयन् । **यम** च परिवेषणे । तच्चात्र वेष्टनम् । चकारान्मिदित्यनुषङ्गः । अस्माच्छता । चहकः । **चह** परिकल्कने । ण्वुल् । चप इत्येके । [5]तस्य वा मित्त्वं द्रुमे[6] । रहितः । **रह** त्यागे । कर्तरि क्तः । बलयन् । **बल** प्राणने । शता । चयस्वेति चपयेति । चिञ् चयने । णिच्युभयपदित्वेन ञित्वफलाभावादस्य णिज्विकल्पः । तत्र णिचि 'चिस्फुरोर्णौ' [ ६.१.५४ ] इति वा आत्वे पुक् । अन्यत्र वृद्धिः । उभयत्र मित्वाद्ध्रस्वः । अणिचि णिचि च लोट् । मितो गताः । 'नान्ये मितोऽहेतौ' । अहेतुमण्ण्यन्तेषु एभ्योऽन्ये मितो न स्युः । तेन चुरादिषु अमन्तादीनां मित्त्वं न ॥

---

1 E om. this word.

2 K2 om. this word.

3 The editor of E adds क्षप ज्ञानज्ञापनमारणतोषणनिशामनेषु.

4 From here upto बल प्राणने शता is omitted in K3.

5 K2 अस्य.

6 चह् कम चह शाठ्ये *KK*.346. The anubandha here is म and this shows that the मित्त्व is नित्य. It will be optional only if the anubandha is मि.

बुद्धिर्न घट्टयतु तेऽस्तयतां जनानां
मध्ये न खट्टय बलं गजसट्टकोऽसि ।
न स्फिट्टयामि किमु चुम्बभिया स्थितोऽसि
किं पूलितान्नकृतपुंसनयात्र पुंसाम् ॥ २६ ॥

अस्तयतां सङ्घातीभवतां जनानां मध्ये ते बुद्धिर्न घट्टयतु न चलतु । बलं न खट्टय [1]न छादय । त्वं गजसट्टको गजहिंसकोऽसि । अहं त्वां न स्फिट्टयामि । [2]न हिनस्मि । त्वं चुम्बभिया [3]हिंसनभिया किमु स्थितोऽसि । अत्र लोके पुंसां पूलितान्नेन सङ्घातीभूतेन अन्नेन कृतया पुंसनया देहाभिवर्धनेन स्वशक्त्यप्रकाशने किं फलम् । न किंचित् ॥

घट्टयत्विति । **घट्ट** चलने । लोट् । अस्तयताम् । **अस्त** सङ्घाते । शता । खट्टय । **खट्ट** संवरणे । लोट् । सट्टकः । **षट्ट स्फिट्ट चुबि** हिंसायाम् । आद्यो बलादाननिवासेषु च द्रुमे[4] । अन्त्यश्चुम्बने च[5] । सट्टेः ण्वुल् । स्फिट्टयामि । स्फिट्टेर्लट् । चुम्बेति । चुम्बेर्घञ् । [6]व्यय व्यप क्षये इति चैके । आद्यः प्रणेच द्रुमे[7] । पूलितेति । **पूल** सङ्घाते । कर्तरि क्तः । पुंसनया । **पुंस** अभिवर्धने । युच् ॥

सौधे विटङ्कजुषि पश्यति धूसितोऽयं
राजारिकीटबलचूर्णनयातिपूज्यः ।

---

1,2 K2 om. this word.

3 K2 5.6 हिंसाभिया.

4 षट्टक् निकेतने हिंसे बले दाने—*KK.* 146. Here the sense is दान not आदान.

5 चुबि कि चुम्बने—*KK.* 146. Only in this sense is the root given, not in the sense of हिंसा also.

6 E व्यये व्यवक्षये.

7 व्ययञ् गत्यां व्ययक् नुदि—*KK.* 260.

**अर्क्येण तेन समरेष्वविशोठितस्त्वं**
**संशुण्ठिताहितमदेन [1]विजोडितोऽसि ॥ २७ ॥**

अयं राजा सौधे स्थितः पश्यति । विटङ्कजुषि [2]कपोतफलकादि-शिल्पशालिनि सौधे धूसितः अलंकारैः कृतकान्तिः । अरिकीटानां दुर्बल-शत्रूणां चूर्णनया संकोचनेन अतिपूज्यः । तेन त्वं समरेषु [3]विजोडितः प्रेरितोऽसि । समरेष्विति सर्वत्र योज्यम् । अर्क्येण स्तुत्येन । संशुण्ठितः शोषितः [4]नाशितः अहितमदः येन तेन समरेषु अविशोठितः आलस्यहीनः त्वम् ॥

विटङ्केति । **टकि** बन्धने । वीन् पक्षिणः टङ्कयति शिल्पेन [5]संबध्नाति इति विटङ्कः । पचाद्यच् । धूसितः । **धूस** कान्तिकरणे । धूष इत्येके । धूश इत्यन्ये । धूसेः कर्तरि क्तः । कीटेति । **कीट** वर्णे । नानावर्णो भवतीत्यच् । चूर्णनया । **चूर्ण** संकोचने । युच् । अतिपूज्यः अर्क्येण । **पूज** पूजायाम् । **अर्क** स्तवने । तापगत्योश्च द्रुमे[6] । द्वयोर्ण्यत् । अविशोठितः । **शुठ** आलस्ये । कर्तरि क्तः । संशुण्ठितेति । [7]विजोडि-तेति । **शुठि** शोषणे । **जुड** प्रेरणे । द्वयोः कर्मणि क्तः ॥

**इत्थं सुगाजितमृदङ्गविमार्जनानि**
**[8]संवार्य [9]मर्वयति घारितशङ्कमस्मिन् ।**
**कृष्णः प्रपञ्चरहितां धृततेजितास्त्रै-**
**र्वीरैः स्तुतां गिरमकीर्तदरातिवर्धी ॥ २८ ॥**

---

1 M1 E विजोटितो.
2 E कपोतपालकादि.
3 E विजोटितः.
4 K2 om. this word.
5 E om. सं.
6 अर्क कः तापस्तुत्योः—*KK.* 80. गत्यर्थ is not found here.
7 E विजोटितेति.
8 M1 निवार्य.
9 E मर्चयति.

सुगाजितानां सम्यग्वादितानां मृदङ्गानां विमार्जनानि शब्दान् संवार्य अस्मिन् चाणूरे इत्थं घारितशङ्कं त्यक्तशङ्कं [1]मर्वयति भाषमाणे सति कृष्णो धृततेजितास्त्रैः धृतनिशातीकृतास्त्रैर्वीरैः स्तुतां प्रपञ्चरहितां मिताक्षरां गिरम् अकीर्तद् अभाषत । अरातिवर्धी शत्रुच्छेदी ॥

सुगाजितेति । **गज मार्ज** शब्दार्थौ । [2]**मर्व** चेत्येके । मार्जिः शुद्धौ च द्रुमे[3] । गाजेः कर्तरि क्तः । विमार्जनानि । मार्जेर्ल्युट् । [4]मर्वयति । मर्वेः शता । घारितेति । **घृ** प्रस्रवणे । स्रावणे इत्येके । छादने च द्रुमे[5] । अस्मात् कर्मणि क्तः । प्रपञ्चेति । **पचि** विस्तारवचने । विस्तारमात्रे च द्रुमे[6] । घञ् । तेजितेति । **तिज** [7]निशातने । कर्मणि क्तः । अकीर्तत् । **कॄत** संशब्दने । 'ऋदुपधाच्चाक्लृपिचृतेः' [३.१.११०] इत्यत्र तपरत्वेन ऋदुपधस्य व्यावर्त्यत्वात् णिचि तु ॠदुपधत्वफलाभावाद् अस्य णिज्विकल्पः । तत्र णिजभावे शपि लङ् । अरातिवर्धी । **वर्ध** छेदनपूरणयोः । णिनिः ॥

**किं कुम्ब्यते सदसि लुम्बितवैभवोऽहं**
**बालोऽस्मि तुम्बितविरोधिभयाश्च यूयम् ।**
**प्रह्लापये किमपरं परिचुण्टितारि-**
**र्भूपोऽयमेलयति चेदिह को निषेद्धा ॥ २९ ॥**

---

1 E मर्चयति.

2 E मर्च.

3 मार्जक् मृजाध्वन्योः–*KK*. 125.

4 E मर्चयति । मर्चेः.

5 घृक् सेके छादने—*KK*. 67.

6 पचि क् ततौ *KK*. 104.

7 The editor of E emends this as निशाने.

मया सदसि किं कुम्ब्यते आच्छाद्यते। अत्र राजसदसि सर्वं प्रत्यक्षमेव वक्तव्यम्, न किंचिद्गूहनीयमस्ति। अहं लुम्बितवैभवः अदृष्ट-सामर्थ्यः बालोऽस्मि। यूयं तुम्बितविरोधिभयाः नाशितशत्रुभयाश्च [1]भवथ। अतोऽहमपरं किं प्रह्लापये व्यक्तं वदामि। एतावदेव वदामि। परिचुण्टितारिः छिन्नशत्रुः अयं भूप एलयति युद्धार्थं प्रेरयति चेदिह लोके को निषेद्धा [2]निषेत्स्यति। न कोऽपि॥

कुम्ब्यते इति। **कुबि** आच्छादने। कुभि इत्येके। कुम्बेः कर्मणि [3]लट्। लुम्बितेति तुम्बितेति। **लुबि तुबि** अदर्शने। [4]अर्दन इति केचित्। कर्मणि क्तः। प्रह्लापये। [5]**ह्लप** व्यक्तायां वाचि। क्लप इत्येके। लट्। परिचुण्टितारिः। **चुटि** छेदने। कर्मणि क्तः। एलयति। **इल** प्रेरणे। लट्॥

**यद्वा भियात्र किमम्रक्षकसूरिसेव्यो**
**धर्मेतरम्यगनयम्रगयं हि राजा।**
**अम्लेच्छलोकसहिते सदसीह तस्मात्**
**को ब्रूसयिष्यति शिशूननिबर्हणीयान्॥ ३०॥**

यद्वा अत्र भिया किम्। न किंचित् भेतव्यम्। अयं राजा धर्मेतरम्यक् अधर्मच्छेत्ता। [6]अनयम्रक् अनयच्छेत्ता च। हि यस्मात्—अम्रक्षकाणां साधुशब्दभाषिणां सदाचाराणां सूरीणां सेव्यश्च। तस्मादम्लेच्छ-लोकसहिते सज्जनपूर्णे अस्मिन् सदसि अनिबर्हणीयान् हन्तुमयोग्यान् शिशून् को ब्रूसयिष्यति हनिष्यति। न कोऽपि। अतो न भेतव्यम्॥

---

1 K3 om. this word.
2 E निषेद्ध्यति.
3 K2.5.6 लटि यक्.
4 K2 अदन इत्येके.
5 K2 om. ह्लप ··· कर्मणि क्तः.
6 K2 अधर्मस्य अन्यायस्य च छेत्ता for अनय·······च.

[1]अमृक्षकेति। **मृक्ष** म्लेच्छने। [2]अपशब्दनं तत्। ण्वुल्। धर्मेतरम्यक्। अनयम्रक्। **म्यक्ष म्रक्ष** छेदने इति चैके। द्वयोः क्विपि संयोगान्तलोपः। [3]अम्लेच्छेति। **म्लेच्छ** अव्यक्तायां वाचि। अपशब्दोक्तिः सा। अच्। ब्रूसयिष्यति। **ब्रूस बर्ह** हिंसायाम्। ब्रूसेर्लुट्। अनिबर्हणीयान्। बर्हेरनीयर्॥

**खेदस्त्वियान् पटहगर्दनगर्जिताशे[4]**
**रङ्गे सगर्धनसुगुर्दितवीरलोके।**
**मश्चाग्रपूर्वितनृपे शिशुना रणं वः**
**स्यादेव मानपरिजंसकमीड्यधाम्नाम्॥ ३१॥**

अस्माकमियांस्तु खेदः। पटहानां गर्दनेन शब्देन गर्जिताशे शब्दितदिक्के। सगर्धनं साकाङ्क्षं सुगुर्दिताः पूर्वमेव स्थिताः वीरलोका यस्मिन्। ईदृशे रङ्गे ईड्यधाम्नां स्तुत्यप्रभावानां वो युष्माकं शिशुना रणं मानपरिजंसकं मानक्षयकरं स्यादेव॥

गर्दनेति गर्जितेति। **गर्द गर्ज** शब्दे। द्वयोर्ल्युट् कर्मणि क्तश्च। गर्धनेति। **गर्ध** अभिकाङ्क्षायाम् इति चैके। ल्युट्। गुर्दितेति। **गुर्द** पूर्वनिकेतने। पूर्वनिकेतनं पूर्वव्यवहार इत्येके। निवासपूर्वभाव इत्यन्ये। अस्य दीर्घविकल्पः[5]। क्रीडार्थश्चास्ति द्रुमे[6]। अस्मात् कर्तरि क्तः। पुर्व[7] पूर्वनिकेतने इति केचित्। अर्थः प्रागुक्त एव। प्राग्वत् क्तः।

---

1 K2 om. अ.

2 K2.5.6 om. अप .. तत्.

3 K1.3 om. अ.

4 M1 K1 नर्दन for गर्दन.

5 This is because the दीर्घ laid down by उपधायां च (8.2.78) is अनित्य--vide *Kṣ* under कुर्द गुर्द गुद क्रीडायामेव.

6 गुर्दक् निकेतने-- *KK*. 196. क्रीडार्थ is not given for it.

7 E पूर्व.

'उपाधायां च' [ ८.१.७८ ] इति दीर्घः । परिजंसकम् । **जसि** रक्षणे । मोक्षणे इति केचित् । ण्वुल् । ईड्येति । **ईड** स्तुतौ । ण्यत् ॥

**इत्थं वदत्यसुरजासिनि पिण्डिताय:-**
**स्थेमाथ रोषितमतिः प्रतिमल्लडेपी ।**
**प्रस्तूपितेन वपुषा हरिमाससाद**
**चाणूर आशु हलिनं खलु मुष्टिकोऽपि ॥ ३२ ॥**

असुरजासिनि असुरहिंसके इत्थं वदति सति अथ चाणूरो [1]रोषितमतिर्हरिमाससाद । हलिनं मुष्टिकोऽपि । कीदृशः । पिण्डितायः इव स्थेमा स्थैर्यं यस्य सः । प्रतिमल्लडेपी प्रतिमल्लनिरासी । प्रस्तूपितेन अतितुङ्गेन वपुषा उपलक्षितः ॥

असुरजासिनीति । **जसु** हिंसायाम् । क्त्वायामिड्विकल्पार्थादुदित्करणादस्य णिज्विकल्पः । तस्माण्णिनिः । पिण्डितेति । **पिडि** संघाते । हेतुमण्ण्यन्तात् कर्मणि क्तः । रोषितेति । **रुष** रोषे । रुट इत्येके । रोषेः कर्तरि क्तः । प्रतिमल्लडेपी । **डिप** क्षेपे । णिनिः । प्रस्तूपितेति । [2]**ष्टूप** समुच्छ्राये । कर्तरि क्तः ॥

**लोको हरेर्बलमचेतयमान एतद्**
**युद्धं मृगेन्द्रशशदंशनवत्प्रदंसन् ।**
**संडापितः सदसि डेपितवृष्णिवीरे**
**भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥ ३३ ॥**

हरेः बलम् अचेतयमानः अजानन् लोकः एतद् युद्धं मृगेन्द्रशशयोः अन्योन्यदंशनवत् अतिविषमं प्रदंसन् पश्यन् सदसि संडापितः

---

1 K1.3 om. रोषितमतिः.  2 E ष्टुप.

सङ्घातीभूतः सन् भोजेन्द्रतन्त्वणविनिन्दी [1]कंसराज्यकार्यनिन्दाशीलः एवम् अममन्त्वत गूढमभाषिष्ट । डेपिताः सङ्घातीभूता वृष्णिवीरा यस्मिन् ॥

आकुस्मादात्मनेपदिनः[2] । [3]कुस्मधातुपर्यन्तं णिच्यात्मनेपदिन एव । अचेतयमान इति । **चित** संचेतने । तच्च ज्ञानम् । अस्माच्छानच् । दंशनेति । **दशि** दंशने । ल्युट् । प्रदंसन् । **दसि** दंसनदर्शनयोः । दस इत्येके । दंसनं वर्मग्रहणम् । दंशनदर्शनयोरित्यन्ये । अत्राकुस्मीयस्तङ् णिज्योग एवेति इदित्त्वाण्णिजभावे तङ् न । तेन दंसेः शपि शता । संडापितः । **ड्प डिप** सङ्घाते । डापेः कर्तरि क्तः । डेपितेति । डिपेश्च [4]पूर्ववत् क्तः । तन्त्वणेति । **तत्रि** कुटुम्बधारणे । कुटुम्ब इति पृथक् धातुरित्येके । तन्त्वेर्ल्युट् । अममन्त्वत । **मत्रि** गुप्तभाषणे । लुङि चङ् ॥

**प्रस्पाश्य मुष्टिमभितर्जयते [5]प्रभत्स्यो**
**मल्लो बिबस्तयिषुरेनमगन्धनीयम्[6] ।**
**किष्क्येत निष्कृपमनिष्कितकान्तिरेष**
**बालोऽमुना नृपतिलालनयाद्य कष्टम् ॥ ३४ ॥**

मल्लो मुष्टिं प्रस्पाश्य दृढं गृहीत्वा एनं बिबस्तयिषुः पीडयितुमिच्छुः अभितर्जयते भर्त्सयते । अगन्धनीयं पीडयितुमयोग्यम् । अद्य नृपति-लालनया राजेच्छया अमुना एष बालो निष्कृपं किष्क्येत हिंस्येत कष्टम् । अनिष्कितकान्तिः अपरिमितकान्तिः । कीदृशो मल्लः । प्रभत्स्यः तर्जयितुं योग्यः ॥

प्रस्पाश्येति । **स्पश** ग्रहणश्लेषणयोः । ल्यप् । अभितर्जयते ।

---

1 K2 राज for राज्य.
2 K3 adds एव.
3 K3 om. this sentence.
4 K2 om. पूर्ववत् क्तः.
5 K1 प्रभत्स्यो.
6 M1 एतं for एनम्.

तर्ज [1]भर्त्स तर्जने । तर्जेर्लट् । [2]प्रभर्त्स्यः । [3]भर्त्सेर्ण्यत् । बिबस्तयिषुः । **बस्त** [4]**गन्ध** [5]अर्दने । बस्तेः सन्युः । अगन्धनीयम् । गन्धेरनीयर् । किष्क्येत । **किष्क** हिंसायाम् । हिष्क इत्येके । किष्केः कर्मणि लिङ् । [6]अनिष्कितेति । **निष्क** परिमाणे । कर्मणि क्तः । लालनया । **लल** ईप्सायाम् । युच् ॥

**आकूणिताक्षमपि च स्मिततूणितास्यं**
**भ्रूणस्य शाठ्यजनयक्ष्यमवेक्ष्य गात्रम् ।**
**अस्यामनः क इव गूरयतेऽत्र मुष्टिं**
**नो खल्वशाम्यमिह लक्षयितुं क्षमाः स्मः ॥ ३५ ॥**

अपि च [7]भ्रूणस्य अर्भकस्य बालस्य गात्रमवेक्ष्य क इव अस्यामनः अविचारः सन् मुष्टिं गूरयते प्रहरणार्थमुन्नमयति । न कोऽपि । कीदृशं गात्रम् । आकूणिताक्षं स्वरूपानन्दानुभवादीषत्संकोचितनेत्रम् । स्मिततूणितास्यं [8]मन्दहासपूरितमुखम् । [9]शाठ्यजनयक्ष्यं [10]श्लाघ्यजनैर्यक्ष्यं पूज्यं च । तस्माद् वयमशाम्यं द्रष्टुमयोग्यं कर्म इह लक्षयितुं द्रष्टुं नो नहि क्षमाः स्मः शक्ता भवामः ॥

अकूणितेति तूणितेति । [11]**कूण** संकोचने । **तूण** पूरणे । द्वयोः कर्मणि क्तः । भ्रूणस्य । **भ्रूण** आशंसायाम् । आशंस्यते प्रार्थ्यते इति

1 K1 भत्स.
2 K1 प्रभत्स्यः.
3 K1 भत्सेर्ण्यत्.
4 K2.5.6 गन्धु.
5 K5 अदर्शने.
6 K2 om. अ.
7 E गुणस्य.
8 K2.5.6 स्मित for हास.
9 K2.5.6 शाठ्यैः श्लाघ्यैः जनैः, सद्भिरित्यर्थात्, यक्ष्यं for शाठ्य ...यक्ष्यं.
10 K1 inserts शाठ्यजनैः between—यक्ष्यं and श्लाघ्य.
11 K3 कुण.

घञर्थे कः । शाठ्येति यक्ष्येति । शठ श्लाघायाम् । यक्ष पूजायाम् । द्वयोर्ण्यत् । स्यामनेति । स्यम वितर्के । ल्युट् । गूर उद्यमने । लट् । अशाम्यम् । शम [1]लक्ष आलोचने । शामेर्ण्यत् । लक्षयितुम् । लक्षेस्तुमुन् ॥

**कुत्स्या हि गालनपटा इव कष्टमेते**
**दुष्कीर्तिभालनपराः खलु कूटवृत्त्या ।**
**तद्वञ्चनं निरसितुं नहि वर्षिताः स्मः**
**किं कुर्महे खलजना इह मादयन्ताम् ॥ ३६ ॥**

एते गालनपटा इव दोषग्रहणात् कुत्स्या हि कष्टम् । कूटवृत्त्या व्याजव्यापारेण दुष्कीर्तिभालनपरा दुर्यशःसंपादने तत्पराः खलु वयम् । तेषां वञ्चनं व्याजेन शिशुवधरूपं व्यापारं निरसितुं नहि वर्षिताः शक्तिसम्बद्धाः स्मः भवामः । अतो वयं किं कुर्महे । इह खलजनाः मादयन्तां तृप्ता भवन्तु ॥

कुत्स्या इति । कुत्स अवक्षेपणे । ण्यत् । गालनेति भालनेति । गल [2]स्रावणे । भल [3]आभाण्डने । [4]आभाण्डनं आर्जनम् । द्वयोर्ल्युट् । कूटेति । कूट अप्रदाने । अप्रसादे इत्यन्ये । अप्रसादकृत्त्वाद् व्याजः । कूटेरच् [5] । [6]कुट्ट प्रतापने इत्यन्ये । वञ्चनम् । वञ्चु प्रलम्भने । ल्युट् । ऊदिदित्येके । तत्र णिजभावे सर्वत्रेड्विकल्पः । वर्षिताः । वृष शक्तिबन्धने । तच्च गर्भाधानसामर्थ्यम् । शक्तिसंबन्ध इति [7]केचित् । अस्मात् कर्तरि क्तः । मादयन्ताम् । मद तृप्तियोगे । लोट् ॥

---

1 K5 om. लक्ष ·· तुम्.
2 E स्रवणे.
3 E आभण्डने.
4 E आभण्डनं.
5 E अप्.
6 K1.3 कुट कुट्ट.
7 K2.5.6 एके for केचित्.

**इत्यादि वाद्यशतदेवनमध्य एव**
**लोकः समालपदगारितकृष्णवीर्यः ।**
**कंसस्त्ववेदयमतिर्भयमानितोऽपि**
**निर्यावनः [1]कुयुधि कुस्मयमान आस्त ॥ ३७ ॥**

लोकः अगारितकृष्णवीर्यः अज्ञातकृष्णवीर्यः सन् वाद्यशतदेवनमध्ये एव वाद्यशतस्य[2] घोषमध्ये एव इत्यादि समालपत् । अवेदयमतिः अज्ञमनाः कंसस्तु भयेन मानितः स्तब्धोऽपि कुयुधि कुत्सितयुद्धे निर्यावनो जुगुप्साहीनः कुस्मयमानः कुत्सितं स्मयमानः आस्त ॥

देवनेति । दिवु परिकूजने । ल्युट् । अगारितेति । गॄ विज्ञाने । विज्ञापने च द्रुमे[3] । कर्मणि क्तः । वेदयेति । विद् वेदनाख्याननिवासनेषु । परिवादे चैके । [4]वेदनं ज्ञानम् । 'अनुपसर्गाल्लिम्प—[३.१.१३८] इति शः । मानितः । **मान** स्तम्भे । कर्तरि क्तः । यावनेति । **यु** जुगुप्सायाम् । ल्युट् । कुस्मयमानः । **कुस्म** नाम्नो वा [5]कुत्सितस्मयने । कुत्सितस्मयनार्थो धातुरत्र पठितव्यः । तस्माण्णिचि शानचि कुस्मयमानः । [6]कुस्ममिति नामपदाद्वा तत्करोतीति णिचि तत्सिद्धिरित्यर्थः । कुस्ममिति दृष्टं कुस्मयतिरकारितमिति चेत् कोर्नित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् कारितमेव । एषामर्थो धातुखण्डे[7] एव द्रष्टव्यः ॥

---

1 M1 सदसि for कुयुधि.
2 K2 om. शतस्य.
3 गॄ कॄ विज्ञापे च.—*KK*.71.
4 K2 om. वेदनं ज्ञानम्.
5 K2 कुत्सितेति for कु.........ने, K1.3 om. this word.
6 In K2 folio No. 130 containing the matter from here to प्रास्फोटयत् in the commentary on verse 39 is missing.
7 In *PS* under this root.

संचर्चयन्नपनयानथ बुक्कयिष्णुः
श्वेवोग्रशब्दनपरः [1]करुणाध्वकाणः ।
मल्लो जिजम्भिषुरसूदितवीर्यमीशं
मुष्ट्या जजास बहु पाशितवांश्च दोष्णा ॥ ३८ ॥

अथ मल्लः ईशं जिजम्भिषुः नाशयितुमिच्छुः मुष्ट्या जजास [2]प्रहतवान् । दोष्णा बहु बहुकृत्वः पाशितवान् बद्धवांश्च । कीदृशः । अपनयान् संचर्चयन् आवर्तयन् । श्वा इव बुक्कयिष्णुः भषणशीलः । [3]असूदितवीर्यम् अक्षीणवीर्यम् ॥

इतः परं विकरणान्तरोक्ता एवोच्यन्ते । संचर्चयन्निति । **चर्च** अध्ययने । अस्माच्छता । लक्षणया आवर्तनार्थता । बुक्कयिष्णुः । **बुक्क** भषणे । [4]श्वरवस्तत् । [5]'णेश्छन्दसि' [३.२.१३७] इति इष्णुच् । शब्दनेति । **शब्द** शब्दक्रियायाम् । ल्युट् । सोपसर्गस्त्वयमाविष्कृताविति द्रुमे[6]। काणः । **कण** निमीलने । एकनेत्रनिमीलने चेदम् । अस्मादच् । जिजम्भिषुः । **जभि** नाशने । णिजभावे सन्युः । असूदितेति । [7]**षूद** क्षरणे । कर्तरि क्तः । जजास । **जसु** ताडने । णिजभावे लिट् । पाशितवान् । पश बन्धने । पाशेः क्तवतुः ॥

द्रागामयन् विचटदस्थिकयाथ मुष्ट्या
प्रास्फोटयत्तमजितोऽपि [8]स घाटिताङ्गम् ।

---

1 E करुद्धकाणः.
2 K1 प्रहृतवान्.
3 K3 om. असूदित............... संचर्चयन्निति.
4 K5.6 om. श्व...त्.
5 K1.3 om. णे इति.
6 शब्द क् शब्दकृतौ सोपसर्गस्त्वाविष्कृतौ मतः—*KK*. 206.
7 E सूद.
8 M1 च for स.

**दिष्ट्यैष हिंसयति देव्यममुं युधीति**
**संमोदमर्जयति घोषति नाकिलोके ॥ ३९ ॥**

अथ नाकिलोके 'एष देव्यं मर्दयितव्यं अमुं युधि हिंसयति हिनस्ति दिष्ट्या' इति घोषति स्वाभिप्रायं प्रकाशयति संमोदमर्जयति वर्धयति सति अजितोऽपि विचटदस्थिकया भिद्यमानास्थिसङ्घया मुष्ट्या द्राग् आमयन् पीडयन् तं प्रास्फोटयत् भिन्नाङ्गमकरोत् । घाटिताङ्गं घनीभूताङ्गं प्रहारभेदेन[1] संकुचिताङ्गं वा ॥

आमयन्निति । **अम** रोगे । शता । विचटदिति । **चट स्फुट** भेदने । चटेर्गणोक्तत्वेन चुरादिणिचोऽनित्यत्वात् शपि शता । प्रास्फोटयत् । [2]स्फोटेर्लङ् । [3]घाटितेति । **घट** सङ्घाते । भेदने चेत्येके । कर्तरि क्तः । हिंसयति । 'हन्त्यर्थाश्च' । एते च स्वार्थे णिचं भजन्तीत्यर्थः । तेन हिंसेर्णिचि लट् । चटस्फुटघटानामपि हन्त्यर्थत्वमिष्यते[4] । दीप्त्यर्थानामपि स्वार्थिकणिजस्ति द्रुमे[5] । देव्यम् । **दिवु** मर्दने । परिकूजने इति केचित् । ण्यत् । अर्जयति । **अर्ज** प्रतियत्ने । सतो गुणान्तराधानं तत् । आर्जनेऽप्यस्ति । अस्माच्छता । घोषति । **घुषिर्** विशब्दने । शब्देन स्वाभिप्रायप्रकाशनं तत् । स्तुतौ च द्रुमे[6] । अस्य णिज्विकल्पो भाष्योक्तः[7] । तेन शपि शता ॥

---

1 K2.5.6 भयेन for भेदेन.

2 E स्फुटे–.

3 K2.5.6 घाटिताङ्गमिति.

4 Vide *Kṣ* under हन्त्यर्थाश्च—चट स्फुट घट च हन्त्यर्थाः.

5 धातवो हन्तिभासार्था अकितो वा चुरादयः—*KK*. 13.

6 घुष् कि इर् ह् नुतौ (v. l. नुतौ)–*KK*. 309.

7 Vide *MBh* under 7.2.23—ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज्भवतीति.

आक्रन्दयत्सु निभृतं नृषु लासिताशे-
षोत्तंसभूषणविमोक्षणयार्हिताभौ ।
आज्ञापनामिह विभाज्य नृपेण दृष्टौ
तौ शर्धनाय समयातयतां नियुद्धम् ॥ ४० ॥

नृषु निभृतं आक्रन्दयत्सु सततं रुदत्सु सत्सु तौ चाणूरकृष्णौ आज्ञापनां विभाज्य दत्त्वा नृपेण [1]दृष्टौ। शर्धनाय अन्योन्याभिभवार्थं नियुद्धं बाहुयुद्धं समयातयतां संस्कृतवन्तौ सविशेषं कृतवन्तौ। लासिताशेषाणां स्वकौशलालंकृतसर्वाङ्गाणामुत्तंसस्य च अन्यालंकाराणां च युद्धार्थं त्यागेन [2]अर्हिताभौ पूजनीयसविशेषशोभौ॥

आक्रन्दयत्स्विति। **आङः क्रन्द** सातत्ये। आङ्पूर्वः क्रन्दिः सातत्ये णिचं भजते। [3]शता। शबुक्तयोराह्वानरोदनयोः सातत्यं [4]चेदम्। लासितेति। **लस** शिल्पयोगे। शिल्पोपयोगे इति [5]केचित्। अस्मात् कर्मणि क्तः। [6]उत्तंसेति। **तसि भूष** अलंकारे। [7]तंसेर्घञ्। भूषणेति। भूषेर्ल्युट्। विमोक्षणया। **मोक्ष** असने। युच्। अर्हितेति। **अर्ह** पूजायाम्। कर्मणि क्तः। आज्ञापनाम्। **ज्ञा** नियोगे। आङ्पूर्व एवायम्। अस्माद्युच्। विभाज्येति। **भज** विश्राणने। [8]दानं तत्। ल्यप्। शर्धनाय **शृधु** प्रहसने। [9]अभिभवस्तत्। ल्युट्। समयातयताम्। **यत** [10]निकारोपस्कारयोः। परिभवसंस्कारौ तौ। खेदे च द्रुमे[11]। अस्माल्लङ्॥

---

1 K2.5.6 दृष्ट्वा.
2 K2.5.6 om. this word.
3 K2 om. this word.
4 K2.5.6 om. this word, but adds अस्माच्छता.
5 K2 एके for केचित्.
6 K2.5.6 उत्तंसभूषणेति.
7 K2.5.6 om. तंसे........ल्युट्, but has द्वयोर्घञ् ल्युट् च.
8 K2.5.6 om. दानं तत्.
9 K2.5.6 om. अभि....त्.
10 K2.5.6 निराकारो.—
11 यत् क खेदोपस्करयोः— *KK.* 183.

**निर्यातितप्रहृतिमीशमतिप्रहृत्य**
**मल्लोऽथ वासितविचारमचुच्यवत् सः।**
**रोषान्ध्यभावितमसृग्भिरकल्पयत् तं**
**कृष्णोऽपि नाकिजनराकितलाग्यवीर्यः[1] ॥ ४१ ॥**

अथ स मल्लो निर्यातितप्रहृतिं कृतप्रतीहारम् ईशम् अतितरां प्रहृत्य वासितविचारं छिन्नसंशयं यथा तथा अचुच्यवत् जहास। कृष्णोऽपि रोषान्ध्येन रोषकृतेन[2] मूढत्वेन भावितं मिश्रीकृतं तम् असृग्भिः अकल्पयत् मिश्रीकृतवान्। नाकिजनेन सुरजनेन राकितम् आस्वादितं लाग्यम् आस्वादनीयं वीर्यं यस्य सः श्रीकृष्णः॥

निर्यातितेति। निसश्च [3]धान्यादिप्रतिदाने। अस्मात् कर्मणि क्तः। वासितेति। **वस** स्नेहनच्छेदापहरणेषु। 'उपहरणेषु' इति वा पाठः। अस्मात् प्राग्वत् क्तः। विचारेति। **चर** संशयने। असंशये च द्रुमे[4]। घञ्। अचुच्यवत्। च्यु [5]हसने। सहने इति केचित्। च्युस इत्यन्ये। च्यावयतेर्लुङि चङ्। भावितम्। **भुवो**ऽवकल्कने। अस्याव-कल्कने णिच् स्यात्। तच्च मिश्रीकरणम्। अन्ये तु चिन्तने विपाचने-ऽवकल्कने चेत्याहुः[6]। अस्मात् कर्मणि क्तः। अकल्पयत्। कृपेश्च। मिश्रीकरणे णिच् स्यात्। अस्माल्लङ्। [7]राकित लाग्येति। **रक लग** आस्वादने। आद्योऽपि गान्त इत्येके। रघ लघ इत्यन्ये। राकेः कर्मणि क्तः। लागेर्ण्यत्॥

---

1 M1 does not extend beyond this.

2 K2 inserts आन्ध्येन between —कृतेन and मूढ—.

3 K2.5.6 धान्यधनयोः प्रतिदाने.

4 चर् क संशीत्यसंशीत्योः—*KK.* 265.

5 E सहने, हसने इति केचित्.

6 E adds विपाचनं विपक्तीकरणम्.

7 E राकितेति लाग्येति.

शौर्याञ्चितेन धृतलिङ्गितचेलकेन
संमोदितो हलधरोऽपि च मुष्टिकेन ।
मुष्ट्या तुदन् मुहुरतित्रसदाशु दोर्भ्या-
मुध्रासयज्जननुतस्तममोचयच्च ॥ ४२ ॥

हलधरोऽपि च मुष्टिकेन संमोदितः संसर्गं प्राप्तो मुहुर्मुष्ट्या तुदन् दोर्भ्यामाशु अतित्रसत् गृहीतवान् वारितवान् वा अमोचयच्च । कीदृशेन मुष्टिकेन । [1]शौर्येण अञ्चितेन अन्येभ्योऽधिकेन । धृतं लिङ्गितं [2]चित्रीकृतं चेलं येन तेन । उध्रासयद्भिः उञ्छवृत्तिभिः जनैर्नुतः ॥

अञ्चितेनेति । अन्चु विशेषणे । व्यावर्तनं तत् । कर्मणि क्तः । लिङ्गितेति । **लिगि** चित्रीकरणे । प्राग्वत् क्तः । संमोदितः । **मुद** संसर्गे । कर्तरि क्तः । अतित्रसत् । **त्रस** धारणे । तच्च ग्रहणं वारणं वा । [3]लुङि चङ् । उध्रासयदिति । **उध्रस** उञ्छे । उकार इदित्येके । उध्रसेः शता । अमोचयत् । **मुच** प्रमोचने । लङ् ॥

दोर्भ्यां ग्रासयतां प्रपोषितरुषां निर्दालनोद्योगिनां
तेषां विक्रमणैरपाटि पटिमा शिक्षाप्यपोटि स्फुटम् ।
स्थेमालोटि जवोऽप्यतुञ्जि लघिमा [4]चामिञ्ज्यपिञ्ज्यश्रमो
रोषोऽलुञ्जि [5]रसोऽप्यभञ्जि बलवत्तालङ्घि [6]चात्रंस्यभीः
॥ ४३ ॥

दोर्भ्यां ग्रासयतां तत्तन्मर्मस्थानेषु गृह्णतां प्रपोषितरुषां सम्यग्धारितकोपानां परस्परं निर्दालनोद्योगिनां मुष्टिविदारणोद्योगिनां तेषां श्रीकृष्ण-

---

1 K2 om. this word.
2 K3 om. this word, E मिश्रीकृतं.
3 K2 5.6 om. this word.
4 E चाभिञ्ज्य.
5 E रसो व्यभञ्जि.
6 E चात्रस्य.

रामचाणूरमुष्टिकानां विक्रमणैः पराक्रमैः पटिमा युद्धसामर्थ्यं अपाटि कथितम्। शिक्षा अभ्यासोऽपि स्फुटमपोटि उक्ता। स्थेमा देहस्थैर्यमलोटि। जवः प्रहारवेगोऽपि अतुञ्जि। लघिमा शीघ्रकारित्वं च [1]अमिञ्जि। अश्रमः पीडाभावः अपिञ्जि। रोषः कोपपौष्कल्यम् अलुञ्जि। रसो युद्धकौतुकं [2]अभञ्जि। बलवत्ता एतावत् बलमिति अलङ्घि। अभीः भयाभावः [3]अत्रंसि च। सर्वत्रापि भाषितं स्पष्टं प्रकाशितमित्यर्थः। एषां [4]भासार्थस्यापि सद्भावात् प्रकाशितमित्येव वार्थः॥

'आस्वदः सकर्मकात्'। [5]इतः परं स्वदिपर्यन्तेभ्यः कर्मसम्भवे एव णिच् स्यात्। ग्रासयतामिति। **ग्रास** ग्रहणे। शता। प्रपोषितेति। **पुष** धारणे। कर्मणि क्तः। निर्दालनेति। **दल** विदारणे। युच्। अपाटि अपोटि अलोटि अतुञ्जि [6]अमिञ्जि अपिञ्जि अलुञ्जि [7]अभञ्जि अलङ्घि [8]अत्रंसि इति। **पट पुट लुट तुजि [9]मिजि पिजि लुजि भजि लघि त्रसि [10]त्रिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोचृ लोकृ णद कुप तर्क वृतु वृधु** भाषार्थाः। एते एकत्रिंशत् भासार्था इत्येके। पुटिश्चूर्णनेऽपि द्रुमे[11]। पटादिदशानां कर्मणि लुङि चिण्॥

**कश्चित् कष्टमविंसयद्रणमिमं कुंस्यं त्वया दंश्यतां**
**नाकुंश्यं परिघाटयेति च परेणोद्घण्टितोऽबृंहयत्।**

---

1 E अभिञ्जि.
2 E व्य[भ]ञ्जि.
3 E अत्रसि.
4 E भाषार्थ.
5 E अतः.
6 E अभिञ्जि.
7 E व्यभञ्जि.
8 E अत्रसि.
9 E भिजि.
10 E पिसि.
11 नटक् भ्रंशे पटक् च त्विषि—*KK*. 139.

**नाहं बर्हयितास्म्यबल्ह्यमपि भोः सर्वैरिदं गोप्यते**
**तांस्त्वं धूपय विच्छयन् क इव न त्वच्चीवनात् पोथयेत्**
**॥ ४४ ॥**

तत्र प्रेक्षकेषु कश्चिद् इमं रणं कष्टम् असह्यम् अयोग्यम् अविंसयद् अकथयत्। त्वया कुंस्यं दंश्यतां वक्तुं योग्यमुच्यताम् अकुंश्यं न परिघाटय अवक्तव्यं न वद इति परेण उद्घण्टित उक्तः पूर्ववादी अबृंहयत् अकथयत्। अहं न बर्हयितास्मि न वदिष्यामि। भोः हे भवन्, अबल्ह्यम् अवाच्यमपि इदं सर्वैर्गोप्यते कथ्यते। त्वं तान् सर्वान् धूपय कथय। विच्छयन् क इव त्वच्चीवनात् न पोथयेत्। एषु वदत्सु वदन् [1]को वा त्वदुक्त्या न वदेत्। सर्वोऽपि वदेदेव ॥

अविंसयदिति। विंसेर्लङ्। कुंस्यम्। कुंसेर्ण्यत्। दंश्यताम्। दंशेः कर्मणि लोट्। अकुंश्यम्। कुंश्येर्ण्यत्। परिघाटय। घाटेर्लोट्। उद्घण्टितः। घण्टेः कर्मणि क्तः। अबृंहयत्। बृंहेर्लङ्। बर्हयितास्मि। बर्हेर्लुट्। [2]अबल्ह्यम्। बल्हेर्ण्यत्। गोप्यते। गोपेः कर्मणि लट्। धूपय। धूपेर्लोट्। विच्छयन्। विच्छेः शता। चीवनेति। चीवेर्ल्युट्। पोथयेत्। पोथेर्लिङ् ॥

**अलोचि चान्यैः समरेऽत्र कष्टता-**
**मलोकयन् दुष्यति नादयन्नपि।**
**कोपः प्रभोः कोपयति प्रतर्क्यते**
**पापश्च ही वर्त्मवर्धयन् जनः ॥ ४५ ॥**

अन्यैश्च अलोचि अन्यैरपि एवमुक्तम्। अत्र समरे कष्टताम् अलोकयन् अकथयन् नादयन् कथयन् अपि दुष्यति। कुतः। कोपयति

---

1 E कान्त्वदुक्त्या, K1.3 कस्त्वदुक्त्या.

2 E om. अ.

वदति जने, प्रभोः कोपः प्रतर्क्यते सर्वैः प्रकाश्यते ऊह्यते वा। वर्त्य-मवर्धयन् वक्तव्यमवदन् पापश्च भवति। ही का वात्र गतिः। खेदार्थो हीशब्दः ॥

अलोचीति। लोचेः कर्मणि लुङि चिण्। अलोकयन् नादयन् कोपयति। लोकेर्नादेः कोपेश्च शता। प्रतर्क्यते। तर्किरूहेऽपि। तस्मात् कर्मणि लट्। वर्त्यम्। वर्तेर्ण्यत्। अवर्धयन्। वर्धेः शता ॥

**भीतिं रोटय लञ्जयानयमसत्स्वाद्यञ्ज्यतां दंसय**
**क्रौर्यं भ्रंशय रुंसयाल्पमतितां भाग्यक्षयं रुंशय।**
**मानं शीकय नाटयाकरुणतां दुर्वासनां घुण्टय**
**भ्रान्तिं जुञ्चय भूपतेरिति जना गूढं मिथोऽरङ्घयन् ॥ ४६ ॥**

भीतिं रोटय। अनयं नयाभावं लञ्जय। असत्सु आद्यञ्ज्यतां प्रथमगण्यत्वं[1] दंसय। क्रौर्यं भ्रंशय। अल्पमतितां रुंसय। भाग्यक्षयं रुंशय। मानं अस्थानेऽभिमानं शीकय। अकरुणतां नाटय। दुर्वासनां घुण्टय। भ्रान्तिम् अन्यथाप्रतिपत्तिं जुञ्चय। सर्वत्रापि अकथयन्नित्यर्थः। प्रकाशितवन्त इति वा। जना भूपतेर्भूपतिमधिकृत्य इति एवं गूढं अरङ्घयन् अकथयन् ॥

रोटय लञ्जय अञ्ज्यताम् दंसय भ्रंशय रुंसय रुंशय शीकय नाटय घुण्टय जुञ्चय इति। **रुट लजि अजि दसि भ्रशि रुसि रुशि शीक नट घुटि जुचि रघि**[2] **अहि रहि महि** चेति पञ्चदश चैके पठन्ति। **लडि तुड नड** [3]इति त्रीनप्यन्ये। अर्थः प्राग्वत्। तत्र रोटयाद्येकादशानां 'समुच्चयेऽन्यतरस्याम्' [३.४.३] इति सर्वलकारस्थाने विहितो लोट्।

1 E गण्यतां.
2 K3 E add लघि.
3 E चेत्यन्ये.

अञ्जेस्तु ण्यत् । अरङ्घयन्निति । 'समुच्चये सामान्यवचनस्य' [ ३.४.५ ] इति अनुप्रयुक्तस्य रङ्घेर्लङ् । तेन लोडन्तानामपि भूतार्थता । अन्येषां भाषणीयविशेषवाचित्वात् रङ्घेस्तदभावात् सामान्यार्थता ॥

वीर्यं दुरंहमभिरंहय मंहयाभां
मौग्ध्यं प्रलण्डय च तोडय निर्भयत्वम् ।
संताडयन्त्य इति पूरितरोजशङ्का
नार्यो हरेः समरकेलिमसिष्वदन्त ॥ ४७ ॥

दुरंहं वक्तुं दुष्करं वीर्यमभिरंहय । आभाम् अत्यद्भुतामङ्गशोभां[1] मंहय । मौग्ध्यं युद्धेऽपि मनोहरत्वं प्रलण्डय च । निर्भयत्वं अतिक्रूरमल्लगणावृतत्वेऽपि भयराहित्यम् तोडय । चतुर्षु कथयतीत्यर्थः । हरेः हरिसम्बद्धम्[2] इति संनाडयन्त्यः [3]कथयन्त्यः पूरितरोजशङ्काः पूरितहरिहिंसाशङ्काः च सत्यः समरकेलिम् अनायासयुद्धम् असिष्वदन्त आस्वादितवत्यः ॥

दुरंहमिति । अंहेः खल् । अभिरंहय । मंहय । प्रलण्डय । तोडय । रंह्यादिचतुर्णां प्राग्वल्लोट् । संनाडयन्त्यः[4] । नाडेः शतरि ङीप् । एते भाषार्थाः समुदिता एकोनपञ्चाशत् । पूरितेति । पूरी आप्यायने । ईदित्त्वेन निष्ठायामनिट्त्वस्याणिच्येव संभवाण्णिज्विकल्पः । अस्मात् कर्मणि क्तः । रोजेति । रुज हिंसायाम् । घञ् । असिष्वदन्त । ष्वद आस्वादने । संवरणे इत्येके । स्वादे इत्यन्ये । स्वदेश्चङ् । आस्वदीया गताः ॥

---

1 E—तानङ्ग—.
2 E सम्बन्धं.
3 K3 om. this word.
4 K2 adds इति.

**कृष्णोऽथ बाहुयुगलैर्बहु योजयन्तं**
**दोष्णा प्रपर्च्य रिपुमार्चत मुष्टिघातैः ।**
**तच्चासहन्तममुमैरदलायितायः-**
**स्थैर्यं सुदूरमपवृक्तवृतिप्रभावः ॥ ४८ ॥**

अथ कृष्णोऽपि बाहुयुगलैः बहु अधिकं योजयन्तं बध्नन्तं रिपुं दोष्णा प्रपर्च्य बद्ध्वा मुष्टिघातैः आर्चत उपचारं कृतवान् । समरे अस्य [1]उचितत्वात् प्रहार एवोपचारः । तत्प्रहरणमसहन्तममुं सुदूरमैरत् क्षिप्तवान् च । अलायितम् अविलापितमतिकठिनम् अय इव स्थैर्यं यस्य तम् । अपवृक्तवृतिः वर्जितावृतिः त्यक्तावरणः प्रकाशितः प्रभावो येन सः ॥

आ धृषाद्वा । इतः परं युजादीनां धृषिपर्यन्तानां वा णिच् स्यात् । योजयन्तमिति । **युज पृच** संयमने । आद्यो योगे च द्रुमे[2] । अन्त्यः संपर्चने च[3] । योजेः शता । प्रपर्च्य । पर्चेल्र्यप् । आर्चत । **अर्च** पूजायाम् । [4]अस्य णिचि तङेवेत्येके । तेन तङि लङ् । असहन्तम् । **षह** मर्षणे । अणिचि शपि शता । ऐरत् । **ईर** क्षेपे । गतौ च द्रुमे[5] । शपि लङ् । अलायितेति । **ली** द्रवीकरणे । णिचि कर्मणि क्तः । अपवृक्तेति । **वृजी** वर्जने । वृजेः कर्मणि क्तः । वृतीति । वृञ् आवरणे । क्तिन् ॥

**अजरद्वृषवद्विरिक्तपीडः**
**पुनरभ्येत्य विशिष्टचित्ततापी ।**
**प्रजहार हरिं रणेष्वतर्पन्**
**सुदृढं छर्दितमन्युरप्रदर्भन् ॥ ४९ ॥**

---

1 K1.3 ह्यौचित्यात्.

2 युज् कि संयमे युजिर् यौज् च युतौ—*KK.* 225-26.

3 पृच् कि संयमने पृच् धी च संपर्के *KK.* 105.

4 E अस्माण्णिचि.

5 ईर् कि गतौ नुदि—*KK.* 262.

भगवता दूरे [1]क्षिप्तः स चाणूरो [2]रणेषु अतर्पन् तृप्तिहीनः छर्दितमन्युः दीप्तकोपः। अप्रदर्भन् भीतिहीनः। अजरद्वृषवत् यौवनयुक्तो वृष इव विरिक्तपीडो गतपीडः सन्। पुनरभ्येत्य हरिं सुदृढं प्रजहार[3]॥

अजरदिति। जॄ वयोहानौ। [4]ज्री इत्येके। जॄधातोः शता। विरिक्तेति। **रिच** वियोजनसंपर्चनयोः। कर्तरि क्तः। विशिष्टेति। **शिष** असर्वोपयोगे। विपूर्वोऽतिशये। तस्मात् कर्तरि क्तः। तापी। **तप** दाहे। णिनिः। रिच्यादयस्त्रयो णिजभावेऽनिटः। अतर्पन्। **तृप** तृप्तौ। प्रीणने च द्रुमे[5]। [6]शपि शता। छर्दितेति। **छृदी** संदीपने। ईदित्त्वं नेति केचित्। अस्मात् कर्मणि क्तः। चृप छृप तृप दृप संदीपने इत्यप्येके। अप्रदर्भन्। **दृभी** भये। शता॥

**[7]कृष्णोऽपि श्रथितारिभीरभिमयन् दोष्णा ग्रथन् श्रामयन्**
**क्राथ्यं प्रोथितवानशीकितमतिं भूमावचीकन्नमुम्।**
**मल्लोऽर्घ्यः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः**
**तावत् स्वं बलमच्छदञ्जुषितवान् मुष्ट्या हली मुष्टिकम्॥५०॥**

[8]कृष्णोऽपि श्रथितारिभीः त्यक्तशत्रुभयः [9]सन् अभिमुखम् मयन् गच्छन् अमुं दोष्णा ग्रथन् बध्नन् श्रामयंश्च भूमौ प्रोथितवान् अभिहतवान्। क्राथ्यं हिंस्यम् अशीकितमतिम् असहनबुद्धिम् अचीकन् असहमानः अर्घ्यः हिंसनीयः स मल्लश्च हिंसितः। शुन्धितः शुद्धः सन् हरेः पदं श्रीविष्णु-

---

1 E प्रक्षिप्तः.
2 K2.5.6 om. रणेषु·······हीनः.
3 K2.5.6 add कीदृशः। रणेषु अतर्पन् तृप्तिहीनः.
4 E ज्रि.
5 तृप् कि संदीपे तृप् न च प्रीणने– *KK*. 231.
6 K2.5.6 om. शपि.
7,8 E कृष्णोऽविश्रथितारि—.
9 E अभिमुखमयन्.

लोकम् उपासात्सीत् प्राप्तवान् । तावत् तस्मिन्नवसरे हली स्वं [1]निजं बलम् अच्छदन् [2]अनाच्छादयन् मुष्ट्या मुष्टिकं जुषितवान् हिंसितवान् ॥

श्रथितेति । **श्रथ** मोक्षणे । बन्धे च द्रुमे[3] । हिंसायामिति [4]केचित् । [5]अस्मात् कर्मणि क्तः । अभिमयन् । **मी** गतौ । शता । ग्रथन् । **ग्रथ** बन्धने । शता । क्राथ्यम् । **क्रथ** हिंसायाम् इति स्वरितेतं केचिदाहुः । तस्माण्ण्यत् । अशीकितेति । **शीक** [6]मर्षणे । **चीक** च । आद्यः सेचने च । शीकेः कर्तरि क्तः । अचीकन् । चीकेः शता । अर्द्यः । **अर्द** हिंसायाम् । स्वरितेत् । तस्माण्ण्यत् । हिंसितः । **हिंसि** हिंसायाम् । [7]इदितोऽस्य युजादिफलं चिन्त्यम् । कर्मणि क्तः । उपासात्सीत् । **आङः षद** पद्यर्थे । [8]पद्यर्थो गतिः । लुङि सिचि वृद्धिः । शशपोः सदेः लृदित्वाल्लुङ्यङेवेति भेदः । शुन्धितः । **शुन्ध** शौचकर्मणि । कर्माविवक्षया कर्तरि क्तः । अच्छदन् । **छद** अपवारणे । स्वरितेदित्येके । शता । जुषितवान् । **जुष** परितर्कणे । ऊहो हिंसा वा तत् । परितर्पणे इत्येके । अस्मात् क्तवतुः । अस्येदित्त्वाभावादिट् ॥

**कूटाद्येषु हतेषु धावितमतिष्वन्येषु धावत्सु च**
**स्वैरं तत्र जनान् प्रयन् विगलितश्रन्थान् कचान् ग्रन्थयन् ।**
**आपन् खेदमरिं तनन् जनहितं चिक्रीड गोपैर्हरि-**
**स्तूर्योत्थो वितनन् ध्वनिर्दिवमगाद् दूतो यथा वादितः ॥५१॥**

---

1 K2 om. this word.

2 K1.3 E om. this word.

3 श्रथ् कि बन्धे मोक्षे वधे—*KK*. 190.

4 K2.5.6 एके for केचित्.

5 K3 E om. this word.

6 E आमर्षणे.

7 K2.5.6 om. this sentence.

8 K2.5.6 om. पद्यर्थो गतिः.

कूटाद्येषु हतेषु अन्येषु धावितमतिषु भिया कम्पितचित्तेषु धावत्सु सत्सु हरिः गोपैः सह तत्र स्वैरं चिक्रीड। कथंभूतः। जनान् प्रयन् [1]प्रीणयन्। विगलितश्रन्थान्[2] कचान् ग्रन्थयन् [3]बध्नन् अरिं खेदं आपन् लम्भयन्। जनहितं तनन् श्रद्दधानः इच्छन्। तूर्योत्थो ध्वनिः वितनन् दीर्घीभवन् वादितः सन्देशेन प्रेरितो दूत इव देवान् प्रति वक्तुं दिवमगात्॥

धावितेति। धूञ् कम्पने। कर्माविवक्षया अकर्मकत्वात् कर्तरि क्तः। प्रयन्। प्रीञ् तर्पणे। शता। श्रन्थेति। **श्रन्थ ग्रन्थ** सन्दर्भे। आद्यो हिंसायां च द्रुमे[4]। श्रन्थेर्घञ्। ग्रन्थयन्। ग्रन्थेः शता। आपन्। तनन्। वितनन्। रिच्यादिवदनिट्। **आप्लृ** लम्भने। **तनु** श्रद्धोपकरणयोः। उपहतौ श्रद्धोपघाते च द्रुमे। 'उपसर्गाच्च दैर्घ्ये'[5]। त्रिभ्यः शता। चन [6]श्रद्धोपहिंसयोरिति चैके। वादितः। **वद** सन्देशवचने। स्वरितेत्। वचने च द्रुमे[7]। अस्मात् [8]कर्मणि क्तः॥

**वचन्तो मानन्तो हरिविभवमानन्दमखिला**
**बभूवुर्गर्हन्तो मनसि नृपतिं मार्गितखलम्।**
**स्त्रियश्चोत्कण्ठन्त्यो ददृशुरजितं मृष्टतनवः**
**नृपस्त्वेतन्नामर्षत रिपुजनाधर्षितबलः॥ ५२॥**

---

1 K1.3 E om. this word.
2 K2 inserts स्रस्तबन्धान् between—श्रन्थान् and कचान्.
3 K1.3 E om. this word.
4 श्रन्थ कि दर्भे वधे—*KK*. 190.
5 Gaṇasūtra under तनु.
6 E श्रद्धोपहननयोरिति.
7 वद क् वाक्सन्देशयोः—*KK*. 205.
8 K1.3 E कर्तरि क्तः.

अखिलाः सर्वे जनाः हरेः विभवं प्रभावं वचन्तः कथयन्तो [1]मानन्तः बहुमन्यमानाश्च आनन्दं बभूवुः प्रापुः । नृपतिं मनसि गर्हन्तो निन्दन्तो मार्गितखलम् अन्विष्टदुष्टजनं स्त्रिय उत्कण्ठन्त्यो रागविवशा अजितं ददृशुः । मृष्टतनवः स्वच्छीकृताङ्गाश्च अलंकृताङ्गाश्च । नृपस्तु एतत् श्रीकृष्णप्रशंसादिकं न अमर्षत न सोढवान् । रिपुजनैरधर्षितबलः अनभिभूतपराक्रमः ॥

वचन्तः । मानन्तः । **वच** परिभाषणे । अनिट् । **मान** पूजायाम् । द्वयोः शता । बभूवुः । **भू** प्राप्तौ । आत्मनेपदी । भूधातुः प्राप्त्यर्थे वा णिज्वान् णिजणिचोरात्मनेपदी च स्यात् । अणिच्यात्मनेपदं नेत्येके । तस्माल्लिट् । गर्हन्तः । **गर्ह** निन्दने । शता । मार्गितेति । **मार्ग** अन्वेषणे । कर्मणि क्तः । उत्कण्ठन्त्यः । **कठि** शोके । प्रायेणोत्पूर्व उत्कण्ठार्थः । अस्माच्छतरि ङीप् । मृष्टेति । **मृज** शौचालंकारयोः । कर्मणि क्तः । अमर्षत । **मृष** तितिक्षायाम् । स्वरितेत् । लङ् । अधर्षितेति । **धृष** प्रसहने । कर्मणि क्तः । 'वष बन्धने' इति [2]केचिदाधृषीयेषु इच्छन्ति । आधृषीया गताः ॥

**क्रुद्धेनाकथि चाप्यवर्यगणने शठ्येन भोः श्रठ्यतां**
**मन्त्री तौ प्रपटय्य पाशवटनैः पापौ विरह्यौ पुरात् ।**
**के मूढाः स्तनयित्नुनिर्गदनवत्तूर्यध्वनिं कुर्वते**
**मल्लौघोऽपतयद्रिपुर्न तु[3] पतांचक्रे स पातोचितः ॥ ५३ ॥**

क्रुद्धेन ते अकथि अपि कथितम् । अपिशब्दः पूर्ववाक्यार्थसमुच्चये । न केवलं नामर्षत इत्येतावत् एवमुक्तं च । अवर्यगणने अनीप्सितव्यानां

---

1 K5.6 E om. this word. K2 om. आधृषीयेषु इच्छन्ति.
2 K2.5.6 एके for केचित्, 3 E रिपुं न तु.

गणने। शठ्येन प्रथममेव कथनीयेन भोः परिजनाः, मन्त्री श्वठ्यतां सम्यक् भाष्यताम्। पापौ तौ कृष्णरामौ पाशानां वटनैर्वेष्टनैः प्रपटय्य सम्यग्बद्ध्वा पुरात् विरह्यौ त्याज्यौ[1], हननपरिश्रमो मा भूत्। बहूनां [2]संतोषातिशयदर्शनेन सविशेषवाद्यघोषश्रवणात् कुपित आह। के मूढाः स्तनयित्नुनिर्गदनवत् मेघघोषवत् तूर्यध्वनिं कुर्वते। मल्लौघ एव अपतयत् [3]पतितः। [4]पातोचितः वधयोग्यस्तु रिपुर्न पतांचक्रे न पतितः॥

[5]इतः परमदन्ताः। अकथीति। **कथ** वाक्यप्रबन्धे[6]। णिजन्तात् कर्मणि चिण्। अतो लोपस्य स्थानिवत्त्वान्न वृद्धिः। अवर्येति। **वर** ईप्सायाम्। ण्यत्। गणने। **गण** संख्याने। तच्च संख्याविज्ञानं भागशोऽवस्थानं च। अस्माल्ल्युट्। शठ्येन। **शठ श्वठ** सम्यगवभाषणे। शठेरचो यत्। [7]श्वठ्यताम्। श्वठेः कर्मणि लोट्। प्रपटय्य। **पट वट** ग्रन्थे। 'वट वेष्टने' इत्येके। पटेर्ल्यप्। [8]'ल्यपि लघुपूर्वात्' [६.४.५६] इत्ययादेशः। वटनैः। वटेर्ल्युट्। विरह्यौ। **रह** त्यागे। यत्। स्तनयित्नु इति। **स्तन - गदी** देवशब्दे। ईकारो द्विवचनकृतः न त्वीदित्वार्थः। 'स्तनिहृषिपुषिगमिमदिभ्यो णेरित्नुच्' [उण्. ३.२९] इति स्तनेरित्नुचि 'अयामन्ता—' [६.४.५५] इत्ययादेशः। निर्गदनेति। गदेर्ल्युट्। अपतयत्। **पत** गतौ वा। अयं गतौ वा णिज्वान्। तत्र णिचि लङ्।

---

1 K1.3 E insert न तु between त्याज्यौ and हनन.
2 K1.3 E संतोषातिदर्शनेन.
3 K1.3 E om. this word.
4 E adds परि–before.
5 K2 om. इतः ........न्ताः.
6 K2 प्रबन्धने.
7 K2.5.6 om. this word.
8 One folio (No. 141) containing the matter from here upto the beginning of sloka 55 is missing in K2.

पतांचक्रे । णिजभावेऽप्यदन्तत्वेन अनेकाच्त्वादाम्प्रत्ययः । पातेति । पत गतौ वेत्यदन्तत्वं विकल्प्यत इति मते अनदन्तत्वे घञ् । 'पात ऐश्वर्यगत्योः' इति द्रुमे[1] ॥

**झटिति पषयन्त्वस्माद्गोपाः स्वरापयताधिकं**
**रचयत मुहुर्दण्डाघातं वनं कलयन्त्वमी ।**
**चहकमहितं नन्दं बद्ध्वास्य सारयतो धनं**
**हरत कृपकस्यारेस्तातं हत श्रथयत्तमम् ॥ ५४ ॥**

गोपाः झटिति अस्मात् पुरात् पषयन्तु गच्छन्तु । एतान् अधिकं स्वरापयत भर्त्सयत । अमी वनं कलयन्तु गच्छन्तु । नन्दं बद्ध्वा अस्य धनं हरत । चहकैः शाठ्यवद्भिः महितं पूजितम् । सारयतो दुर्बलीभवतः । कृपकस्य दुर्बलस्य अरेः श्रीकृष्णस्य तातं वसुदेवं हत विगतप्राणं कुरुत श्रथयत्तमम् अतिदुर्बलम् ॥

पषयन्त्विति । **पष** अनुपसर्गात् । अयमनुपसर्गो गतावदन्तः । बन्धबाधास्पर्शेषु च द्रुमे[2] । अस्मात् प्राप्तकाले लोट् । स्वरापयत । **स्वर** आक्षेपे । 'कथादिपातिस्फायो णौ पुग्लुग्वत्वम्' इति शाकटायनसूत्रेण[3] पुकि वृद्धिः । प्राग्वल्लोट् । रचयत । कलयन्तु । **रच** प्रतियत्ने । कृञर्थे च

1 पत ऐश्वर्यगत्योः—*KK.* 26.

2 पश पष इत्यानुपसर्गाद् बन्धबाधयोः स्पर्शगत्योः—*KK.* 26.

3 This is quoted from *MDV* under लज प्रकाशे—'तथा च शाकटायनसूत्रम् "कथादिपाथिस्फायो णौ पुग्लुग्वत्वम्" इति । अस्यार्थः कथादीनां पाथेश्च णौ पुग् लुग् इत्येतावागमौ स्फायोऽन्त्यस्य वत्वं क्रमेणेति । एवञ्च शाकटायनमतेन कथादीनामागमे पुकि वृद्धौ कथापयतीत्युदाहार्यम् । The difference is only we have here पाति against पाथि of *MDV*. The text of the sūtra according to the vṛtti *Cintāmaṇi* is कथादिपातिस्फायोऽग्लग्वम्. (4·1·197).

द्रुमे[1]। कल गतौ संख्याने च। द्वयोर्लोट्। चहकेति। चह [2]परिकल्कने। ण्वुल्। महितम्। मह पूजायाम्। कर्मणि क्तः। सारयतः। सार कृप श्रथ दौर्बल्ये। दीर्घवतां पाठोऽग्लोपित्वार्थः। सारेः शता। कृपकस्य। कृपेर्ण्वुल्। श्रथयदिति। श्रथेः शता॥

यो मत्क्षयं स्पृहयते मयि भामितेऽपि
संसूचयत्यरिगुणांश्च मदन्नखेटी।
तं क्षोटितौजसमगोमितभूमिबद्धं
शत्रौ कुमारयति मारयतोग्रसेनम्॥ ५५॥

तमुग्रसेनं शत्रौ कुमारयति क्रीडति मारयत विगतप्राणं कुरुत। [3]यो मम क्षयं स्पृहयते। मयि भामिते कुपिते अपि अरिगुणान् संसूचयति च। मदन्नखेटी मद्दत्तान्नभक्षी। कीदृशम्। क्षोटितौजसं क्षीणबलम्। अगोमितायां अनुपलिप्तायां असंस्कृतायां भूमौ बद्धम्॥

स्पृहयत इति। स्पृह ईप्सायाम्। लट्। भामितेति। भाम क्रोधे। कर्तरि क्तः। संसूचयति। सूच पैशुन्ये। लट्। अन्नखेटी। खेट भक्षणे। खेड इत्येके। खोट इत्यपरे। खेटेर्णिनिः। अयं क्षेपे च द्रुमे[4]। क्षोटितेति। क्षोट क्षये। कर्तरि क्तः। अगोमितेति। गोम उपलेपने। कर्मणि क्तः। कुमारयति। कुमार क्रीडायाम्। शता॥

शील्यं न सामनममीष्विह वेलयामि
पल्यूल्यतां यदुजनो मम वातकोऽपि।

---

1 रच त्क कृत्याम्—*KK.* 30.

2 K3 om. परि—.

3 K2 transposes यो मम.... च and मदन्न ·· भक्षी.

4 खोट खोड तक क्षेपे खेट खेड त्क भक्षणे—*KK.* 20.

**छिद्रं गवेषयितुमेव तु वासयन्ते**
**ये ते निवासितधियो ह्यसुभिर्विभाज्याः ॥ ५६ ॥**

अहम् अमीषु यदुषु इह इदानीं सामनम् अनुसरणं शील्यम् अभ्यसनीयं न वेल्यामि प्राप्तकालतया नोपदिशामि। यदूनामनुसरणाभ्यासकालो न भवतीति वदामीत्यर्थः। मम वातकः सेवको यदुजनोऽपि पल्यूल्यतां छिद्यताम्। ये छिद्रं गवेषयितुम् अन्वेष्टुं एव वासयन्ते सेवन्ते ते असुभिर्विभाज्याः पृथक्कर्त्तव्या मारयितव्याः[1]। निवासितधियः आच्छादिताभिप्रायाः॥

शील्यमिति। **शील** उपधारणे। अभ्यासस्तत्। 'अचो यत्' [३.१.५७]। सामनम्। **साम** सान्त्वप्रयोगे। ल्युट्। वेल्यामि। **वेल** कालोपदेशे। लट्। कालेत्यपि धातुरित्येके। पल्यूल्यताम्। **पल्यूल** लवनशोधनयोः। कर्मणि लोट्। वातकः। **वात** सुखसेवनयोः। गतिसुखेत्येके। ण्वुल्। गवेषयितुम्। **गवेष** मार्गणे। तुमुन्। वासयन्ते **वास** उपसेवायाम्। लट्। निवासितेति। **निवास** आच्छादने। कर्मणि क्तः। विभाज्याः। **भाज** पृथक्कर्मणि। यत्॥

**ते मामद्य सभाजयन्ति भुवने यैरून्यते सत्पथो**
**न क्वापि ध्वनयन्तु वेदमुखरास्ते कूटनीया द्विजाः।**
**इत्यूचे स हि केतयन् परिजनान् सेनापतीन् ग्रामयन्**
**स्वामात्यान् कुणयन् भटांश्च गुणयन् नृणां मुदं**
**स्तेनयन्॥ ५७॥**

यैः सत्पथः सन्मार्गः ऊन्यते त्यज्यते ते मामद्य सभाजयन्ति प्रीणयन्ति पश्यन्ति सेवन्ते च। वेदमुखरा न क्वापि ध्वनयन्तु शब्दं

---

1 K2 E add यस्मात् पल्यूल्यताम्.

कुर्वन्तु । ते वेदाभ्यासशीला द्विजाः कूटनीयाः परितापनीयाः [1]दहनीयाश्च । स कंसः इति ऊचे हि । किमर्थम् । परिजनान् केतयन्, सेनापतीन् ग्रामयन्, स्वामात्यान् कुणयन्, भटान् गुणयन् । श्रावयन्निति सर्वत्रार्थः । हेतौ शता । नणां सर्वजनानां मुदं स्तेनयन् अपहरन् ॥

सभाजयन्तीति । **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । लट् । ऊन्यते । **ऊन** परिहाणे । कर्मणि लट् । ध्वनयन्तु । **ध्वन** शब्दे । लोट् । कूटनीयाः । **कूट** परितापे[2] । परिदाहे इति [3]केचित् । कूड दाहे इति हरदत्तः । कूटेरनीयर् । केतयन् ग्रामयन् कुणयन् गुणयन् इति । **केत ग्राम कुण गुण** चामन्त्रणे । चकारात् कूटेति च । केतादेः शता । केत श्रावणे निमन्त्रणे च । श्रावणं समयोद्घोषणम् । निमन्त्रणमाज्ञा । कुण संकोचने च । भासने च द्रुमे[4] । स्तेनयन् । **स्तेन** चौर्ये । शता ॥

**तच्चाकर्ण्य सरोषमुत्पदयते स्मोत्तुङ्गमश्वं हरिः**
**प्रोत्तिष्ठन्नसिचर्मणी गृहितवान् कंसोऽपि मृग्योऽसताम् ।**
**द्रष्टॄणां कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-**
**चक्रे स्थूलितभीतिरर्थितवधः सत्राशनैर्गर्वितैः ॥ ५८ ॥**

हरिश्च तत् कंसवाक्यम् आकर्ण्य उत्तुङ्गमश्वं सरोषम् उत्पदयते स्म उत्पतितवान् । कंसोऽपि प्रोत्तिष्ठन् असिचर्मणी गृहितवान् । असतां

---

1 K3 E om. दहनीयाश्च.

2 K2.5.6 add ह्रस्वोपधश्च दृश्यते.

3 K2.5.6 एके for केचित्.

4 कुण रवाभासमन्त्रयोः — *KK.* 18.

जरासन्धादीनां[1] मृग्योऽन्वेष्यः। अथ द्रष्टृणां कुहको विस्मापकः सन् असिना वीरयांचक्रे पराक्रमं चकार। शूरयितृभिः पराक्रमकृद्भिः स्तुत्यः। स्थूलितभीतिः परिवृद्धभयः सत्राशनैः [2]यज्ञहविर्भागभुग्भिः देवैः अर्थितवधः। गर्वितैः इदानीमेव कंसनाशात् स्वेष्टसिद्धिः स्यादिति[3] अहंकृतैः॥

आ गर्वादात्मनेपदिनः। उत्पदयते। पद गतौ। लट्। गृहितवान्। गृह ग्रहणे। क्तवतुः। मृग्यः। मृग अन्वेषणे। यत्। कुहकः। कुह विस्मापने। ण्वुल्। शूरयितृभिः। शूर वीर विक्रान्तौ। शूरेस्तृच्। वीरयांचक्रे। वीरेर्लिट्। स्थूलितेति। स्थूल परिबृंहणे। कर्तरि क्तः। अर्थितेति। अर्थ याच्ञायाम्। कर्मणि क्तः। सत्रेति। सत्र सन्तानक्रियायाम्। संततं दीर्घकालतया क्रियत इति सत्रः। घञ्। गर्वितैः। गर्व माने। कर्तरि क्तः। आगर्वीया गताः॥

**आसूत्रयत् स हि तथाङ्गमसिप्रचारै-**
**र्मोमूत्रितारिरतिरूक्षणया रणेषु।**
**[4]निष्पारदुश्चरिततीरणकृद्यथेशो**
**नो चक्षमे पुटयितुं तमकत्रितोष्मा॥ ५९॥**

ईशः पुटयितुं संसर्गं प्राप्तुं स्प्रष्टुं यथा नो नहि चक्षमे शक्तोऽभूत्, स तथा असिप्रचारैः खड्गभ्रमणैः अङ्गम् आसूत्रयत् वेष्टितवान्। कीदृगीशः। निष्पारदुश्चरिततीरणकृत् अपारदुरिताब्धितारकः। अकत्रितोष्मा अकत्रितः अशिथिलः पूर्ण ऊष्मा यस्य सः। कीदृशः कंसः।

1 K2.5.6 insert बन्धुकृत्यार्थं between-दीनां and मृग्यो.

2 K2 याग for यज्ञ.

3 K2 inserts गर्वितैः between स्याद्दिति and अहं–.

4 The editor of E emends दुष्पार into निष्पार.

अतिरूक्षणया अतिक्रूरत्वेन मोमूत्रितारिः पुनः पुनः भृशं वा भीषितशत्रुवर्गः ॥

आसूत्रयदिति। **सूत्र** वेष्टने। लङ्। मोमूत्रितेति। **मूत्र** प्रस्रवणे। अस्मात् 'सूचिसूत्रिमूत्रि'—[1] इति यङन्तात् कर्मणि क्तः। रूक्षणया। **रूक्ष** पारुष्ये। युच्। निष्पारेति। **पार तीर** कर्मसमाप्तौ। पारेर्घञ्। तीरणेति। तीरेर्ल्युट्। पुटयितुम्। **पुट** संसर्गे। तुमुन्। अक्त्रितेति। **कत्र** शैथिल्ये। कर्तरि क्तः॥

**त्वां खञ्जयामि खलयन्त्वमुना जना मां**
**त्वं विष्टपं गरुडयन् हरिरेव चेत् किम्।**
**लोकोऽद्य घातयतु कृष्णमिति प्रलापी**
**तं संपतन्नपि न खड्गयितुं स लेभे॥ ६०॥**

अहं त्वां खञ्जयामि खञ्जं करोमि। जना अमुना मां खलयन्तु खलमाचक्षताम्। त्वं विष्टपं सर्वलोकं गरुडयन् गरुडेनातिक्रामन् साक्षात् श्रीहरिरेवासि चेत् मम तेन किम्। न शङ्कालेशोऽपि। लोकोऽद्य कृष्णं घातयतु कृष्णस्य वधं कथयतु। इति प्रलापी संपतन् स [2]कंसः तं श्रीकृष्णं खड्गयितुं खड्गेन छेत्तुमपि न लेभे। उपायं न लब्धवान्॥

खञ्जयामीति। 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च'। एतदेव विवृणोति। 'तत्करोति तदाचष्टे'। खञ्जयामि। करोत्यर्थे णिचि लट्। खलयन्तु[3]। आख्यानार्थे णिचि लोट्। गरुडयन्निति। 'तेनातिक्रामति'। अस्मिन्नर्थे णिचि शता। 'धातुरूपं च'। कृदन्ता णिचि धातुरूपं भजन्ते। अनेन 'आख्यानात्कृतस्तदाचष्टे'[4] इति णिच्। 'कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्'[5] इत्येतदुक्तम्। तेन कृष्णस्य कर्मत्वम्, वधभाव-

---

1 Vār. under 7.4.82.
2 K3 om. कंसः तं.
3 K1.2 add इति.
4,5 Vār. under 3.1.26.

निवृत्त्या हनेर्णिज्रूपत्वं च। तस्माल्लोट्। घातयतु। खड्गयितुमिति। 'कर्तृकरणाद्धात्वर्थे'। कर्तुर्यानि करणानि परश्वधादीनि तेभ्यस्तद्धात्वर्थे णिच् स्यात्। इति खड्गशब्दाण्णिचि तुमुन्॥

**लोके बष्कयतीह चित्रितमहामञ्चे स्वयं चित्रयन्**
**दोष्णा खड्गमुदंस्य तस्य वटयन् हस्तादगृह्णादमुम्।**
**धाम्नोच्चैर्लजयन् विमिश्रितजने रङ्गे निपात्याथ तं**
**द्राक्सङ्ग्रामयमाणशस्त्रजकिणस्तोम्ये पपातोरसि॥ ६१॥**

इह चित्रिते कृतचित्रलेखने महामञ्चे स्थितः श्रीकृष्णः लोके बष्कयति पश्यति दोष्णा स्वयं चित्रयन् आश्चर्यं कुर्वन् उदंस्य उच्चैराहत्य तस्य हस्तात् खड्गं वटयन् पृथक्कुर्वन् अमुमगृह्णात्। अथ तं विमिश्रितजने रङ्गे निपात्य तस्योरसि द्राक् पपात। धाम्ना उच्चैर्लजयन् प्रकाशमानः। सङ्ग्रामयमाणशस्त्रजकिणस्तोम्ये सङ्ग्रामयमाणानां युद्धकर्तॄणां शस्त्रजकिणैः स्तोम्ये श्लाघनीये वक्षसि॥

बष्कयतीति। **बष्क** दर्शने। शता। चित्रितेति। **चित्र** [1]चित्रकरणे। आलेख्यकरणं तत्। कर्मणि क्तः। चित्रयन्। 'कदाचिद्दर्शने'। अद्भुतदर्शने चार्थे चित्रधातोर्णिच्। क्षणिकदर्शने [2]इति द्रुमे[3]। अस्माच्छता। उदंस्य। **अंस** समाघाते। विभाजने च द्रुमे[4]। ल्यप्। वटयन्। **वट** विभाजने। वटीत्येके। वटेः शता। लजयन्। **लज** प्रकाशने। लजीत्येके। वण्टिलञ्ज्योरिदित्त्वेऽप्यत्र पाठाददन्तकार्यं पुगादि

1 E चित्रीकरणे.

2 E om. इति द्रुमे.

3 चित्र त्क क्षणिकेक्षणे लेख्येऽद्भुते—*KK*. 22, 23.

4 अंस त्क विभाजने—*KK*. 15.

स्यादेवेति माधवः[1]। मिश्रितेति। **मिश्र** सम्पर्के। कर्तरि क्तः। सङ्ग्रामयमाणेति। **सङ्ग्राम** युद्धे। अयमात्मनेपदी। शानच्। स्तोम्ये। **स्तोम** श्लाघायाम्। यत्॥

**यो ह्यच्छिद्रित एव वीर्यशतकृत्तस्मिन् पतत्यन्धयन्**
**पिष्टाङ्गः स ममार दण्डितखलस्येशस्य पादाङ्कितः।**
**कृष्णोऽप्यश्रुजलाङ्क्तितेऽतिसुखयत्यामुच्य पुष्पोत्करं**
**देवौघे हृतदुःखने रसयति व्याकर्षदेनं क्षितौ॥ ६२॥**

योऽच्छिद्रित एव आविद्धकर्ण एव, तस्मात् पूर्वमेव पूतनावधादि- वीर्यशतकृत् हि। तस्मिन् पतति [2]पिष्टाङ्गोऽन्धयन् मोहं प्राप्तः स कंसो ममार। दण्डितखलस्य पीडितदुष्टजनस्य [3]ईशस्य श्रीकृष्णस्य [4]पादेन अङ्कितो मुद्रितः। तदा च कृष्णोऽपि देवौघे अश्रुजलेन अङ्क्तिते चिह्निते पुष्पोत्करमामुच्य अतिसुखयति भृशं सुखमनुभवति हृतदुःखने हृतदुःखानुभवे रसयति भगवद्व्यापारमास्वादयति सति च। एनं कंसं क्षितौ व्याकर्षत्। कंसद्विष्टानां निजभक्तानां यदूनां पीडानिवृत्त्यर्थमेतत्॥

अच्छिद्रितेति। **छिद्र** कर्णभेदने। कर्णेति पृथग्धातुरित्येके। [5]कर्मणि क्तः। अन्धयन्। **अन्ध** दृष्ट्युपघाते। शता। दण्डितेति। **दण्ड** [6]दण्डपाते। कर्मणि क्तः। अङ्कित इति। अङ्क्तितेति। **अङ्क** पदे

1 वटि लजि इत्येके......अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यपरे.... तथा च शाकटायनसूत्रम्—'कथादिपाथिस्फायो णौ पुग्लुग्वत्वम्' इति— *MDV*. under लज प्रकाशे (See also ante, note under the dhātu स्वर).

2 K2 संपिष्टाङ्गो.

3 E om. this word.

4 E पादे.

5 K2.5.6 om. कर्मणि क्तः.

6 E दण्डनिपातने.

लक्षणे च । **अङ्क** च । द्वयोः कर्मणि क्तः । अतिसुखयति । **सुख दुःख** तत्क्रियायाम् । तत्क्रिया तदनुभवः । सुखेः शता । [1]दुःखनेति । दुःखेर्ल्युट् । रसयति । **रस** आस्वादनस्नेहनयोः । शता ॥

**नित्यं व्ययापितमलो हृदि रूपयंस्तं**
**प्रच्छेदितप्रकृतिरच्छदितस्वरूपम् ।**
**ब्रह्माविशत् सुकृतलाभित एष कंस-**
**स्तत्पादसंव्रणितमूर्तिरवर्ण्यभाग्यः ॥ ६३ ॥**

सुकृतलाभितः [2]पूर्वजन्मान्ते भगवदवलोकनजातेन सुकृतेन प्रेरितः एष कंसः तं नित्यं हृदि रूपयन् तत्स्वरूपं हृदि स्थिरीकुर्वन् व्ययापितमलः क्षपितसर्वदोषः । तेनैव प्रच्छेदितप्रकृतिः प्रक्षीणमायाजनितवासनालेशः सन् अच्छदितस्वरूपम् अनावृतानन्दात्मकं ब्रह्म अविशत् ऐक्यमनुभूतवान् । यतः तदापि तत्पादसंव्रणितमूर्तिर्भगवच्छ्रीपादपरिक्षुण्णशरीरः । अवर्ण्यभाग्यः इतरजनदुष्करकथनभाग्यविशेषः ॥

व्ययापितेति । **व्यय** वित्तसमुत्सर्गे । कर्मणि क्तः । रूपयन् । **रूप** रूपक्रियायाम् । सा च रूपस्य करणं दर्शनं वा । हेतौ शता । प्रच्छेदितेति । **छेद** द्वैधीकरणे । अच्छदितेति । **छद** अपवारणे इत्यप्येके । लाभितेति । **लाभ** प्रेरणे । संव्रणितेति । **व्रण** गात्रविचूर्णने । चतुर्णां कर्मणि क्तः । अवर्ण्येति । **वर्ण** वर्णक्रियाविस्तारगुणवचनेषु । यत् ॥

**प्रपर्णितदिशं रुचां क्षपितभूभृतोऽस्यानुजाः**
**सदोनिव्रसितं हरिं ययुरतूत्थिताङ्गाः क्रुधा ।**
**अमूनधिकमोजयन्नखिलरङ्गमन्दोलयन्**
**बलः स्फुटितदोर्बलान् समवधीरयञ्जघ्निवान् ॥ ६४ ॥**

---

1 K2 दुःखेनेति.

2 K3 जन्मान्तर for पूर्वजन्मान्ते.

अस्य कंसस्य अनुजाः कङ्कन्यग्रोधादयः सदोनिवसितं सदसि स्थितं हरिं क्रुधा अतूत्थिताङ्गा अनादृतवर्मावरणा आययुः। रुचा निजदेहकान्त्या प्रपर्णिता हरितीकृता दिशो येन तं हरिम् क्षपिता बहुकृत्वो हता भूभृतो नृपा यैस्ते। बलोऽमून् समवधीरयन् अनादरं कुर्वन् जघ्निवान् हतवान्। कथंभूतः। अधिकमोजयन् बाहुबलं प्रकाशयन्। अखिलरङ्गं रङ्गस्थान् अखिलजनान् अन्दोलयन् क्षोभयन्। अधीरान् कुर्वन्नित्यर्थः। स्फुटितदोर्बलान् विशीर्णबाहुबलान् ॥

प्रपर्णितेति। 'बहुलमेतन्निदर्शनम्'। एतच्चुरादावदन्तधातुप्रदर्शनं बहुलं ज्ञेयम्। ते नैतान्यपि सिद्धानीत्याह। **पर्ण** हरितभावे। अस्य हेतुमण्णिजन्तात् कर्मणि क्तः। क्षपितेति। **क्षप** प्रेरणे। नाशनार्थोऽप्ययम्। अस्मात्कर्मणि क्तः। निवसितेति। **वस** निवासे। कर्तरि क्तः। अतूत्थितेति। **तूत्थ** आवरणे। कर्मणि क्तः। ओजयन्। अन्दोलयन्। शता। स्फुटितेति। कर्तरि क्तः। समवधीरयन्। शता। एते बहुलत्वात्सिद्धाः। **ओजे**र्बलदीप्ती, **अन्दोले**श्चलनम्, **स्फुटे**ः प्रकाशनविशरणे, **अवधीरे**रवज्ञा इति द्रुमे[1] एवं गन्धयतीति हिंसार्थः। अर्थयतीत्यतङ्ङनेन[2] साध्य इति हरः। अपानयतीत्यपान इत्यादौ आनयतिर्धात्वन्तरमिति योगशास्त्रे ॥

अथ स्ववर्ग्यभूतेन केनचिदमानुषकर्मणि कृते गोपकुमाराणां प्रहर्षातिशयं वर्णयति—

---

1 अवधीर त्कवज्ञायाम् आन्दोल तक दोलने; ओजत्क बलतेजसोः; स्फुट त्क तु प्रकाशने—*KK*.16, 36.

2 K3 एतदनेन, K2 इत्यनेन, E अतङ्तेन for अतङ्ङनेन.

**हस्तयमानाः पादयमाना गोपकुमारा नृत्तमकुर्वन् ।**
**श्वेतयमानाश्वाश्वयमानास्तत्पुरमायन्[1] केशवपक्ष्याः ॥ ६५ ॥**

गोपकुमारः हस्तयमानाः पादयमानाश्च हस्तं पादं हर्षातिशयेन विक्षिपन्तः सन्तः नृत्तं अकुर्वन् । केशवपक्ष्याः कंसभयात् देशान्तरं गताः केचित् श्वेतयमानाः श्वेताश्वेन चरन्तः, अन्ये अश्वयमानाः अश्वतरेण गच्छन्तश्च तत् पुरं मधुरापुरं आयन् आगतवन्तः ॥

हस्तयमानाः पादयमाना इति । 'णिङङ्गान्निरसने' इति द्वयोर्णिङ् । श्वेतयमानाः अश्वयमाना इति । 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतक-लोपश्च' इति श्वेताश्वाश्वतरशब्दाभ्यां णिङ्, अश्वशब्दतरशब्दयोर्लोपश्च ॥

**खला विपुत्कुक्कुरवद्भयार्ता ययुश्च संभाण्डयमानभृत्याः ।**
**भयेन संचीवरिताः स्थिता ये ते तु [2]प्रविष्टा नगरं प्रहृष्टाः[3] ॥ ६६ ॥**

विपुच्छाः कुक्कुरा इव अधःकृतपुच्छाः श्वान इव भयार्ताः खलाः संभाण्डयमानभृत्याः समाचयमानाः उद्धार्य वस्तूनि एकीकृत्य बध्नन्तो

---

1 D2 K3 आपन्.

2 K2 transposes प्रहृष्टाः add प्रविष्टाः.

3 D2 adds इति धातुकाव्ये तृतीयः सर्गः. Then there is the following verse (obviously by the scribe):-
मातृकादोषतो वापि
लिखितुर्दोषतोऽपि वा ।
न्यूनातिरिक्तवर्णोऽयं ग्रन्थः
संशोध्यतां बुधैः ॥
Then the following is seen in a new hand—
गुरुवायुपुराधीश प्रसीद
करुणाकर ।
पुरुषोत्तम वैकुण्ठ त्वयि सर्वं
समर्पितम् ॥ शुभमस्तु ॥

भृत्याः येषां ते तथाभूताः सन्तो ययुः । ये सज्जना भयेन संचीवरिताः चीवरमर्जितवन्तः परिहितवन्तो वा पूर्वं स्थितास्ते तु प्रहृष्टा नगरं मधुरापुरं प्रविष्टाः ॥

विपुदिति । 'पुच्छादिषु धात्वर्थे' इत्येव सिद्धम् । 'पुच्छभाण्डचीवराण्णिङ्' [३.१.२०] इति न वक्तव्यम् । 'प्रातिपदिकाद्धात्वर्थे'[1] इत्येव णिच्सिद्धेः बहुलोक्त्यात्मनेपदसिद्धेश्च । तत्र 'पुच्छादुदसने पर्यसने व्यसने वा' इति णिङि ततः 'क्विप् च' [३.२.७६] इति क्विप् । पुतं छादयतीति व्युत्पत्त्या पुच्छशब्दस्य संयोगान्तलोपे तकारशेषाद्विपुदिति स्यात् । संभाण्डयमानेति । 'भाण्डात्समाचयने' इति णिङि शानच् । संचीवरितेति । 'चीवरादर्जने परिधाने वा' इति णिङि कर्तरि क्तः ॥

इति [2]श्रीकृष्णार्पणनाम्नि धातुकाव्यव्याख्याने तृतीयः सर्गः[3] ।

---

1 Gaṇasūtra given earlier.

2 E om. श्री....म्नि.

3 The MSS. contain some additional matter:-

K3 has the śloka मातृकादोषतो वापि etc., and शुभमस्तु.

K2.5.6 E have the śloka-

निहत्य कंसं मधुरानगर्यां निवेश्य
राजानमथोग्रसेनम् ।
सम्प्रेष्य नन्दं विजहार कृष्ण-
स्तत्रैव रामेण सहात्मगेहे ॥

After this—

K2 has रामकृष्णाभ्यां नमः ।

K6 has श्रीवासुदेवाय नमः and a statement in Malayalam that this manuscript was completed by Rāmaśāstrin on the 10th day of Chingom in 1063. [M. E.]

K5 has the following—

वन्देऽहं परमशिवां बालारण्याधि-
वासिनीं द्विषामशिवाम् ।
नित्यं दुर्जननाशां यस्या.........
जहुर्जननाशाम् ॥

गोगणबालं गोपकिशोरैराहृतलीलं भूसुरनाथम् ।
श्यामलवर्णं कोमलदेहं नौमि सदाहं नन्दतनूजम् ॥
कल्पकश्रेणिवासिना नीलकण्ठेन लिखितमिदं पुस्तकम् ।

Then मातृकादोषतो etc., with uttarārdha as—न्यूनातिरिक्तं दोषं यत् क्षन्तुमर्हन्ति सज्जनाः । श्रीकृष्णाय नमः । नमः शिवाय ।

E has the following ślokas—

क्वचित् सुयोज्या धात्वर्था क्वाप्ययोज्या उणादिषु ।
क्वचित् कथंचिद्योज्याः स्युर्वक्ष्यन्ते तत्र तत्र ते ॥
हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा ।
एभिर्धात्वनुबन्धानां लोपे स्यात् प्रत्ययः पुनः ॥
हलन्त्यमिति लुप्येते स्वरार्थावन्तिमौ हलौ ।
तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेषु षट् ॥
आरूढो गरुडं भुजान्ततरलश्रीवन्यमालावलिः
क्ष्मामान्दोलितचामरान्तरगतः प्रोड्डीयमानोऽमरैः ।
वञ्चन्मीनसुवर्णकुण्डलधरो धाराधरश्यामलः
काले मे चरमे ममाक्षिपदवीमायातु नारायणः ॥

इति धातुकाव्यं समाप्तम् ।

K1 has—

श्रीकृष्णाय नमः । Then—

शिवातटाकनिवसच्छ्रीरुद्रपरिचारकः ।
सव्याख्यानं धातुकाव्यं रुद्रो लिखितवान् स्वयम् ॥

which gives the name of the scribe as Rudra. After this we get the two ślokas क्वचित् सुयोज्या............प्रत्ययः पुनः found in E given above. Then the following :—

उदात्तेत्त्वानुदात्तेत्त्वस्वरितेत्त्वविभागकृत् ।
एधादीनामकारोऽन्त्यः कथादीनामवृद्धिकृत् ॥
आदिदीदिच्च निष्ठायामनिट्त्वार्थं कृतावुभौ ।
भावादिकर्मणोर्वेट् स्यादादितामिति भिद्यते ॥

इदित्वं तु नुमर्थं स्यादुदित्वं त्वेड्विकल्पकृत् ।
ऊदित्वं हीड्विकल्पार्थमृदिच्चङ्ह्रस्वबाधकः ।।
लृदित्वं लुङ्यङर्थं स्यादेदित्वं सिच्यवृद्धिकृत् ।
निष्ठानत्वार्थमोदित्वं ङित्तङर्थौ द्वयाय ञित् ।।
इरित्त्वमङ्विकल्पार्थं षित्वं भावेऽङ्विधायकम् ।
ञीद्वर्तमाने क्तार्थोऽयं डुटुशब्दौ क्त्र्यथुच्फलौ ।।
नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजश्शकारश्च षाट्टवर्गस्तवर्गजः ।।
अनुदात्तात्मता धातोरिण्निषेधार्थमुच्यते ।
उदात्तत्वं च सेट्त्वार्थमिति सर्वत्र दृश्यताम् ।।

As already pointed out (p. 159) the ślokas from क्वचित् सुयोज्याः etc., ending with सर्वत्र दृश्यताम् are also found at the close of the available portion of the commentary on the second canto in K3. (These are taken from the Dhātukhaṇḍa of *Prakriyāsarvasva.*)

K1 continues—

अच एकाचोऽनूदृच्छिश्रिशीङ्युरुस्नुनुक्षुक्ष्णुवृङ्वृञः । शकोऽनिदितः । विदेरलुकः । श्लिषिधुषिपुषिश्विदिबुधिमनश्यनाम् । हन्घस्वसप्रच्छः । परिमुसिविवाच्चः । भ्रस्मस्भुरुस्वं संरम्भं विसृज्यययुनिभाजः । अच्छिसरिवहनुस्कम्पतुभिक्षुशाद्ः । साराबंरुक्षुयुक्रुशुव्याद्धः । आस्वलिलुचुक्षितिसृतवशात् पः । यरलाद्भः । यरनगान्मः । लिविमृदिस्पृदंद्दरुक्रेश्शः । वितुदुत्विद्विशिशुक्रुपेः षः । दिनमिवदरुदुलिरिलोर्हः । रधनशतृपदृपद्रुहमुहष्णुहष्णिहाम् । (These are sūtras 6.4.136-150 and 114 in Bhoja's *Sarasvatīkaṇṭhābharaṇa*). एते धातवोऽनुदात्ताः । उदात्ता अन्यधातवः ।

पत्न्या उभयतः पद्मा पयोधिरशना च यम् ।
यं सर्वतो मुनिगणा वन्दे तं देवपुङ्गवम् ।।

रामपाणिवादविरचितं

# धातुकाव्यविवरणम्

[1][ अनेकप्रक्रियारूपमपरिच्छेद्यगौरवम् । ]
निर्ममे येन सर्वस्वं परस्मै ब्रह्मणे नमः ॥

श्रीनारायण[कविना] रचितं [ यद् ] धातुकाव्यमतिभव्यम् ।
क्रियते तस्य विवरणं किमपि मया पाणिवादेन ॥

अथ महाकविरादौ तावद्वस्तुनिर्देशप्रकारेण स्वचिकीर्षितं प्रतिजानीते—उदाहृतमिति।

प्राक् पूर्वं वासुदेवनाम्ना कविना पाणिनिसूत्राणामष्टाध्या[यीगता]न सूत्राणां मण्डलं समुदायः उदाहृतमुदाहरणरूपकाव्यात्मना ............... द्धं यदित्यध्याहार्यम्, उपरि तच्छब्दश्रवणात्, तदूर्ध्वतस्तस्मादुपरि अपरः कविरद्य वृकोदरेण भीमाचार्येणोदितान् कथितान्, कथनं त्वर्थनिर्देशः, भू इत्यस्यादेर्धातोः सत्तायामित्यर्थविवरणम्, एवं एधधातोर्वृद्धाविति विवरणम्, तादृशान् धातून् क्रमेणैव माधवाश्रयात्........ [माधवा] चार्यकृतधातुवृत्तिमाश्रित्य उदाहरति काव्य..................। [माध]वाश्रयादित्यनेन भगवतो लक्ष्मीपतेर्वसुदेव.........दवतीर्णस्य कथा तावदवतारमारभ्य कंसवधप्रस्तावपर्यन्तं वासुदेवविजयनाम्नि काव्ये स्थिता । ततः परमक्रूरप्रयाणमारभ्य कंसवधावधिकाध....रुदाहरणरूपं काव्यं करोतीति सिद्धमिष्टम् ॥ १ ॥

---

1 The first line is completely damaged in the MS. It is restored here from a quotation in the work *Mahākavi Rāmapāṇivādan* by Vatakkumkur Rajaraja Varma, Trichur, 1962.

अथ प्रतिज्ञातं प्रस्तौति—**स गान्दिनीभूरिति ।**

अथ स गान्दिनीभूर्गोपकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनं नाधितलोक........हरिं द्रक्ष्यन् मुदास्कुन्दितमन्तरिन्द्रियं '....कुर्यात्समाप्तावपि मङ्गलम्' इति वचनानुरोधेन मङ्गलवचनम् । 'अथ शब्दानुशासनम्' इतिवत् । स तथा प्रसिद्धो गान्दिनी**भूः** अक्रूरः[1] । गान्दिन्यामभूदिति कर्तरि क्विबन्तो धातुरुदाहृतः । एवमुपर्यपि द्रष्टव्यम् । गोकुले व्रजवाटे एधितं वृद्धिमुपगतम् । **एध** वृद्धौ इति धातुः । **स्पर्धा**लुधीभिः पराभिभवेच्छाशालिमनोभिः कंसकेशिधेनुकप्रभृतिभिश्शत्रुभिर्गाधितं लब्धु........................ धातुरालुच् प्रत्ययान्तः । **गाधृ** प्रतिष्ठालिप्सयोर्ग्रन्थे च । **बाधृ** लोडने । लोडनं प्रतिघातः । नाधितस्य उपतप्तस्य, संसारसन्तापाभिभूतस्येति यावत्, लोकस्य जनस्य नाथकं ईश्वरं रक्षितारमित्यर्थः । **नाधृ नाथृ** याच्ञोपतापैश्वर्याशीष्षु । तथाभूतं हरिं श्रीवासुदेवं द्रक्ष्यन् द्रष्टुमुपक्रममाणः । 'लृटस्सद्वा' [३.३.१४] इति हेतौ शता । मुदा हर्षेण स्कुन्दितं आप्लुतम् आर्द्रीकृतमित्यर्थः । अन्तरिन्द्रियं मनो देधे धृतवान् । **दध** धारणे । **स्कुदि** आप्रवणे । देधे इति । 'अत एकहल्मध्ये' [६.४.१२०] इत्येत्वाभ्यासलोपौ लिटि । स्कुन्दितमिति । कर्मणि क्तः । इत्थं नव धातव उदाहृताः ॥ २ ॥

अथ कथमसावितः पूर्वं हरिमभिवन्दितुं न गतवानित्याशङ्कायामाह—**प्रश्चिन्दिताशमिति ।**

असौ पुरा नतभन्दिनं तं विभुं विवन्दिषुरपि कंसात् भिया स्वमन्दिात् स्पन्दितुमेव नाशकदित्यन्वयः । असावक्रूरः पूर्वस्मिन् काले नतभन्दिनं नतान् .... णेन योजयितुं सुखयितुं वा शीलमस्येति तथा । **भदि** कल्याणे सुखे चेति धातुः । तं तादृशं विभुम् । श्रीवासुदेवः

---

1 MS. adds क्रूरः.

विश्वव्यापित्वाद्विभुरित्युच्यते । विवन्दिषुः वन्दितुम् अभिवादयितुं स्तोतुं च इच्छावानपि । **वदि** अभिवादनस्तुत्योः । कंसात् सकाशात् भिया त्रासेन हेतुना स्वस्य मन्दिरात् भवनात् । **मदि** स्तुतिमोदमदस्वप्नकान्तिगतिष्विति मन्दिरः औणादिकेरप्रत्ययान्तः । धातूनामनेकार्थत्वात् भवने वृत्तिः । स्पन्दितुमेव किञ्चिच्चलितुमेव नाशकत् न शक्तोऽभूत् । किं पुनस्ततो व्रजं गन्तुमिति भावः । स्पदि किञ्चिच्चलने । कीदृशं हरिं यशसा पूतनाघबकतृणावर्तादिनिधनजनितया कीर्त्या प्रश्विन्दिताशं प्रकर्षेण श्विन्दिता श्वेतीकृता आशाः दिशो येन । **श्विदि** श्वैत्य इति धातुरकर्मकोऽपि । णिजन्तादस्मात् कर्मणि क्तः । कीदृशात् कंसात् । परिक्लिन्दिताः परिदेविताः शोकं प्रापिताः सज्जनाः साधुजनाः येन तस्मात् भीः कस्य न स्यादिति भावः । **क्लिदि** परिदेवने । अस्मिन् श्लोके श्विदीत्यादिकाष्षड् धातव उदाहृताः ॥३॥

तस्य च हरौ भक्त्यतिशयानुभावमाह—**मुदेति** । सः मुदा हरौ चिरं चेतो ददद इत्यन्वयः । सोऽक्रूरो मुदा हर्षेण हेतुना । **मुद** हर्षे । मुदिति संपदादित्वाद् भावे क्विबन्तः । हरौ चिरं बहुकालं चेतो ददद मनो दत्तवान् । मनो भगवति सुचिरं समर्पितवानित्यर्थः । **दद** दाने । लिटि 'न शसददवादिगुणानाम्' [६.४.१२६] इत्येत्वाभ्यासलोपनिषेधात् ददद इति रूपम् । कीदृशे हरौ । सुरैः स्वादात् स्वर्दितमङ्गलोर्दने । सुरैः देवैः । इदं चोपलक्षणं मुनिमनुजभुजङ्गमादिभुवनवासिनामपि । स्वादात् रुच्यतिशयाद्धेतोः स्वर्दितम् अनुभूतं मङ्गलोर्दनं शुभक्रीडनं यस्य । **ष्वद स्वर्द** आस्वादने । **उर्द** माने क्रीडयां च । ऊर्दनमत्र क्रीडा विवक्षिता । 'उपधायां च' [८.२.७८] इति दीर्घः । असौ हरिः स्वखूर्दकैः स्वस्य खूर्दकैः क्रीडकैः सवयोभिर्वयस्यैः सह अस्य अक्रूरस्य एवं भगवति समर्पितमनसः पुरः अग्रे अकूर्दतेव क्रीडितवानिव । भावनाबलेनास्य तथानुभवविषयोऽभूदित्यर्थः । कीदृशः । वनान्तगूर्दी

रिपुगोदसूदी । वनान्ते वृन्दावने गूर्दितुं क्रीडितुं शीलमस्य । किञ्च रिपूणां कंसादीनां गोदं क्रीडां सूदितुं क्षरणं कर्तुं, नाशयितुमित्यर्थः, शीलमस्येति । रिपूणां सुखावस्थानभञ्जनशील इति यावत् । **कुर्द खुर्द गुर्द गुद** क्रीडायामेव । अत्रैवकारेणेतरेषां धातूनां निर्दिष्टादन्यस्मिन्नप्यर्थे वृत्तिर्ज्ञापिता । **षूद** क्षरणे । अत्र दश धातव उदाहृताः ॥ ४ ॥

**गभीरेति** । स इत्यनुवर्तते । अथ ह्लादादनुस्वादितकृष्णसत्कथः सः गभीरनिर्ह्लादं पृदाकुजिद्वेगं रथमास्थितो वियोयुतत्काननजोतिनाध्वना ऽयत्नतो ययौ इत्यन्वयः । अथ अनन्तरं ह्लादात् सुखाद्धेतोः । **ह्लादी** सुखे च इति धातुः । अनुस्वादिता अनुस्वादेन अनुगतमाधुर्यानुभावेन अनुभूता कृष्णस्य सत्कथा सच्चरितं येन तथा सन् सोऽक्रूरो गभीरनिर्ह्लादं गम्भीरशब्दम् । **ह्राद** अव्यक्ते शब्दे । **स्वाद** आस्वादने । पृदाकुः सर्पः । 'सर्पः पृदाकुर्भुजगः' इत्यमरः । तस्य जेता गरुडस्तस्येव वेगो यस्य । **पर्द** कुत्सिते शब्दे इति धातोरौणादिक आकुप्रत्ययः, तत्सन्नियोगेन प्रकृतिभागस्य पृदादेशश्च । रूढिशब्दत्वादर्थानपेक्षं संज्ञामात्रमिदम् । तथाभूतं रथम् आस्थितोऽधिरूढस्सन् वियोयुतता काननेन जोतितुं शीलमस्येति तादृशेनाध्वना । **युतृ जुतृ** भासने इति धातुद्वयम् । तत्र विपूर्वात् युतृधातोर्यङ्लुगन्ताच्छतरि रूपम् । विशेषेण भृशं भासमानेन काननेनेत्यर्थः । तेन जोतिना । **जुतृ**धातोश्शीलार्थे णिनिः । तादृशेन मार्गेण अयत्नतः अनायासेन । यती प्रयत्ने इत्यस्मात् 'यजयाच—' [३.३.९०] इत्यादिना नङ्प्रत्ययः । ययौ हरिदर्शनार्थं प्रस्थितवान् । अत्र सप्त धातव उदाहृताः ॥ ५ ॥

अथ प्रस्तुतसिद्धये दैवानुकूल्यमभ्यर्थयते—**स वेथतेति** । सः विधिं वेथते स्म । सोऽक्रूरो विधिं दैवम् । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री

नियतिर्विधिः' इत्यमरः। वेथते स्म याचितवान्। कीदृशम्। अखिलवेथितं सर्वजनैः स्वाभीष्टमभ्यर्थितम्। **विथृ वेथृ** याचने इत्याद्यस्तङन्तोऽपरः क्तान्तः। 'लट् स्मे' [३.२.११८] इति भूते लट्। स कीदृशः। प्रश्रन्थितग्रन्थनधीः अकत्थनः। प्रश्रन्थितं प्रकर्षेण शिथिलितं वियुक्तमित्यर्थः। ग्रन्थनं कौटिल्यं व्याजमित्यर्थः। प्रश्रन्थितं ग्रन्थनं यस्यास्तथाभूता धीर्बुद्धिर्यस्य स तादृशः। अकत्थनः आत्मश्लाघारहितः। **श्रथि** शैथिल्ये। **ग्रथि** कौटिल्ये। आद्यः क्तान्तोऽपरो भावे ल्युडन्तः। **कत्थ** श्लाघायाम्। कर्तरि युजन्तः। याचनप्रकारमाह। मुरारिः प्रश्च्युतितैः स्मितामृतैः दिशः च्योतन् मम अन्तिके अतेदिति। मुरारिः कृष्णः प्रश्च्युतितैः क्षरितैः स्मितामृतैः अमृततुल्यैः दिशः आशान्तरालानि च्योतन् आर्द्रीकुर्वन् ममान्तिके समीपे अतेत् सततं सञ्चरेदिति प्रार्थनायां लिङ् परस्मैपदम्। एधतिमारभ्य कत्थत्यन्तमनुदात्तेत्त्वादात्मनेपदिनः षट्त्रिंशद्धातवः। अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपदिनः। अत सातत्यगमने। चिन्मयः ज्ञानस्वरूपः। **चिती** संज्ञाने। क्विबन्तः। **च्युतिर्** आसेचने। **श्च्युतिर्** क्षरणे। नव धातवः॥ ६॥

अथोपरि 'स एवमादीन् विमृशन्' इति वक्ष्यति। तदवध्यक्रूरस्य विमर्शनप्रकारमाह—**ममन्थेति**। यः विश्वं ममन्थ अकुन्थकान् सुजनान् प्रपुन्थ्य बन्धूनपि लुन्थति स्म सः भोजराडद्य हरिं मिमन्थिषुः प्रमान्थनं सेधतु, कः निषेत्स्यति इत्यन्वयः। यो भोजराट् कंसः विश्वं लोकं ममन्थ विलोलितवान् विक्षोभितवानित्यर्थः। अकुन्थकान् अहिंसकान् प्राणिवधादिदोषवर्जितान् सुजनान् साधून् प्रपुन्थ्य प्रकर्षेण क्लेशयित्वा बन्धूनप्यात्मसुहृदोऽपि लुन्थति स्म क्लेशं लम्भितवान् स तादृशो भोजराडद्य अस्मिन् काले हरिं मिमन्थिषुः हिंसितुमिच्छुस्सन् प्रमान्थनं हिंसामात्मविनाशं सेधतु

गच्छतु स्वयमेव विनश्यतु । कामचारानुज्ञायां लोट् । को जनो निषेत्स्यति निवारयिष्यति स्वकृतदुराचारफलमनुभवन् पापी जनः केन परित्रायत इत्यर्थः । **मन्थ** विलोडने । **कुथि पुथि लुथि मथि मान्थ** हिंसा-संक्लेशनयोः । **षिध** गत्याम् । **षिधू** शास्त्रे माङ्गल्ये च । अयं निपूर्वो निषेधे वर्तते । ऊदित्वाद्वेट् । इडभावपक्षे लृटि रूपम् । अष्टधातवोऽ-स्मिन् श्लोके उदाहृताः ॥ ७ ॥

**पलानीति ।** अखाद्यानि पलानि खदन् बदद्वपुः अवाच्यानि गदन् सतां मनो रदन् मदात् नदन् खलोऽधुना अर्दितसंक्षयः क्षणं गर्दभस्वरैः नर्दतु इत्यन्वयः । अखाद्यानि अभक्ष्याणि पलानि मांसानि खदन् भक्षयन् बदन् स्थैर्ययुक्तं वपुः शरीरं यस्य स बदद्वपुः दृढावयव इत्यर्थः । अवाच्यानि वक्तुमयोग्यान्यक्षराणि गदन् व्यक्तमेवाभिदधत् । अत एव सतां सज्जनानां मनो रदन् विलेखयन् । विलेखनं भेदनं, विदारयन्नित्यर्थः । मदाद् अहङ्काराद्धेतोः नदन् अव्यक्तं शब्दमुद्घोषयन् खलो दुर्जनः कंसः अधुना अस्मिन् काले अर्दितः आसन्नः प्राप्तः संक्षयो विनाशो यस्य तथा सन् । क्षणम् अल्पकालं गर्दभाणामिव स्वराः शब्दाः तथाविधैर्विकृतस्वरैः नर्दतु जल्पतु । अल्पकालमेवं बहु प्रलपतु महामूढः । का क्षतिरस्माकमिति भावः । **खाद्ट** भक्षणे । **खद** स्थैर्ये । हिंसायां भक्षणे च । **बद** स्थैर्ये । **गद** व्यक्तायां वाचि । **रद** विलेखने । **णद** अव्यक्ते शब्दे । **अर्द** गतौ याचने च । **नर्द गर्द** शब्दे । नव धातवः ॥ ८ ॥

**अतर्दका इति ।** सन्तस्तु अद्य तुष्यन्तु । सन्तः सज्जना अद्य इदानीं तुष्यन्तु सन्तुष्टा भवन्तु । साधुजनानां प्रसाद एव प्रार्थ्यते । किमसतां कंसप्रभृतीनां दुश्चेष्टितचिन्तयेति तात्पर्यार्थः । पञ्चभिर्विशेषणै-

स्सतो विशिनष्टि। अतर्दका अहिंसकाः। **तर्द** हिंसायाम् इत्यस्माण्ण्वुल्। विकर्दमाशयाः विगतपङ्क आशयो हृदयः येषां निर्दोषमानसा इत्यर्थः। **कर्द** कुत्सिते शब्दे इत्यस्मादौणादिकोऽम[च्] प्रत्ययः। संज्ञाशब्दत्वात् कुशलादिवदयोगार्थोऽयम्। प्रखर्दवृत्तैः प्रकर्षेण खर्दं हिंसा वृत्तं शीलं येषां तैः दुर्जनैरित्यर्थः। **खर्द** दन्दशूके इति धातुर्दन्दशूकक्रियायां हिंसायां वर्तते। तादृशैः पुरुषैः असमन्तितम् असंबद्धम् अन्तिकं समीपं येषाम्। **अति अदि** बन्धने। अत्र संपूर्वोऽतिः क्तान्तः। दुर्जनसम्पर्करहिता इत्यर्थः। श्रुतान्दुकैः श्रुतैः शास्त्रैरेव अन्दुकैः पादनिगलैः। 'अन्दुको निगलोऽस्त्रियाम्' इत्युक्तत्वात्[1]। अन्दिरुकप्रत्ययान्तः संज्ञायाम्। तैः चित्तमेव गजेन्द्रं रोद्धुं शीलं येषाम्। चित्तस्य गजेन्द्रत्वेन रूपणं निमित्तं श्रुतस्यान्दुकत्वेन रूपणमस्येति परम्परितम्। **इदि** परमैश्वर्य इत्यस्माद्रप्रत्यये इन्द्रशब्दो निष्पन्नः। एतेन तेषां जितेन्द्रियत्वमुक्तम्। गुणबिन्दुलोलुपा गुणस्य बिन्दौ लेशावयवे लोलुपाः सश्रद्धाः। अल्पमपि गुणमेव गृह्णन्ति न तु दोषमित्यर्थः। **बिदि** अवयवे। लेशवाचीत्यर्थः। एवंविधा महान्तः सन्तुष्यन्त्विति सम्बन्धः। सप्त धातव उदाहृताः॥ ९॥

**मनोज्ञेति**। वयं तं नन्दात्मजमीक्षितास्महे इत्यन्वयः। तं तथा मनोज्ञस्वरूपप्रभावं नन्दात्मजं श्रीकृष्णम् ईक्षितास्महे श्वो द्रष्टास्मः। अनद्यतनभविष्यदर्थो लुट्। पञ्चभिर्विशेषणैस्तं विशिनष्टि। मनोज्ञगण्ड मनोहरकपोलम्। **गडि** वदनैकदेशे इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण' [३.३.११८] इति घप्रत्यये गण्डशब्दो निष्पन्नः। अनिन्दितानन‌ं अनिन्दितं निन्दितेन कुत्सितेन रहितं निर्दोषमित्यर्थः। **णिदि** कुत्सायाम्

---

1 Vide *Amarakośa* II. 41—अन्दुको निगडोऽस्त्री स्यात्.

इत्यस्मान्नपुंसके भावे क्तः । तादृशमाननं यस्य । शारदचन्द्रशीतलं शारदः शरदि भवः चन्द्र इव शीतलं शीतशीलम् । नन्दात्मजमिति । नन्दति समृद्ध्नोतीति नन्दः । संज्ञायां घः । **टुणदि** समृद्धौ । चन्द्र इति । **चदि** आह्लादने रप्रत्ययान्तः । अत्र योगार्थोऽप्यस्ति । तदाहुः 'आह्लादनाच्चन्द्रः'[1] इति । पराक्रमत्रन्दनक्रन्दितासुरम् । पराक्रमः पराभिभवशक्तिः । स एव चेष्टा व्यापारः त्रन्दनम् । **त्रदि** चेष्टायामिति धातुः ल्युडन्तः । तेन क्रन्दिताः रोदिताः असुराः अघबकादयो येन । संक्रन्दनक्लन्दितं संक्रन्दनेन इन्द्रेण क्लन्दितम् आहूतं गोवर्धनोद्धरणे समरायाहूतमित्यर्थः । **कदि क्रदि क्लदि** आह्वाने रोदने च । तत्र क्रन्दित इति कर्मणि क्तः । संक्रन्दन इति नन्द्यादित्वात् ल्युप्रत्ययान्तः । क्लन्दितमिति कर्मणि क्त एव । अत्राष्टधातवः ॥ १० ॥

**अक्लिन्दनीयानिति ।** यः अक्लिन्दनीयान् शुधितात्मनो जनान् करुणावलोकनैः प्रशीकते तमुत्तमश्लोकमवेक्ष्य अहं तत्स्तुतिद्रेकैः दिक्तटानुपप्रेकयितास्मि इत्यन्वयः । यो नन्दात्मजः अक्लिन्दनीयान् क्लिन्दितुं परिदेवितुं अयोग्यान् विलापानर्हानित्यर्थः । शुधितात्मनः शुद्धमानसान् । **क्लिदि** परिदेवने । अस्मादनीयर् प्रत्ययः । **शुन्ध** शुद्धौ । अस्मात् क्तप्रत्यये इटि च 'अनिदिताम्' [ ६.४.२४ ] इति नलोपे रूपं शुधितमिति । इतः परमात्मनेपदिनः कवर्गीयान्ता धातवो द्विचत्वारिंशत् । तादृशान् जनान् स्वभक्तान् करुणया सह यान्यवलोकनानि कटाक्षाः तैः करणभूतैः प्रशीकते सिञ्चति शीतलयतीत्यर्थः । **शीकृ** सेचने । **लोकृ** दर्शने । तं तादृशम् उत्तमश्लोकः भगवन्तं उत्तमः उत्कृष्टः श्लोको यशो यस्य । अथवा उद्गतम् उदस्तं तमः तमोगुणो यस्मात् तादृशः श्लोको यस्य ।

---

1 Cf. यथा प्रह्लादनाच्चन्द्रः *Raghuvaṁśa* IV. 12

श्लोकृ संघाते । 'पद्ये यशसि च श्लोकः' इत्यमरः । अवेक्ष्य अवलोक्य तत्स्तुतिद्रेकैः तस्य भगवतः स्तुतिरूपैः द्रेकैः शब्दैः स्तुतिवाक्यैरित्यर्थः । दिक्तटान् दिशोऽवकाशान् उपध्रेकयितास्मि शब्दमुखरितान् कर्तास्मि स्तुतिवाक्यघोषैर्दिशस्सशब्दाः करिष्यामि श्वः इत्यर्थः । द्रेकृ ध्रेकृ शब्दोत्साहयोः । उत्साहो वृद्धिः । दिक्तटान् वर्धयितास्मीति वार्थः । अत्र सप्त धातवः ॥ ११ ॥

स एवमिति । अरेकधीः सः एवमादीन् विमृशन् हरौ स्रेकितमानसः असेकत । अरेका अशङ्का धीर्यस्य तथाभूतः सोऽक्रूरः एवमादीन् उक्तप्रकारान् विमृशन् विचारयन् हरौ कृष्णे स्रेकितं गतं मानसं यस्य तथा सन् असेकत गतवान् । रेकृ शंकायाम् । सेकृ स्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः । जना दुःस्रङ्कं हरेः पदं आश्रङ्क्य कुत्र रुजं प्रश्लङ्कते क शंकते । जनः सर्वलोको दुःस्रङ्कं दुष्प्रापं हरेः प[1]....॥१२॥

[ फलाङ्कितानिति ] ....................................................

........च कोकिलाश्च येषु तथाभूतान् । वृकावृतान् वृकैः मृगविशेषैः आवृतान् व्याप्तान् । मुग्धचकोरकूजितान् मुग्धानि मनोहराणि चकोराणां कूजितानि शब्दा येषु तादृशान् । उड्डीनकङ्कान् उड्डीना उत्पतिता, रथस्वनाकर्णनत्रासादुपरिगता इत्यर्थः, कङ्काः पक्षिविशेषाः येभ्यस्तान् । अकि लक्षणे । वकि कौटिल्ये । मकि मण्डने । एभ्यः क्तप्रत्ययः । कक लौल्ये । अस्मात् काकशब्दः । कुक वृक आदाने । आद्यादिलप्रत्ययान्तः कोकिलः, द्वितीयाद् वृकः कप्रत्ययान्तः । चक तृप्तौ प्रतिघाते च । अस्मादोरन्प्रत्ययः चकोरः । ककि-वकी गत्यर्थौ । कङ्कः अवङ्कतेति । अत्र नव धातवः ॥ १३ ॥

---

1 Folio 16 which contains the rest of the matter in the commentary on this verse as well as a portion of the commentary on the next verse is missing.

**प्रश्वङ्कनेति** । प्रश्वङ्कनोत्वङ्कितत्द्रथस्वनात् भीतै रपि शिखावलैः नो अढौकि । प्रश्वङ्कनमप्रकृष्टगमनं वेगगमनमित्यर्थः । **श्वङ्क**धातोर्भावे ल्युट् । तस्माद् उत्वङ्किताद् उद्गतात् । **त्वङ्क**धातोः क्तः । तद्रथस्य तस्याक्रूरस्य रथस्य स्वनात् शब्दात् सकाशात् वेगगमनोद्भूतरथशब्दाद् भीतैः त्रस्तैरपि शिखावलैः मयूरैः नो अढौकि न गतं, ततो न पलायितम् । **ढौकृ**-धातोर्भावे चिण् । गमनाभावे हेतुमाह । विष्वक्कमाणाम्बुदनादशङ्कया । विष्वक्कमाणे विशेषेण व्याप्नुवति अम्बुदनादे मेघगर्जिते या शङ्का तया हेतुना मेघगर्जितमिति शङ्कित्वेत्यर्थः । **ष्वक्कि**धातोः शानच् । तत् किं पुनः कृतमित्यत्राह । विष्वक् परित्रौकितलोचनैः स्थितं विष्वक् समन्तात् परित्रौकितानि सञ्चारितानि लोचनानि यैस्तथा सद्भिः स्थितमेव परितो दत्तदृष्टिभिरुत्सुकैस्तत्रैव स्थितमित्यर्थः । **त्रौकृ**धातोः क्तः । अत्र पञ्च धातव उदाहृताः । ॥ १४ ॥

**अवस्किरेति** । तदा तद्गमनसमये तद्रथस्वनात् तस्य अक्रूरस्य रथस्य स्वनात् शब्दात् हेतोः । इदञ्च वाक्यषट्केऽपि योज्यम् । रोहिद्भिरवस्कि विष्किरैरमस्कि गोधाभिरटेकि पन्नगैरटीकि कोलैररंघि सिंहैः पुनर्लघु विबुध्याङ्घितम् । रोहिद्भिः मृगैः अवस्कि वस्कितं गतम् । भावे चिण् । विष्किरैः पक्षिभिः अमस्कि मस्कितम् । सर्वत्र गतमित्यर्थः । गोधाभिः जन्तुविशेषैः अटेकि टेकितम् । टिकृधातोश्चिणि लघूपधगुणः । पन्नगैः सर्पैः अटीकि टीकितम् । टीकृधातोर्दीर्घोपधत्वादगुणः । कोलैः वराहैः अरङ्घि रङ्घितम् । पुनरिति पुनश्शब्देन विबोधपूर्वकत्वं गमनस्य विलम्बहेतुत्वेन सम्भावितं तदपि लघुशब्देन समाहितम्, लघु क्षिप्रं [1]विबुध्य निद्रामपनीय

---

1 The reading according to *Kṛṣṇārpaṇa* is प्रबुध्य.

अङ्कितं पलायितम्। लघ्विति लंघिधातोः 'लङ्घिबंह्योर्नलोपश्च' [उण्. १.२९] इत्यौणादिक उप्रत्ययः। स्वरादिपाठादव्ययत्वम्। **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि** गत्यर्थाः। एष्वाद्यौ द्वौ पूर्वश्लोके उदाहृतौ। ततः परस्मिन् श्लोके श्वक्यादयः पञ्चोदाहृताः। अस्मिन् श्लोके तु वस्काद्यदयष्षट् अघिधातुश्चेति सप्त उदाहृताः। अङ्कितिरत्र गमनारम्भार्थो विवक्षितः। सिंहैरपि क्षिप्रं गमनमारब्धमित्यर्थः ॥ १५ ॥

**प्रवङ्घमानस्येति**। सत्वरं प्रवङ्घमानस्य विमङ्घनस्य अधिकराघितात्मनः निकाममुल्लाघतनोः श्लाघ्यगुणस्य च तस्य प्रद्राघिता वर्तनी समत्यगाद् इति सम्बन्धः। प्रवङ्घमानस्य गच्छतः सत्वरं वेगेन सञ्चरत इत्यर्थः। विमङ्घनस्य विगतव्याजस्य अधिकम् अत्यर्थं राघितः सामर्थ्ययुक्तः आत्मा यस्य निकामं उल्लाघतनोः नीरोगशरीरस्य 'उल्लाघो निर्गतो गदाद्' इत्यमरः। श्लाघ्यगुणस्य श्लाघ्याः सद्भिः प्रशंसनीया गुणाः शमदमक्षमादयो यस्य तस्य तथाभूतस्य अक्रूरस्य प्रद्राघिता अत्यायामवती, दीर्घेत्यर्थः, वर्तनी मार्गः समत्यगात् सम्यगतीता अवसितेत्यर्थः। **अघि वघि मघि** गत्याक्षेपे गतौ गमनारंभे च। मघि कैतवे च। अयं कैतवार्थोऽसन्नुदाहृतः। **राघृ लाघृ द्राघृ** सामर्थ्ये। अत्र लाघृधातोरुल्लाघशब्दो निष्पन्नः। द्राघृ आयामे च। अयमत्रोदाहृतः। **श्लाघृ** कत्थने। कत्थनं प्रशंसनम्। अत्र षड् धातवः ॥ १६ ॥

इतः परं परस्मैपदिन उदाहरिष्यन्ते।

**अफक्कनेति**। ऐक्षि अनोखितम् इति छेदः। अमुना तां कलिन्दजां सन्तीर्य वृन्दावनमैक्षि इत्यन्वयः। अमुनाऽक्रूरेण तां तथा प्रसिद्धां कलिन्दजां कालिन्दीं सन्तीर्य सम्यक् तीर्त्वा वृन्दावनम् ऐक्षि

ईक्षितं दृष्टम् । कर्मणि चिण् । कीदृशेन । अफक्कता अमन्दं गच्छता असद्व्यापाररहितेन च । **फक्क** नीचैर्गतौ । नीचैर्गतिः मन्दगमनमसद्व्यापारश्च । हरिदर्शनत्वरया शीघ्रं गच्छता अतक्यगुणेन अतक्याः अपरिहास्याः गुणाः यस्य सर्वजनबहुमानयोग्यगुणशालिनेत्यर्थः । **तक** हसने । खलश्व-बुक्कापरुषे पुरे तङ्कता । खलाः कंसप्रभृतयो दुष्टजना एव श्वानः तेषां बुक्काभिः भषणतुल्यैर्भाषणैः परुषे दुस्सहे स्थातुमसुखावहे पुरे । खलानां श्वत्वेन रूपणात्तेषां वचनमपि श्वरवभूतबुक्काख्यया रूपितमित्यवगन्तव्यम् । तादृशे मधुरापुरे तङ्कता कृच्छ्रेण जीवता, इतः पूर्वं तत्र दुःखेन दिवसान् गमयतेत्यर्थः । वर्तमानसामीप्याद्वर्तमाननिर्देशः । **तकि** कृच्छ्रजीवने । कीदृशीं कलिन्दजाम् । फेनैः साधनैः कखन्तीमिव हसन्तीमिव । फेनानां धावल्यात् हासत्वेनोत्प्रेक्ष्यये । **कख** हसने । बृन्दावनं कीदृशम् । अनोखितम् ओखितं शुष्कं न भवतीत्यनोखितम् । हरिप्रभावात् ग्रीष्मेऽपि न शोषमधिगच्छतीत्यर्थः । **ओखृ राखृ लाखृ द्राखृ ध्राखृ** शोषणाल-मर्थयोरिति धातवः । तेष्वाद्यधातुरप्यत्रोदाहृतः । षट् धातव उदाहृताः ॥ १७ ॥

**अराखितेति ।** अराखितत्वग्भिरलाखितच्छदैः प्रद्राखिताध्राखिफलैश्च शाखिभिः प्रश्लाखितम् । अराखिताः अशुष्काः त्वचः चर्माणि येषाम् । अलाखिताः अशुष्काः छदाः येषाम् । प्रद्राखितानि पर्याप्तानि अध्राखीनि अशुष्काणि फलानि येषां तथाभूतैः शाखिभिः वृक्षैः प्रश्लाखितं व्याप्तम् । **शाखृ श्लाखृ** व्याप्तौ । शाखृधातोः शाखिशब्दः । इतः परं तु **उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि** गत्यर्था इति अष्टाविंशतिधातवो गत्यर्थाः । ते क्रमेणो-

दाह्रियन्ते। प्रोखितसत्त्वं प्रोखिताः प्रकर्षेण सञ्चरिताः सत्त्वा वनजन्तवो यस्मिन्। गत्यर्थत्वात्कर्तरि क्तः। खगैः पक्षिभिः उङ्खितं सञ्चरितम्। कर्मणि क्तः। वखता सञ्चरता मारुतेन मन्दवातेन सह वङ्खि व्यापनशीलं सौरभं सुगन्धो यस्मिन् तादृशं वृन्दावनमैक्षीति सर्वत्र संबन्धः। उख उखि वख वखीति चत्वारो राखादयः पञ्च चेति नव धातवोऽस्मिन् श्लोके उदाहृताः ॥ १८॥

मखदिति। मखन्तः सञ्चरन्तः कपो[ता] यस्मिन्। मदेन हर्षेण मङ्खिनः सञ्चारशीलाः बर्हिणाः मयूराः यस्मि[न्। न]खन्तः तत इतो गच्छन्तः पिकाः कोकिलाः यस्मिन्। नङ्खितो व्याप्तः खञ्जनानां खञ्जरी[टप]-क्षिणाम् उत्करः समूहो यम्मिन्। रखन्तः चरन्तः शशाः यम्मिन्। राङ्खताः चरन्तो रङ्कव[ः कृष्ण]सारमृगाः यम्मिन्। रिङ्खिताः अटन्तो द्विपा गजा यस्मिन्। लखन्तः द्विपानां....निर्वैरं सञ्चरन्तः केसरिणः सिंहाः याम्मन्। लङ्खन्तः तत्र तत्रो[द्र]च्छन्तः आखाः सत्त्वानां शब्दाः यस्मिन्। अत्र रिङ्खितद्विपमिति [रिखी]ति कश्चिद्धातुरपि मतान्तरेणोदाहृत इति नव धातवः ॥ १९॥

एखदिति। एखत् सञ्चरन् चकोराणामुत्करः समूहो यस्मिन्। शुकैः इङ्खितं कृतसञ्चारम्। प्रेङ्खन्तीनां चलन्तीनां लतानां वल्गनस्य वलनस्य रङ्गमण्डपं रङ्गस्थलम्। अत्र लतानां नर्त्तकीत्वारोपः वल्गनस्य नृत्तारोपश्च आर्थः, वनस्य रङ्गमण्डपारोपः शाब्दः इत्येकदेशविवर्तिरूपकम्। विलङ्गन्तो विविधं सञ्चरन्तः एणाः मृगाः यस्मिन्। शबराङ्गनाजनैः पुलिन्दसुन्दरी-वृन्दैः प्रवङ्गितं परिगतम्। अगिधातोः स्त्रीप्रत्यये युचि अङ्गना। मङ्गलाभिः कल्याणदायिनीभिः धेनुभिः गोभिः तङ्गितं व्याप्तम्। रगिधातोः रङ्गः। मङ्गिधातोः 'मङ्गेरलच्' [उण्. ५.८८] इति मङ्गलशब्दः। अत्र नव धातवः ॥ २०॥

**त्वङ्गदिति**। त्वङ्गतां सञ्चरतां खगानां पक्षिणां श्रङ्गितानां चलितानां पक्षाणां सम्बन्धिनो ये मारुता वायवः तैः श्लङ्गन्तीभिः उत्पतन्तीभिः रजसां राजिभिः समूहैः इङ्गितं व्याप्तम् अम्बरम् आकाशो यत्र। पतत्रिपत्र-मारुताहतमहीर[जोधूसरिता]म्बरमित्यर्थः। रिङ्गतां भ्रमतां प्रियाभिरालिंगिता-नाञ्च भृङ्गाणां सङ्गमेन सम्पर्केण त्वंगन्ति कम्पमानानि प्रसूनानि वृक्षलता-कुसुमानि यत्र। रवितापेन सूर्यरश्मिप्रतापेन युङ्गितं वर्जितम्। तरुलता-पल्लवविहिताम्बरत्वादनातपतापमित्यर्थः। तादृशं वृन्दावनमिति सम्बन्धः। **त्वगि** कम्पने। **युगि जुगि बुगि** वर्जने। एषु युगिरप्यत्रोदाहृत इत्यष्टौ धातवः॥ २१॥

**विजुङ्ग्येति**। पशुपाः यत् प्रसेचिरे इत्यन्वयः। पशुपाः गोपाः यद् वृन्दावनं प्रसेचिरे प्रकर्षेण सेवन्ते स्म। सेचनमत्र सेवनं विवक्षितम्। कीदृशाः पशुपाः। बुङ्ग्यं विजुङ्ग्य गुणसङ्घदङ्घकाः। बुङ्ग्यं वर्जनीयं दोषमित्यर्थः। विजुङ्ग्य विशेषेण वर्जयित्वा गुणसङ्घस्य गुणसमूहस्य दङ्घकाः पालयितारः दोषमपनीय गुणं रक्षन्त इत्यर्थः। **दघि** पालने। अलङ्घितानन्दरसात्तघर्घनाः अलङ्घितेन अशोषितेन अलुप्तेनेत्यर्थः। **लघि** शोषणे। आनन्दरसेन आनन्दानुभवसुखेन हेतुना आत्तं स्वीकृतं घर्घनं हासो यैः। हासशब्देनात्र मनोविकासो लक्ष्यते। **घर्घ** हसने। सुमङ्घिताः सुतरां मङ्घिताः मण्डिताः सर्वाभरणभूषिता इत्यर्थः। **मघि** मण्डने। शिङ्घितपुष्पसौरभाः शिङ्घितम् आघ्रातं पुष्पाणां जातिचूतचम्पक-मल्लिकादिप्रसूनानां सौरभं सुगन्धो यैः। **शिघि** आघ्राणने। इतः परमात्मनेपदिनश्चवर्गीयान्ता धातवः। वर्चमानाः दीप्यमानाः शोभितशरीरा इत्यर्थः। **वर्च** दीप्तौ। **षच** सेवने सेचने च। नव धातव उदाहृताः॥ २२॥

**सुलोचना इति।** यत्र व्रजाङ्गनाः निर्मचनेन नर्मणा अशाश्चचुः इत्यन्वयः। यत्र यस्मिन् वृन्दावने व्रजाङ्गनाः गोपस्त्रियो निर्मचनेन मचनं विना। मचनं शाठ्यं व्याजमिति यावत्। नर्मणा विलासेन सह अशाश्चचुः पुनः पुनर्भृशं श्वचनं सुखसञ्चारं चक्रुः। श्वचधातोर्यङ्लुकि लङि प्रथमपुरुषबहुवचने रूपम्। अशाश्चचुरिति। कीदृश्यः। सुलोचनाः शोभननयनाः शचीसमप्रभाः शच्या इन्द्राण्या समा प्रभा सौन्दर्यं यासाम्। **लोचृ** दर्शने। अस्माल्लोचनशब्दः। **शच** व्यक्तायां वाचि। अस्माच्छचिशब्दः। कचे श्वञ्चितसौरभाः केशपाशे व्याप्तसौरभ्याः सकञ्चुकाः कञ्चुकेन स्तनावरणवाससा सहिताः काञ्चनकाञ्चिभूषिताः काञ्चनमय्या काञ्च्या मेखलया भूषिताः। **श्वच श्वचि** गतौ। **कच** बन्धने। **कचि काचि** दीप्तिबन्धनयोः। कञ्चिधातोरुकप्रत्ययान्तः कञ्चुकशब्दः। काञ्च्यते बध्यत इति काञ्चिशब्दः। **मच मुचि** कल्कने। कल्कनं शाठ्यम्। अत्राष्ट धातवः॥ २३॥

**अमुञ्चनैरिति।** एकत्र अमुञ्चनैः शुभार्जकैः जनैः एजितम् इत्यन्वयः। यद् वृन्दावनं एकत्र क्वचित् प्रदेशे। अमुञ्चनैर्मुञ्चनेन डम्भेन शाठ्येन वा रहितैः शुभार्जकैः शुभस्य पुण्यकर्मणः आर्जकैः आर्जनं चयनं कुर्वद्भिः सुकृतं सम्पादयद्भिरित्यर्थः। तथाभूतैर्जनैर्महर्षिभिरेजितं दीप्तं शोभितमित्यर्थः। कीदृशैः। मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितैः मञ्चिते धारणावर्तित समुन्नते पूजिते वा चित्ते मनसि पञ्चितं व्यक्तीभूतं प्रकाशितमित्यर्थः। त्रयीमतं वेदसिद्धान्तः तेन प्रस्तुचितैः प्रसन्नैः समृञ्जितं कन्दमभृक्तसत्फलानि च अदद्भिः समृञ्जितं सम्यगृञ्जितं पक्वं पाकेन शोधितमित्यर्थः। कन्दं मूलं अभृक्तानि अपक्वानि सत्फलानि च अदद्भिः भक्षयद्भिः। अभृक्तेति ईदित्त्वान्निष्ठायामिडभावे रूपम्। एवंभूतैस्तपस्विभिः

क्वचित्प्रदेशे शोभितमिति सम्बन्धः। **मचि** धारणोच्छ्रायपूजनेषु। **पचि** व्यक्तीकरणे। **ष्टुच** प्रसादे। **ऋज** गतिस्थानार्जनोपार्जनेषु। **ऋजि भृजी** भर्जने। **एजृ भ्रेजृ भ्राजृ** दीप्तौ। अत्राष्टधातव उदाहृताः ॥२४॥

**अभ्रेजीति।** यदशेषजन्तुभिरभ्रेजि। यद् वृन्दावनम् अशेषैः समस्तैः जन्तुभिः नरतिर्यगादिप्राणिभिः अभ्रेजि। दीप्यते स्म। कीदृशैः। विभ्राग्भिः विशेषेण दीप्यमानैः अस्य भ्राजेः 'चो कुः' [८.२.३०] इति कुत्वमेव। व्रश्चादिषु धा[तु]षु राजिसहचरितस्य टुभ्राजृधातोरेव ग्रहणादस्य न षत्वम्। अनीजितैः अकुत्सितैः। **ईज** गतिकुत्सनयोः। इतः परं परस्मैपदिनः। कदापि कस्मिन्नपि समये अशोचद्भिः शोकमकुर्वद्भिः सदा सुखिभिरित्यर्थः। **शुच** शोके। यत्र क्रौञ्चेऽपि हृद्यार्ततां लुञ्चन्नुन्मदः उत्कुचिताङ्गं सम्यक् चुकोच। क्रौञ्चो जलचरपक्षिविशेषः, सोऽपि हृदि मनसि आर्ततां दुःखं लुञ्चन् अपनयन् उन्मदः उद्भूतहर्षः उत्कुचितानि वक्रीकृतान्यङ्गानि यथा भवन्ति तथा सम्यक् साधुतरं चुकोच उच्चैः शब्दं कृतवान्। **कुच** शब्दे तारे। **कुञ्च क्रुञ्च** कौटिल्याल्पीभावयोः। अत्र क्रुञ्चधातोः क्रौञ्चशब्दः। **लुञ्च** अपनयने। **अञ्चु** गतिपूजनयोः। अस्मात सम्यक्छब्दो निष्पन्नः। समञ्चतीति सम्यक्। 'समः समि' [६.३.९४]। अत्र नव धातवः ॥ २५ ॥

**आवक्रेति।** यत्र वृन्दावने शशिना चन्द्रेण सन्ततम् अनवरतं, शुक्लपक्षनिशासु सर्वास्वित्यर्थः, निमुम्रुचे नितरां तिरोहितम्। भावे लिट्। अर्केण सूर्येण च सन्ततं सर्वेषु दिनेषु निमुम्लुचे तिरोहितम्। कीदृशे वृन्दावने। लताभिः वल्लिभिः द्रुमैः वृक्षैश्च हेतुभिः अम्लुक्ता अप्रविष्टा रश्मयः चन्द्रकिरणास्सूर्यकिरणाश्च यासन्। कीदृशैः। आवक्रेभ्य ईषत्कुटिलेभ्यः चञ्चूपुटेभ्यः तुण्डनान्तर्भागेभ्यः तञ्चदारवैः उद्गतशब्दैः

त्वञ्चद्भिः सञ्चरद्भिः खगैः पक्षिभिः म्रुक्ताः व्याप्ताः शिखाः शाखाः येषां तादृशैः। एवंविधवृक्षलताव्याप्तत्वाच्चन्द्रसूर्यरश्मयः कदाचिदप्यत्र न प्रविशन्तीत्यर्थः। **वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु** गत्यर्थाः। वञ्चुधातोः क्रन् प्रत्यये[1] 'अनिदिताम्' [६.४.२४] इति नलोपः। म्रुक्तम्लुक्तौ च क्तप्रत्यये तथा। अष्टधातवोऽत्र उदाहृताः ॥ १६ ॥

**समग्रुचदिति।** सः हरिः यत्र गुञ्जन्मणिनूपुरः केलिषु सज्जमानधीः समग्लुचद् इत्यन्वयः। स तथा गोपरूपी हरिः महाविष्णुः तत्र वनप्रदेशे गुञ्जन्मणिनूपुरः शब्दायमानरत्नपादकटकः केलिषु क्रीडासु सज्जमानधीः सक्तमनाः समग्लुचत् सञ्चरितवान्। **गुजि** अव्यक्ते शब्दे इत्यस्माच्छतृप्रत्ययः। **ग्लुञ्चु षस्ज** गतौ इत्यस्मात् संपूर्वादङि नलोपः। सज्जमानमिति। सज्जधातोरात्मनेपदमप्यस्तीत्याहुः, तेन शानजन्तः। केलिप्रकारमाह। क्षीरं समग्रुचत् मुष्टवान्। अथ घृतं अग्लुचत्। अथ तदनन्तरं घृतं नवनीतादिकं अग्लुचत् चोरितवान्। द्वावङन्तौ। वासांसि गोपीनां वस्त्राणि चुकोज मुष्टवान्। मानसं सर्वजनानां हृदयं चुखोज अपहृतवान्। **ग्रुचु ग्लुचु कुजु खुजु** स्तेयकरणे। सप्त धातवः ॥ २७ ॥

**सुरार्चित इति।** हरिद्रुमे यत्र स्थिते तन्नन्दनमाञ्छितह्रीच्छनमास्त इत्यन्वयः। हरावेव द्रुमे कल्पवृक्षे यत्र यस्मिन् व्रजसम्बन्धिनि वृन्दावने स्थिते सति तत् तथा प्रसिद्धं नन्दनम् इन्द्रोद्यानं आञ्छितं वर्धितं ह्रीच्छनं लज्जा यस्य तथा आस्त स्थितम्। कीदृशे। सुरार्चिते सुराणां

---

1 The sūtra स्फायितञ्चिवञ्चि etc, (Uṇādi II. 13) gives the pratyaya as रक्.

पूजिते म्लेच्छजनैः बौद्धादिपाषण्डजनैः दुरासदे दुष्प्रापे। श्रिया लक्ष्म्या [1]लञ्छितम्, अन्यत्र श्रिया शोभयेत्यर्थतस्सम्बद्ध्यते लञ्छितं लक्षितम् अङ्गं शरीरं यस्य। स्मितेन मन्दहासेनैव पुष्पेण लाञ्छिते अङ्किते वाञ्छितदे सर्वेषामभीष्टप्रदे एवंभूते हरिद्रुमे सतीति। सुरार्चितत्वादिस्वधर्माणां हरावपि सम्भवो लज्जाहेतुः। किञ्च अभ्यर्थितमात्रदायिनः पारिजातादयः, हरिस्त्वनभ्यर्थित एव इष्टार्थान् ददातीति भगवतो गुणाधिक्यादतिशयेन लज्जाशालित्वमिति भावः। अर्चं पूजायाम्। म्लेछ् अव्यक्ते शब्दे। [2]लछि लाछि लक्षणे। वाछि इच्छायाम्। आछि आयामे। ह्रीछ लज्जायाम्। सप्त धातवः॥ २८॥

अह्रूणँति। अह्रूर्णचित्ता अकुटिलमानसा ऋजुबुद्धय इत्यर्थः। परिमूर्च्छितव्रताः परिबृंहितनियमानुष्ठानाः। स्फूर्णामयाः विस्मृतकायक्लेशाः अगणितरोगादय इत्यर्थः। अप्रयुशः प्रयुट् प्रमादोऽनवधानता तद्रहिताः सावधानधिय इत्यर्थः। कृतोञ्छनाः उञ्छनं नाम व्रीहियवादिकं कणश आदाय प्राणधारणम्। तदुक्तम् 'ऊञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्[3]' इति। तत् कुर्वन्तो जनाः तपोधनाः यां व्युष्टिं भजन्ति यत् फलं अनुभवन्ति। 'व्युष्टिः फले समृद्धौ च' इत्यमरः। अतोऽपि भूयसीं तत्फलादपि बहुतरां व्युष्टिं यद्भ्रञ्जनमात्रतः यस्य वृन्दावनस्य भ्रञ्जनमात्रतः प्रवेशमात्रेण भ्रजन्ति प्राप्नुवन्ति। अनवरततपश्चर्यानिरता[4] यां परिणामगतिं लभन्ते ततोऽप्यधिकतरां सुखपरिणतिमितरे जना वृन्दावनाभिगमनादेव केवलं लभन्त इत्यर्थः। अह्रूर्णेति। हुर्छा कौटिल्ये इति धातोः क्तप्रत्यये 'राल्लोपः' [६.४.२१] इति छकारलोपे 'रदाभ्यां निष्ठातो नः' [८.२.४२] इति तकारस्य नकारादेशे 'हलि च'

1 *Kṛṣṇārpaṇa* has लञ्छित.
2 *Kṛṣṇārpaṇa* has लछ लाछि.
3 *Medinīkośa*.
4 *MS.* नितरा.

[८.२.७७] इत्युपधादीर्घे च सिध्यति। परिमूर्च्छित इति मुर्छा मोहसमुच्छ्राययोः इति धातोर्निष्पन्नात् मूर्च्छाशब्दात् 'तदस्य सञ्जातं तारकादिभ्य इतच्' [५.२.३६] इति तारकादित्वादितजन्तः। स्फूर्ण इति स्फुर्छा विस्मृतौ इत्यस्मात् हूर्णशब्दवत्। अप्रयुश इति युछ प्रमादे इत्यस्मात् प्रपूर्वात् क्विपि 'च्छ्वोः शूड्'—[६.४.१९] इति छकारस्य शकारः जसन्तः। प्रयुट् प्रयुड् प्रयुशौ प्रयुशः। उञ्छनमिति। उछि उञ्छे इत्यस्मात् भावे ल्युट्। व्युष्टिरिति। उछी विवासे इत्यस्मात् विपूर्वात् क्तिन्प्रत्यये '—छशां षः' [८.२.३६] इति छस्य षत्वम् तकारस्य ष्टुत्वञ्च। ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ। तत्र ध्रजधातोः ध्रजन्ति ध्रञ्जधातोः ध्रञ्जनमित्यष्ट धातवः॥ २९॥

प्रधृज्येति। सः मोदं प्रधृज्य तद्वनं दधृञ्ज इत्यन्वयः। सोऽक्रूरो मोदं सन्तोषं प्रधृज्य तद्वनं वृन्दावनं दधृञ्ज धृञ्जतवान् प्राप्तवान्। कीदृशं वनम्। ध्वजोद्गतिध्वञ्जितकूजदण्डजं रथस्य रथकेतनस्योद्गत्या उच्छ्रायेण ध्वञ्जिता विद्राविताः कूजन्तः शब्दायमानाश्च अण्डजाः पक्षिणो यस्मिन्। स्वर्गोपमं स्वर्गसदृशम्। स कीदृशः। सर्जितपुण्यसञ्चयः सर्जितः आर्जितः पुण्यसञ्चयः सुकृतसन्ततिः येन। हेतुगर्भमिदं विशेषणम्। पुण्यसञ्चय-समार्जनेनैव हेतुना तत्र प्रवेशस्सिद्ध इत्यर्थः। गभीरगर्जद्रथतर्जिताम्बुदः। गभीरं यथा भवति तथा गर्जता शब्दं कुर्वता रथेन तर्जितो भर्त्सितः अम्बुदो मेघो येन। मेघगर्जिततुल्यरथचक्रध्वनिरित्यर्थः। कूज अव्यक्ते शब्दे। अर्ज षज अर्जने। अत्र अर्जधातोः स्वर्गशब्दः। सुपूर्वादस्मात् संज्ञायां घप्रत्ययः। 'चजोः कु घिण्ण्यतोः' [७.३.५२] इति कुत्वम्। सु अर्गः स्वर्गः। सुकृतार्जनलभ्य इत्यर्थः। गज शब्दे। तर्ज भर्त्सने च। नव धातवः॥ ३०॥

अथास्य व्रजप्रवेशमाह—**अकर्जित इति**। व्रजमासदद् इत्यन्वयः। कर्जितेन व्यथनेन रहितः अकर्जितः पीडारहित इत्यर्थः। **कर्ज** व्यथने इति धातुः। हरेः कृष्णस्य खर्जने पूजने उत्कधीः उत्सुकमनाः। **खर्ज** पूजने। असावक्रूरः क्रमात् अखर्ज्जितैः गतिवैकल्यरहितैः हयैः अश्वैः साधनैः। **खजि** गतिवैकल्ये। व्रजं गोष्ठम् आसदत् प्राप्तवान्। कीदृशम्। अजत्पशुव्रातं अजति सञ्चरति पशुव्रातो गोसमूहो यस्मिन्। **अज** गति-क्षेपणयोः। अजेन विष्णुना तेजितं पालितम्। **तेज** पालने। लसत्खजाकं लसन्तः तत्र तत्र शोभनं विद्यमानाः खजाकाः मन्थदण्डाः यस्मिन्। **खज** मन्थे। अस्मादौणादिक आकप्रत्ययः। कीदृशैर्हयैः। एजितचामरैः एजितानि कम्पितानि चामराणि चमरबालव्यजनानि येषु तादृशैः। **एजृ** कम्पने। सप्त धातवः ॥ २१ ॥

**विस्फूर्जदिति**। यस्मिन् दानवाः जजनेषु विनेशुः इत्यन्वयः। यस्मिन् व्रजे दानवा अरिष्टव्योमकेशिप्रभृतयो दैत्या जजनेषु युद्धेषु श्रीकृष्णेन सह समरेषु विनेशुः विनाशं प्राप्ताः। कीदृशाः। विस्फूर्जदक्षीणघनाघनोपमक्षीजाः विस्फूर्जन्तो वज्रनिर्घोषं कुर्वन्तः इत्यर्थः। अक्षीणा स्थूलस्वरूपा घनाघनाः प्रलयमेघाः उपमा यथा भवति तथा क्षीजा अव्यक्तमट्टहासं शब्दमुद्घोषयन्तः। अलञ्जितांस्त्रिदशान् लजन्तः अलञ्जितान् अनिन्दितान् देवान् लजन्तो भर्त्सयन्तः। लाजादिहोतृष्वपि लाञ्जनप्रदाः लाजप्रभृतीनां हव्यद्रव्याणां होतृषु हवनकर्तृषु गृहमेधिमहाब्राह्मणेष्वित्यर्थः। लाञ्जनप्रदा लाञ्जनं भर्त्सनं तत्प्रददतीति तथा। ब्राह्मणनिन्दां कुर्वन्त इत्यर्थः। इदमेवैषां विनाशहेतुः यन्महाजनभर्त्सनं नाम। तदुक्तम्—'सज्जनं ये विनिन्दन्ति सद्यो नश्यन्ति ते खलाः' इति। **टु ओ स्फूर्जा** वज्रनिष्पेषे। **क्षि** क्षये। **क्षीज** अव्यक्ते शब्दे। **लज लजि** भर्त्सने। **लाज लाजि** भर्जने च।

चकारात् भर्त्सने च। भृज्यत इति लाजशब्दः। **जज जजि युद्धे।** जजनशब्दो युद्धवाची ल्युडन्तः। अत्राष्ट धातवः ॥ ३२ ॥

**जहर्षेति।** असौ व्रजं वजन् जहर्ष इत्यन्वयः। असावक्रूरो व्रजं गोष्ठवाटिकां वजन् प्राप्नुवन् जहर्ष हृष्टवान्। वजन्निति हेतौ शता। तत्र वजनादागमनाद्धेतोः सन्तुष्टवानित्यर्थः। कीदृशम्। जञ्झातुजितस्थलैः अतुञ्जैः गजगञ्जिभिः वृषैः वृतं जञ्झया अन्योन्ययुद्धेन हेतुना तुजितं विदारितं स्थलं भूतलं यैः। **तुज हिंसायाम्।** भूतलस्य हिंसा विदारणमेव। अतुञ्जैः अहिंसकैः। मिथः क्रीडायुद्धं कुर्वत एव न तु हिंसन्तीत्यर्थः। **तुजि पालने च।** चकाराद्धिंसायां च। सैवात्र विवक्षिता। गजगञ्जिभिः गजा दन्तिन इव गञ्जितुं शब्दं प्रवर्त्तयितुं शीलमेषामिति तथाभूतैर्वृषै-र्वृषभैर्वृतं सहितं व्याप्तमित्यर्थः। गर्जत्खरं गर्जन्तः विकृतं शब्दायमानाः खरा गर्दभा यस्मिन्। गृञ्जितधेनु गृञ्जिता शब्दायमाना धेनवः पशवो यस्मिन्। मोमुजद्वत्सोत्करं मोमुजत् पुनःपुनर्भृशं शब्दायमानो वत्सोत्करः तर्णकसमूहो यस्मिन्। मुञ्जदजं मुञ्जन्तः शब्दायमानाः अजा मेषा यस्मिन् तादृशं व्रजमिति सम्बन्धः। **गज गजि गृज गृजि मुज मुजि शब्दार्थाः।** मोमुजदिति मुजधातोर्यङ्लुगन्ताच्छतृप्रत्ययान्तः। **वज व्रज गतौ।** व्रजधातोः 'गोचरसंचर'—[३.३.११९] इति व्रजशब्दो निपातितः। अत्रैकादश धातव उदाहृताः ॥ ३३ ॥

इतः परं टवर्गीयान्ता आत्मनेपदिनः षट्त्रिंशद्धातवः।

**मार्गादिति।** मार्गात् सः हरिपादलाञ्छनं दृष्ट्वा उर्व्यां व्यवेष्टत इत्यन्वयः। मार्गमट्टत इति मार्गात्। अट्टते अतिक्रामति। **अट्ट अतिक्रमहिंसयोः** इति धातुः। अत्र अट्टधातुर्दोपधः टकारयोगेन ष्टुत्वं प्राप्तस्यापि क्विपि संयोगान्तलोपेन टकारे निवृत्ते निमित्तापाये नैमित्तिकस्या-प्यपाय इति दकारस्य ष्टुत्वमपि निवृत्तम्। मार्गात् मार्गाद् मार्गाद्भ्यां

मार्गाङ्घ्रिः इत्यादि रूपम् । सोऽक्रूरः हरिपादलाञ्छनं मार्गरजस्सु हरेः पादमुद्रां दृष्ट्वा उर्व्यां व्यवेष्टत भक्त्यतिशयात् भूमौ निपत्य लुठितवानित्यर्थः। **वेष्ट** वेष्टने। वेष्टनं लुठनम्। कीदृशः। महनीयचेष्टितः महनीयं पूजनीयं चेष्टितं व्यापारो यस्य। **चेष्ट** चेष्टायाम्। किञ्च। मरुद्धट्टितपोस्फुटद्द्रुमे वने तत्केलिसंगोष्टितलोष्टमानमत्। मरुता पवनेन घट्टिताः चलिता अत एव पोस्फुटतो भृशं विकसन्तः, विकस्वरपल्लपुष्पा इत्यर्थः, द्रुमा वृक्षा यस्मिन् तादृशे वने। तत्केलौ तस्य श्रीकृष्णस्य क्रीडायां संगोष्टितं सङ्घीकृतं तेन भगवतैव तत्र तत्र क्रीडागृहनिर्माणार्थं समूहीकृतं लोष्टं दग्धमृत्खण्डसमूहं आनमत् नमस्कृतवान् तद्दृष्ट्वा तत्र दीर्घनमस्कारं कृतवानित्यर्थः। **गोष्ट लोष्ट** सङ्घाते। **घट्ट** चलने। **स्फुट** विकसने। अस्माद्यङ्लुकि शतृप्रत्यये च पोस्फुटदिति रूपम्। सप्त धातव उदाहृताः ॥ ३४ ॥

**अनन्निति**। कुमार्गेषु अनन् कुत्सितेषु मार्गेषु अवैदिकाचारेष्वित्यर्थः। अनन् अगच्छन् अन् न भवतीत्यनन्। शुभाध्वनैव वन् शुभमार्गेण वैदिकमार्गेणैव वन् असहायः सञ्चरन् एकचर्याव्रतमङ्गीकुर्वन्नित्यर्थः। **अठि** गतौ **वठि** एकचर्यायाम् इत्याभ्यां धातुभ्यां क्विपि संयोगान्तलोपे अन् वन् इति नान्ते पदे। भृशोत्कण्ठितगोपिके हरौ प्रमन् भृशमत्यर्थम् उत्कण्ठिताः उत्सुकाः गोपिकाः यस्मिन् तादृशे हरौ श्रीकृष्णे प्रमन् प्रकर्षेण मण्ठितः उत्सुकः आध्यानपर इत्यर्थः। **मठि कठि** शोके इति धातू। शोकोऽत्रौत्सुक्येन स्मरणम्। कठिधातोः क्तप्रत्ययः मठिधातोः क्विपि अन्निव मन्। स तादृशोऽक्रूरः पुनरपि ततः परं अध्वानमतीत्य पापमुन्भिः बुधहेड्भिः उन्मदैः अनेठितां क्ष्मां अहिण्डत। पापं दुरितं मुण्ठन्ते पालयन्तीति पापमुण्ठः। **मुठि** पालने। अस्मात् क्विपि पापमुन् पापमुण्ठौ पापमुण्ठः

पापसुण्ठा पापमुंभ्यां पापमुंभिः। 'नश्चापदान्तस्य झलि' [८.३.२४] इति नकारस्यानुस्वारः। बुधान् विद्वज्जनान् हेठन्ते बाधन्ते पीडयन्तीति बुधहेठः तैर्बुधहेड्भिः सज्जनोपद्रवतत्परैरित्यर्थः। उन्मदैः दुर्गर्वशालिभिर्दुष्टैरित्यर्थः। तादृशदुर्जनैः अनेठिताम् अबाधितां क्ष्मां भूमिं हरिवासभूमिमित्यर्थः। अहिण्डत प्राप्तवान्। हेठ विबाधायाम्। एठ च। हिडि गत्यनादरयोः। गत्यर्थ एवात्र विवक्षितः। [1]अष्ट धातव उदाहृताः॥ ३५॥

प्रहुण्डितानिति। भोजनृपालपिण्डभुक् सः भण्डलः तत्र प्रहुण्डितान् जनानैक्षत इत्यन्वयः। भोजनृपालस्य कंसस्य पिण्डभुक् कबलभोजी भृत्य इत्यर्थः। स भण्डिलो दूतोऽक्रूरः तत्र हरिवासभूमौ प्रहुण्डितान् सङ्घीभूतान् समूहीभूय स्थितानित्यर्थः। ऐक्षत दृष्टवान्। कीदृशान्। चारुकुण्डलान् शोभनकर्णाभरणान् प्रवण्डितार्थान् प्रवण्डिताः प्रकर्षेण विभज्य विचारिता अर्थाः कार्यसिद्धयो यैः। अविमण्डिताशयान् अविमण्डितः अविभक्तः, अपृथग्भूत इत्यर्थः, आशयो हृदयो येषाम् ऐकमत्ययुक्तानिति यावत्। प्रमुण्डितान् प्रकृष्टमार्जनयुक्तान्। मार्जनं शुद्धिः। अतुण्डकान् अहिंसकान् हिंसादिदोषरहितानित्यर्थः। एवंभूतान् भगवत्परिचारकजनानपश्यदिति सम्बन्धः। हुडि सङ्घाते। कुडि दाहे। अस्मादलच्-प्रत्ययान्तः कुण्डलशब्दः। वडि विभाजने। मडि च। उभावपि विभजनार्थौ। भडि परिभाषणे। अस्मादिलजन्तो भण्डिलशब्दः दूतपर्यायः। पिडि सङ्घाते। अस्मात् पिण्डशब्दः। मुडि मार्जने। तुडि तोडने। तोडनं हिंसनम्। अष्ट धातवः॥ ३६॥

अहुण्डितेति। सः तान् गतहेडमानमद् इत्यन्वयः। सोऽक्रूरः तान् पूर्वोक्तान् जनान् गोपानित्यर्थः। गतहेडं हेडया विना। हेडा

---

1 *MS* नव. Actually we get only eight.

अनादरः । सादरमित्यर्थः । अनमत् हरिभक्ता इमे इति सबहुमानं नमस्कृतवान् । कीदृशम् । [1]अहुण्डितोच्चण्डगतीन् अहुण्डिता अस्वीकृता उच्चण्डगतिः कोपक्रूरस्वभावो यैः शान्तस्वभावानित्यर्थः । अशण्डनान् शण्डनं रुजा तद्रहितान् नीरोगानित्यर्थः । कुमार्गवैतण्डिकपण्डितावृतान् कुमार्गेषु कुत्सितजनाचारेषु वैतण्डकैः वितण्डया व्यवहरद्भिः । वितण्डा नाम स्वमतस्थापनं विना परमतखण्डनम्, परपक्षखण्डनविचक्षणा वैतण्डिका इत्याहुः । दुर्मार्गदूषकैरित्यर्थः । तादृशैः पण्डितैः विद्वद्भिः आवृतान् सहितान् अकण्डकान् मदरहितान् दधिखण्डनादिकस्वधर्मसक्तान् दधिखण्डनं दधिमथनं तदादिके स्वधर्मे निजकुलाचारे सक्तान् निरतान् । आदिशब्देन गोदोहननवनीतश्रपणादयो गृह्यन्ते । [2]हुडि वरणे । वरणं स्वीकारः । चडि कोपे । शडि रुजायाम् । तडि ताडने । अस्मात्तण्डाशब्दः । पडि गतौ । कडि मदे । खडि मन्थे । हेडृ होडृ अनादरे । अष्ट धातवः ॥ ३७ ॥

अहोडनीयानिति । आनन्दपयोधिबाडितः असौ प[शुपालयान]-पश्यदिति सम्बन्धः । आनन्द एव पयोधिः........[बा]डितो मग्नः । बाडृ आप्लाव्ये । आप्ला........[क]र्तरि क्तः । असावक्रूरः पशुपालयान् पशुपानां भवनानि अपश्यत् दृष्टवान् । तद्दर्शनमेवानन्दपयोधिमज्जनमिति भावः । कीदृशान् । अहोडनीयान् होडनमनादरः त..........[अनाद]र्तुमयोग्यान् आदर्तव्यानित्यर्थः । सुपाकवि[द्रालिफलालि]भिर्द्रुमैः स्निग्धान् । सुपाकेन सुष्ठुतरव........तुना विद्राडिनां विशरणशील........नामित्यर्थः । फला-नामालिभिस्समूहैः स्निग्धान् शीतलानित्यर्थः । अविध्राडितचारुशालिकान्

1 *Kṛṣṇārpaṇa* reads अभुण्डित for अहुण्डितः.

2 *Kṛṣṇārpaṇa* reads भुडि for हुडि.

अविभ्राडिता अविशीर्णा निबिडा इत्यर्थः । चारवः सुन्दराः शालयो व्रीहयो येषु तादृशानिति सम्बन्धः । **द्राडृ ध्राडृ** विशरणे । **शाडृ** श्लाघायाम् । अस्माच्छालिशब्दः । डलयोरविशेषात् । अत्र पञ्च धातवः । इतः परं परस्मैपदिनः ॥ ३८ ॥

अथाष्टभिः श्लोकैः पशुपालयान् विशिनष्टि—

**प्रशौटदिति ।** प्रशौटदुस्रागणयौटितान्तिकान् प्रशौटता गर्वायमाणेन उस्रागणेन गोसमूहेन यौटितं सम्बद्धं सन्निहितमित्यर्थः, अन्तिकं समीपं येषाम् । उस्रेति गवां संज्ञा । तदुक्तम् 'उस्रामैच्छद्' इति वृत्तिग्रन्थं व्याचक्षाणेन हरदत्तेन उस्रा गौरिति । 'उस्रा माहा च शृङ्गिणी' इत्यमरश्च । **शौटृ** गर्वे । **यौटृ** बन्धे । मेटद्वृषाम्रेडितघोषमेदुरान् मेटताम् उन्माद्यतां वृषाणां वृषभाणाम् आम्रेडितैः पुनःपुनरुद्भूतैः । 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः । घोषैः शब्दैः मेदुरान् प्रवृद्धान् मुखरितान् इत्यर्थः । अम्लेटकैः अकटु चाटु भाषितैः अटैः जनोत्करैः पटत् संरटितान् । अम्लेटकैरनुन्मत्तैः सावधानचित्तैरित्यर्थः । **मेटृ म्रेटृ म्लेटृ** उन्मादे । अत्र द्वितीयो डान्त इत्येके, तन्मते इदमुदाहरणम् आम्रेडितेति । अस्य टान्तमध्यपाठस्त्वर्थसाम्यात् । अकटूनि अपरुषाणि सरसानीत्यर्थः, चाटुभाषितानि परस्परश्लाघावचनानि येषाम् । अटैः सञ्चरद्भिः जनोत्करैः जनानां गोपालानां उत्करैः समूहैः पटत् संरटितान् व्याप्नुवच्छब्दान् बहुजनमिथस्सल्लापमुखरितानित्यर्थः । **कटे** वर्षावरणयोः । अस्मादुप्रत्ययान्तः कटुशब्दः । **चटे** इत्येके । अस्माच्चाटुशब्दः । **अट पट** गतौ । **रट** परिभाषणे । अत्र दश धातवः ॥ ३९ ॥

**लाटार्हेति ।** लाटार्हशाटीवटितैर्वटुव्रजैर्वृतान् लाटानां बालानाम् अर्हाभिः योग्याभिः शाटीभिः वस्त्रैः वटितैः वेष्टितैः वटूनां माणवकानां

व्रजैः समूहैः वृतान् सहितान्। स्वविहितवस्त्रपरिधानब्रह्मचारिसमूहसंकुलानित्यर्थः। प्रखेटकैः खलैः अकिटितांश्च। प्रकर्षेण खेटयन्ति त्रासयन्तीति प्रखेटकाः तैः खलैः दुर्जनैः अकिटितान् अत्रासितान्। दुर्वचनैः सर्वेषां भीतिमुत्पादयन्तोऽपि दुष्टजनाः तत्रत्यान् न भाययन्ति भगवद्भयादित्यर्थः। सुधियामशेटनीयैरसेटकैः कैश्चन जटाझाटधरैर्युतान्। सुधियां विदुषाम् अशेटनीयैः शेटितुमवमन्तुमयोग्यैः आदरणीयैरित्यर्थः। असेटकैः सेटका अनादरवन्तो न भवन्तीत्यसेटकाः विद्वज्जनेष्वादरशालिभिरित्यर्थः। कैश्चन नानादिगन्तागतैः जटाझाटधरैः जटासमूहधारिभिः तीर्थिकैरित्यर्थः। युतान् सहितान्। तादृशान् पशुपालयानिति सम्बन्धः। **लट** बाल्ये। अस्माल्लाटशब्दः। **शट** रुजाविशरणगत्यवसादनेषु। अस्माच्छाटीशब्दः। **वट** वेष्टने। **किट खिट** त्रासे। **शिट षिट** अनादरे। **जट झट** सङ्घाते। अत्र नव धातवः ॥ ४० ॥

**क्वचिदिति।** क्वचिद्भटाधिष्ठितवेदिकातटान् क्वचित्प्रदेशे भटैः योद्धृभिः पुरुषैः अधिष्ठितानि अध्यासितानि वेदिकातटानि प्राकारबाह्यालिन्दस्थलानि येषाम्। क्वचिच्च खट्वाविहरन्नटीजनान् अन्यत्र कुत्रचित् खट्वासु पर्यङ्केषु विहरन्तः क्रीडन्तो नटीजना नर्तकीसमूहा यत्र। क्वचिच्च पेटीशतेषु पेटकसञ्चयेषु पूर्णानि सम्भृतानि हाटकानि सुवर्णानि यत्र। क्वचिदन्यस्मिन् प्रदेशे सटानां कण्ठपृष्ठलोम्नां लोटने धूनने लोलास्तत्परा घोटका अश्वा यत्र। तथाभूतानिति सम्बन्धः। **भट** भृतौ। **तट** उच्छ्राये। **खट** कांक्षायाम्। अस्मात् खट्वाशब्दः। **णट** नृत्तौ। **पिट** शब्दसङ्घातयोः। **हट** दीप्तौ। अस्माद्धाटकशब्दः। **षट** अवयवे। **लुट** विलोडने। विलोडनं चलनम्। **लुल** च। अस्माल्लोलशब्दः। अत्र नव धातवः ॥ ४१ ॥

चेटैरिति। अवेटकैश्चेटैर्विटैश्चानुगतान्। अवेटकैः अनाक्रोशिभिः कमप्यनिन्दद्भिरित्यर्थः। चेटैः प्रेष्यैः भृत्यैरित्यर्थः। विटैः कामुकैः शृङ्गारिपुरुषैरित्यर्थः। अनुगतान् सहितान्। एटत्पशूत्केटिरजःकटन्मलान्। एटद्भ्यः सञ्चरद्भ्यः पशुभ्यः गोवृषमेषादिभ्यः सकाशाद् उत्केटिभिः उद्गमनशीलैः, उत्थितैरित्यर्थः, रजोभिः धूलिभिः साधनैः कटन्मलान् कटन्ति गच्छन्ति नश्यन्तीत्यर्थः, मलानि पापानि येभ्यः। प्रकण्टिताशोदयदंशुमण्डितैरकुण्डरत्नैर्मुटितार्कदीधितीन्। प्रकण्डिताशं व्याप्तदिगन्तं यथा भवति तथा उदयद्भिः उद्गच्छद्भिः अंशुभिः किरणैः मण्डितैः भूषितैः अकुण्डैः अवैकल्यैः निर्दोषैरित्यर्थः, रत्नैः इन्द्रनीलमाणिक्यादिमणिविशेषैः मुटिताः प्रमर्दिताः निष्प्रकाशीकृताः अर्कदीधितयः सूर्यरश्मयो येषु। तत्तादृशरत्नप्रकाशतिरोहितमिहिरप्रकाशानित्यर्थः। चिट परप्रेषणे। विट शब्दे। बिट आक्रोशे। इट किट कटी गतौ। अत्र कटि ई इति प्रश्लेषादीधातोश्शतरि अयदिति रूपम्। मडि भूषायाम्। कुडि वैकल्ये। मुट प्रमर्दने। अत्र दश धातवः ॥ ४२ ॥

अचुन्निति। अचुन्ननुन्मुण्डितपुडरीकभृत्सरःश्रियः। अचुण्डि अनल्पानि अनुन्मुण्डितानि अखण्डितानि च पुण्डरीकाणि सिताम्बुजानि बिभ्रद्भिः धारयद्भिः सरोभिः पद्माकरैः श्रियः शोभा येषाम्। चुडि अल्पीभावे। अस्मात् क्विपि पदान्ते संयोगान्तलोपे चुन्निति रूपम्। नपुंसके चुन् चुण्डी चुण्डि। चुण्डि अल्पानि न भवन्तीत्यचुण्डि। मुडि खण्डने। उत्पूर्वेण क्तान्तेनानेन नञ्समासः। पुडि च इत्येके। अस्मात् पुण्डरीकशब्दः। रुण्टकलुण्टनोज्झितान्। रुण्टकानां चोराणां यल्लुण्टनं चोरणं तेन उज्झितान् त्यक्तान्। चोराणां चौर्यप्रसङ्गस्तत्र नास्तीत्यर्थः। अस्फोटदग्र्यस्फटिकादिभाजनान् अस्फोटन्ति अविदलन्ति अग्र्याणि प्रधानानि

स्फटिकादी....कुण्डिकुम्भादिपात्राणि येषु। आदिशब्देन रजतसुवर्णमयादयो गृह्यन्ते। रुटि लुटि स्तेये। स्फुटिर् विशरणे। स्फुट च इत्येके। अस्मात् पृषोदरादित्वात् स्फटिकशब्दः। पाठोत्सुकैः अवठरैः लसन्मठान्। पाठो वेदशास्त्राद्यध्ययनं तत्रोत्सुकैः श्रद्धाशालिभिः अवठरैः सूक्ष्मबुद्धिभिः, शिष्यवर्गैरिति विशेष्यपदमाक्षिप्यते मठशब्दसामर्थ्यात्। 'मठश्छात्रादिनिलयः' इत्यमरः। पठ व्यक्तायां वाचि। वठ स्थौल्ये। अस्मादरच्प्रत्यये वठरः स्थौल्यवाची। अत्र स्थौल्याभावो बुद्धेर्लक्ष्यते पाठानुगुण्यात्। अस्थूलबुद्धयोऽत्रावठराः तैः लसन्तः शोभमाना मठाः शिष्यभवनानि येषु। तादृशानिति सम्बन्धः। मठ मदनिवासयोः। अत्र दश धातवः॥ ४२॥

वनाश्रयत्व इति। वनाश्रयत्वेऽपि सकाठपर्यठद्रठन्मृगालीहठकर्मवर्जितान्। वनमेवाधार आश्रयो येषां तेषां भावो वनाश्रयत्वम्। तस्मिन् सत्यपि सकाठं समदं पर्यठतां परितः सञ्चरतां रठतां शब्दं कुर्वतां मृगाणां सिंहादिसत्त्वानामालीनां समूहानां हठकर्मभिः बलात्कारैः वर्जितान् रहितान्, सिंहमातङ्गादिकर्तृकप्रसभाक्रमणमत्र न सम्भवतीत्यर्थः। मणिपीठसंश्रयैः धनाढ्यैः वृतान् मणिमयमहासनोपविष्टैः धनाढ्यैः धनिकैः पुरुषैः वृतान् संयुक्तान्। कीदृशैः। रोठन्नृशंसालुठितैः रोठद्भिः उपघातमुपद्रवं कुर्वद्भिः नृशंसैः बौद्धादिदुर्जनैः अलुठितैः अनुपद्रुतैः अनोठकैः अनुपघातिभिः परोपद्रवमकुर्वाणैरित्यर्थः। धनिका हि प्रायशः परद्रोहिण एव। ते तु न तथेति भावः। उक्तञ्च 'परोपघातं न वितन्वते ये न तानुपघ्नन्ति नराः परेऽपि' इति। कठ मदे। अठ गतौ। रठ परिभाषणे। हठ बलात्कारे। रुठ लुठ उपघाते। उठ इत्यप्येके। पिठ हिंसासंक्लेशनयोः।

अस्मात् पीठशब्दः औणादिः[1]। बाहुलकादुपधादीर्घः। अत्राष्टौ धातव उदाहृताः ॥ ४४ ॥

**शठत्वेति।** हरेरनुलुण्ठकैरतीव शोभितान्। हरेः श्रीकृष्णस्य अनुलुण्ठकैः अनुगन्तृभिः सर्वदा सहसञ्चरद्भिः वयस्यैः अतीव अधिकं शोभितान्। कीदृशैः। शठत्वमार्गे कैतवाचारे शुठितैः प्रतिहतगतिभिः, पराङ्मुखैरित्यर्थः। अकुण्ठितैः कुण्ठितेन मन्दत्वेन रहितैः उत्साहशालिभिरित्यर्थः। अलुण्ठितेन अनालस्येन शैथिल्यरहितेनेति यावत्। अशुण्ठितेन अशुष्केण अतुच्छेनेत्यर्थः। तथाभूतेन सौहृदेन सख्येन अन्वितैः सहितैः प्ररुण्ठिताघैः विगतदुरितैः। अत्र हरेरनुचरत्वं हेतुः। प्रचुड्डबोधाड्भिः प्रचुड्डस्य अभिप्रायसूचनस्य बोधे ज्ञाने विषये अड्भिः उद्योगिभिः, हरिणा अपाङ्गभ्रूचलनादिभिः सूचितं अभिप्रायं ज्ञातुमेव सर्वदा सावधानमभियुक्तैरित्यर्थः। अड्भिरिति अड्डधातोः क्विपि रूपम्। अयं धातुर्दोपध इति मते तु अद्भिरिति पाठः कर्तव्यः। **शठ** कैतवे। **शुठ** गतिप्रतिघाते। **कुठि** च। **लुठि** आलस्ये। **शुठि** शोषणे। **रुठि लुठि** गतौ। **चुड्ड** भावकरणे। **अड्ड** अभियोगे। अत्र नव धातवः ॥ ४५ ॥

**अकदिति।** अकद्धरिक्रीडनधूततोडकान् अकद्धा अक्लेशेन प्रवृद्धेनेत्यर्थः हरिक्रीडनेन हरेर्बालक्रीडया धूताः निरस्ताः तोडकाः हिंसकाः हिंसितुमागताः शकटतृणावर्त्तादयो दैत्या इत्यर्थः, येषु। **कड्ड** कार्श्ये[2]। अयं दोपधः क्विपि कत् कद् कद्वौ कद्वः इति स्वौजस्सु। कद्वा कद्भ्यां कद्भिरित्यादि। **क्रीडृ** विहारे। **तुडृ** तोडने। तोडनं हिंसा। होडदरौड्यभिक्षुकैः प्रहूडितान् होडद्भिः आगच्छद्भिः अरौड्यैः अनादरानर्हैः, सुतरामादरणीयैरित्यर्थः, भिक्षुकैः भिक्षास्वीकारार्थं सञ्चरद्भिः अथवा परि-

---

1 Usually this word is derived by घञ् and not by उणादि.

2 *Kṛṣṇārpaṇa* has कार्कश्ये.

व्राजकैः प्रहूडितान् प्राप्तान्। ललनाजनैर्वृतान्। विलासवतीभिः स्त्रीभिः सम्पूर्णान्। कीदृशैः। प्ररोडितानङ्गविलोडितैः प्ररोडितेन प्रकर्षेण उन्मादवता, उन्मदयतीत्युन्मादः सर्वजनोन्मादहेतुनेत्यर्थः, तादृशेन अनङ्गेन मन्मथेन विलोडनैः विविधप्रकारम् उन्मत्तीकृतैः। रतौ अडद्भिः संभोगलीलासु उद्योगशालिभिः। कडैः[1] मदयुक्तैः अत एव मधुरैः सरसस्वभावैरित्यर्थः। डकार एव लकार इति कलं मधुरमिति वदन्ति। **हूडृ होडृ** गतौ। **रौडृ** अनादरे। **रोडृ लोडृ** उन्मादे। **अड** उद्यमने। **लड** विलासे। अस्माल्ललनाशब्दः लडयोरेकत्व स्मरणात्। **कड** मदे। एकादश धातवः ॥ ४६ ॥

अथ पवर्गीयान्ता आत्मनेपदिनश्चतुस्त्रिंशत्।

**अतिप्तेति**। इमान् गृहान् प्रस्तिपितार्त्ति पश्यतस्तस्य हर्षाश्रु अतिप्त धृतिश्च तेपिता इत्यन्वयः। इमान् उक्तप्रकारान् गृहान् पशुपालयान् प्रस्तिपिता प्रक्षरिता, प्रनष्टेत्यर्थः, आर्त्तिः पीडा यथा भवति तथा पश्यतः तस्य अक्रूरस्य [हर्षाश्रु स]न्तोषबाष्पः। अतिप्त क्षरितं गलितमित्यर्थः। [धृतिर्धै]र्यम्, सा च तेपिता क्षरिता शिथिलितेत्यर्थः। धृतिक्षर.........तुमाह अस्तेपितानन्दरसस्येति। अस्तेपितः अक्षरितः....र्थः। आनन्दरसः परमानन्दानुभवो यस्य आनन्दपारवश्या.........प्राप्त इत्यर्थः। विपिनाध्वकेपनात्तस्याङ्गैः न व्यग्लेपि च। विपिनाध्वना वनमार्गेण यत् केपनं गमनं तस्माद्धेतोरङ्गैरवयवैः नाग्लेपि न ग्लानीभूतम्। भावे चिण्। वनस्य निबिडतया आतपप्रसङ्गाभावादङ्गानामदैन्यत्वमिति भावः। **तिपृ तेपृ ष्टिपृ ष्टेपृ** क्षरणार्थाः। **ग्लेपृ** दैन्ये। **टु वेपृ** कम्पने। **केपृ गेपृ ग्लेपृ** गतौ

1 *Kṛṣṇārpaṇa* has कलैः.

च। चकारात् कम्पने। अत्र वेपृधातोर्विपिनशब्दः। उपधाह्रस्वो बाहुलकात्। अत्र सप्त धातवः॥ ४७॥

**अगेपन इति।** अगेपनः सः यदा व्रजं अग्लेपत तदा रविः पश्चिमां दिशं अमेपत इत्यन्वयः। गेपनं कम्पनं अस्य न विद्यत इत्यगेपनः। कम्पनं मनश्चाञ्चल्यं तदस्य नास्तीत्यर्थः। सोऽक्रूरो यदा यस्मिन् काले व्रजमग्लेपत प्राप्तवान् तदा तस्मिन् काले रविः सूर्यः पश्चिमां प्रतीचीं दिशममेपत गतवान् दिनमप्यवसितमित्यर्थः। तदातनं विशेषमाह। भृङ्गैः सरोरुहात् कुमुदं अलेपि। मधुकरैः सरोरुहाद् अम्बुजात् कमलसकाशात् कुमुदं कैरवम् अलेपि अगामि। किं कारणम्। कोरकतां प्ररेपितात् मुकुलतां प्राप्तात् मधुपानविच्छेदादितो गमनम्। त्रपान्वितैः त्रपया लज्जया अन्वितैः सहितैः। इयं च गम्योत्प्रेक्षा। इयन्तं कालमिह सरोजे स्थितानामस्माकं अस्यापदि परित्यागो महदनौचित्य-मिति त्रपान्वितैरिवेति। मन्दगमनमुत्प्रेक्षानिमित्तम्। **मेपृ रेपृ लेपृ गतौ। त्रपूष्** लज्जायाम्। अत्र षट् धातवः॥ ४८॥

**सकम्पेति।** तदा वृषाः समाव्रजन् इत्यन्वयः। तदा तस्मिन् सन्ध्यासमये वृषाः महोक्षाः समाव्रजन् वनान्तात् गोष्ठं समागताः। कीदृशाः। सकम्पेन चलनसहितेन हेरम्बेण लम्बोदरेण समानं तुल्यं लम्बनं शब्दो येषाम्। हे इति रम्बते शब्दमुच्चैः करोतीति हेरम्बः। प्रचलित-शरीरविघ्नकण्ठध्वनितसमध्वनय इत्यर्थः। प्रलम्बसास्नाः विलम्बितगल-कम्बलाः। 'सास्ना तु गलकम्बलः' इत्यमरः। कबरत्विषः कर्बूरवर्णाः। अम्बितघण्टिकाः कण्ठाभरणघण्टाः येषाम्। अक्षीबिताः धृष्टाः प्रगल्भा इत्यर्थः। क्षीबतया मत्ततया अतिशीभरा अत्यन्तश्लाघ्याः। **कपि** चलने। **रबि लबि अबि** शब्दे। **लबि** अवस्रंसने। लम्बेरर्थभेदात् पुनः पाठः।

कबृ वर्णे । क्लीबृ अधार्ष्ट्ये । क्षीबृ मदे । शीभृ कत्थने । अस्मादरच् प्रत्ययान्तश्शीभरशब्दः । नव धातवः ॥ ४९ ॥

प्रचीभ्येति । पशवः व्रजमागताः । सजम्भनान् शिशून् प्राप्य उज्जृम्भहर्षाः सशल्भनं लिलिहुः इत्यन्वयः । पशवो व्रजं गोष्ठम् आगताः प्राप्ताः सत्यः जम्भनान् जम्भनेन गात्रनमनेन सहितान् शिशून् वत्सान् प्राप्य उज्जृम्भहर्षा वर्धितप्रमोदाः सशल्भनं सादरम्, कत्थनार्थेनादरो लक्ष्यते, यथा भवति तथा लिलिहुः लेहनं चक्रुः । अम्भसांनिधिप्ररम्भणस्तम्भिभिः प्रचीभ्यरेभैः उपलक्षिताः अम्भसां निधेः समुद्रस्य यत् प्ररम्भणं शब्दः तत् स्तम्भयितुं प्रतिबन्धुं निषेद्धुमित्यर्थः, शीलमेषामिति तादृशैः । प्रचीभ्यरेभैः प्रचीभ्यैः श्लाघ्यैः रेभैः शब्दैः सहिता इत्यर्थः । अस्कम्भिताः स्कम्भितं प्रतिबन्धः तद्रहिता स्वच्छन्दप्रवेशा इत्यर्थः । चीभृ च । कत्थने इत्येव । रेभृ शब्दे । अभि रभि च । शब्दे इत्येव । अभिधातोरम्भश्शब्दः । ष्टभि स्कभि प्रतिबन्धे । जभ जृभि गात्रविनामे । शल्भ कत्थने । कत्थनं श्लाघनम् । श्लाघा अत्र त्वादरः । अत्र नव धातव उदाहृताः ॥५०॥

वल्भप्रगल्भा इति । तत्क्षणं पथिक[ाः] [सुश्रं]भणस्तोभयुतान् गृहानगुः । तत्क्षणं तस्मिन् समये पथि[काः] सुश्रम्भणं सुष्ठुतरं श्रम्भणं पचनं तदेव स्तोभ....रप्रवृत्तिः स्वव्यापार इति यावत्, तेन युतान् युक्तान् गृहान् गृहस्थभवनानि अगुः गतवन्तः । गमनहेतुगर्भं विशेषणमाह वल्भ-प्रगल्भा इति । वल्भो भोजनं तत्र प्रगल्भाः समर्थाः । येन केनाप्योदनं दापयित्वा आकण्ठमशितुं प्रवीणा इत्यर्थः । अपि च धर्मं गोपायतां रक्षताम् अधूपितात्मनाम् असन्तप्तचित्तानां जनानाम् उद्यमः उद्योगः तस्मिन् समये जल्पान् विमुच्य अव्यक्तभाषणादिसर्वमुपेक्ष्य जपे सन्ध्योपासनमन्त्रोच्चारणे विषये अभवत् । वल्भ भोजने । गल्भ धार्ष्ट्ये । श्रन्भु पाके । ष्टुभ

स्तम्भे । स्तम्भः स्थिरत्वम् । इतः परं परस्मैपदिनः । **गुपू** रक्षणे । **धूप** सन्तापे । **जप जल्प** अव्यक्तायां वाचि । अत्राष्ट धातवः ॥ ५१ ॥

**चेपुरिति ।** प्रियाः असचितां प्रियां सपन्तः[1]..................... .........॥ ५२ ॥

**अत्रुंप्येति ।** अत्रुम्प्यधामानमिनं प्रतोफितुं मिलतः [रा]क्षसान् जलैः त्रुम्फितुं अत्रोफकाः....अपर्पन् नदीं अरफन् इत्यन्वयः । द्विजाः विप्राः अ .... वनीयं धाम तेजो यस्य । तथाभूतमपि इनम् आदि[त्यं प्रतोफितुं] हिंसितुं मिलतः आगच्छतः प्रतुम्फशीलान् हिंसास्वभावान् राक्षसान् त्रुंफितुं हिंसितुं अत्रोफका स्वयमहिंसका अपि सू.... हन्तव्या एवेत्युद्यता उद्युक्तास्सन्तो वापीं तटाकमव....नदीं च केचिदरफन् अगच्छन् । यदाहुः 'ये तु त्रि........मर्के निशाचराः सन्ध्याञ्जलिजलास्त्रै........द्विजाः' इति । अयमागमोऽत्र दर्शित इति ।........**रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब**........। अत्र सप्त धातवः ॥ ५३ ॥

**हयैरिति ।** सुरम्फैर्हयैः द्रुतमर्बतो रवेः....रक्तिमा आलर्ब्यत इत्यन्वयः । सुरम्फैः सुतरां गतिवेग .... रश्वैः शीघ्रम् अर्बतो गच्छतो रवेः सूर्यस्य....न्तेषु व्याप्नुवद्भिः करैः किरणैः कर्तृभिः रक्तिमा रक्तत्वं शोणवर्णत्वं आलर्ब्यत अलभ्यत । सूर्यरश्मिभिः सन्ध्यारागताम्रत्वं प्राप्तमित्यर्थः । अत्रोत्प्रेक्षामाह—शैलान् पर्वतान् प्रबर्ब्य प्राप्य पद्मिनीं नलिनीं उपमर्ब्य उपगम्य आशाः दिशः प्रकर्ब्य प्रगम्य च श्रमशोणितैः सर्वत्र सञ्चारेण यः श्रमः आलस्यं तेन हेतुना शोणितैरिव रक्ति .... रिवेति । अतिशीघ्रसततसञ्चारे हि सर्वेषां .... तामुपयान्तीति प्रसिद्धेः हेतुरिति । हेतुत्वं

---

1 Folio No. 55 containing the rest of the commentary on this verse is missing.

स्वाभाविकस्यापि रागस्यो .... हेतूत्प्रेक्षा। अत्र सप्त धातव उदाहृताः ॥ ५४ ॥

[ अखर्बीति ][1] ................................................................................................................................................................. ॥ ५५ ॥

[वियोगेति]........ क चुम्बिता तद्वधूः सन्ता[पस्तृब्धा]पि जगाद इत्यन्वयः। वियोगेन विरहेण सन्तुम्बितेन सम्य[क् तुम्बि]तेन दुःखितेन कोकेन चक्रवाकेण चुम्बिता तद्वधूः तस्य कोकस्य वधूः चक्रवाकी सन्तापेन विरहदुःखेन स्तृब्धा हिंसिता परवशीकृतेत्यर्थः। तथापि धैर्यमवलम्ब्य जगाद कथितवती। किमिति। हे शोभदाकृते त्वां स्मरो मा स्तृम्भतु। शोभनी[या भा]समाना आकृतिः शरीरसंस्थानं यस्य तादृ[शं] त्वां स्मरो मन्मथो मा स्तृम्भतु हिनस्तु, मा नितरां पीडयतु। तवाकृतिशो....रवानयमतोऽधिकं तापयिष्यतीति भावः। तन्मास्त्वि[ति इच्छा]यां लोट्। चिन्ता त्वां न शुम्भेत् व्यथा च न स्तृम्भतु। चिन्ता....पि न शुम्भेत् न क्लेशयतु व्यथा मनस्तापोऽपि न सुम्भतु न प्रपीडयतु। इत्थं जगादेति स बन्धः। **षृभु षृन्भु** सिंसार्थौ। **शुभ शुन्भ** भाषणे, भासने इत्येके। हिंसायामित्यपरे। **षुन्भ** च। **चुबि** वक्त्रसंयोगे। अत्र सप्त धातवः ॥ ५६ ॥

अतः परमनुनासिकान्ता आत्मनेपदिनः।

**प्रघिण्येति।** पणाय्यरूपाः भामिन्य एव पनिताकृतीन् स्वकामुकानक्षमया ययुरिति सम्बन्धः। पणायितुं स्तोतुं योग्यं रूपं सौन्दर्यं यासां तादृश्यो भामिन्य स्त्रियः स्वयमेव पनिताकृतीन् सर्वजनैः स्तुतशरीरसौन्दर्यान् स्वकामुकान् आत्मीयवल्लभान् अक्षमया तदागमनकालं प्रतिपालयितुमसहनत्वाद् ययुः अभिसृतवत्यः।

---

1 Folio 67 containing the commentary on this verse is missing.

किं प्रकारं ययुरित्यत्राह। भूषाः अलङ्कारान् कुण्डलवलयादीन् प्रघिण्य गृहीत्वा परिधार्येत्यर्थः। मालिकाः चम्पकमालतीमल्लिकादिपुष्पमालाः परिघुण्य गृहीत्वा घोणापुटे नासिकामूले घूर्णि भ्रमित्वा सम्मिलितं चन्दनं प्रघृण्य धृत्वा। ययुरिति सम्बन्धः। अक्षमतया सत्वरालेपनहेतुकं चन्दनस्य नासिकामूलविगलनमिति द्रष्टव्यम्। **घिणि घुणि घृणि** ग्रहणे। **घुण घूर्ण** भ्रमणे। **पण** व्यवहारे स्तुतौ च। **पन** च। भाम क्रोधे। **क्षमूष्** सहने। **कमु** कान्तौ। अत्र घुणधातोर्घोणाशब्दः। पणाय्येति 'गुपूधूपि' [३.१.२८] इत्यादिना आयप्रत्ययान्तात् कृत्यप्रत्ययः। कामुक इति 'लषपतपद'—[३.१.१५४] इत्यादिना उकञ्। अत्र दश धातवः ॥ ५७ ॥

इतः परं परस्मैपदिनः।

**अणद्दिश इति**। कुमारा वनादाययुः इत्यन्वयः। कुमाराः गोपबालकाः वनात् वने क्रीडितुं गताः ततः तदानीम् आययुः आगताः। कीदृशाः। केलिरणैरणद्दिशः केलौ क्रीडायाम् उद्भूतैः रणैः शब्दैः उच्चैर्गानहसनादिघोषैः अणद्दिशः शब्दायमान-दिगन्ताः। मनोज्ञया मनोहरया वाण्या वाचा भणन्तोऽन्योन्यं सल्लपन्तः मणिभूषणोत्कणाः मणिमयेभ्यो मञ्जीरवलयकिंकिणिप्रभृतिभ्यः उद्गताः कणाः शिञ्जितानि येषां तथा क्वणिताग्र्यवेणवः क्वणिताः शब्दिताः अग्र्याः श्रेष्ठाः वेणवो वंशीवाद्यानि यैः। व्रणद्विषाणध्रणिताभ्रम्, इदं च क्रियाविशेषणम्। व्रणद्भिः शब्दायमानैः विषाणैः शृङ्गवाद्यैः ध्रणितं सशब्दीकृतं मुखरित-मित्यर्थः, अभ्रम् आकाशो यथा भवति तथा ययुरिति सम्बन्धः। **अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण धण** शब्दार्थाः। अत्र नव धातव उदाहृताः ॥ ५८ ॥

**ध्वणदिति ।** पृथुश्रोणिजनश्च धेनुगणान् दुदोह इत्यन्वयः । पृथुश्रोणिजनो गोपनितम्बिन्योऽपि धेनुगणान् गोसमूहान् दुदोह दुग्धदोहनं चक्रुः । कीदृशान् । ध्वणच्छिशून् ध्वणन्तः शब्दायमानाः शिशवो वत्साः येषाम् । धाणसमोणिताशुभान् धाणेन शब्देन सम्यगोणितानि अपनीतानि सर्वेषामशुभानि दुरितानि यैः । गवां शब्दश्रवणमात्रेणैव पापानि प्रणश्यन्तीत्यर्थः । शोणान् कपिलवर्णान् प्रश्लोणितान् सङ्घीभूय स्थितान् प्रैणनविध्रणत्क्षितीन् प्रैणनेन सञ्चारेण विध्रणन्ती पटपटेति शब्दायमाना क्षितिः भूतलं येषाम् । अनुल्बणान् उल्बणमतिवृत्तिः, अननुकूलत्वमिति यावत्, तन्न विद्यत इत्यनुल्बणान् अनुकूलस्वभावानित्यर्थः । कनत्स्तनान् कनन्तः शोभमानाः स्तनाः येषाम् । स्तनानां शोभनत्वमकृशत्वम् । स्थूलौधस्कानित्यर्थः । **ओणृ** अपनयने । **शोणृ** वर्णगत्योः । **श्रोणृ** सङ्घाते । अस्माच्छ्रोणिशब्दः । **श्लोणृ** च । **प्रैणृ** गतिश्लेषणप्रेरणेषु । **ध्रण** शब्दे । **बण** च । **कन** दीप्तिकान्तिगतिषु । अत्र नव धातवः[1] ॥ ५९ ॥

**वनादिति ।** व्याधोत्करो गुहामक्रमीद् इत्यन्वयः । व्याधानां वनेचराणाम् उत्करः समूहो गुहां रात्रौ शयनोचितं पर्वतरन्ध्रम् अक्रमीद् आक्रान्तवान् प्राप्तवानित्यर्थः । कीदृशः । वनाद्वनं सानुम् अमन् एकस्माद्वनादन्यद्वनं सानुं पर्वतप्रस्थं च अमन् गच्छन् मृगानन्विष्य सर्वत्र सञ्चरन् गृहं द्रमन् स्वभवनं प्राप्नुवन् चान्तामिषः चान्तं भक्षितम् आमिषं येन । तथा छान्तजलः पीतोदकः मांसं भक्षयित्वा जलं पीत्वा पुनः फलानां वृक्षपक्वफलानां आवलिं समूहं जान्त्वा भक्षयित्वा तदनन्तरं जेमनम् ओदनं

---

1 Actually we get 11 dhātus here; in addition to the eight enumerated, we get ध्वण and धण given in the commentary on the previous verse, and ष्टन.

झमन् भक्षयन् गुहाम् अक्रमीदिति सम्बन्धः। ···चाहा[रा]दिष्टचतुष्टया-दन्यत् किमपि नास्तीत्याह—अहम्मतिमीमिताशय इति। अहम्मत्या अज्ञानेन मीमितो व्याप्तं अशयो हृदयं यस्य अबोधग्रस्तहृदय इत्यर्थः। हम्मधातोः क्विपि संयोगान्तलोपे हंशब्दः। हं ब्रह्मपर्यायः। तत्र ब्रह्मणि मतिः हम्मतिः आत्मज्ञानमित्यर्थः। तस्याभावस्त्वहम्मतिः अज्ञानमिति यावत्। **वन षण** संभक्तौ। अर्थभेदाद्वनेः पुनः पाठः। अत्र द्वयोर्वन-धात्वोर्द्वौ वनशब्दौ। सनधातोः सानुशब्दः औणादिकः। 'स्नुः प्रस्थस्सानुः'·········॥ ६० ॥

**[ अन्तःस्थयेति। ]**·········

··············[पयःप्रदो]हादिरताः नूत्नाचयितं तं कुतूहलात् प्रमय्य प्रैक्षन्त। पयःप्रदोहो गोदोहनं, तदादिषु गृहकृत्येषु रताः तत्पराः गोपजना इत्यर्थः। नूत्नं नूतनम् आचयितम् आगमनं यस्य तत्, पूर्वागतमित्यर्थः। तादृशमक्रूरं कुतूहलाद्धेतोः प्रमय्य तत्समीपं गत्वा प्रैक्षन्त दृष्टवन्तः। अपूर्वदर्शनं कुतूहलहेतुः। **अय वय पय मय चय तय णय** गतौ। पञ्च धातवः। अस्य श्लोकस्यादौ अन्तःस्थयेति पदम् इतःपरं अन्तःस्थान्ता इति सूचयति। यरलवा अन्तःस्थाः॥ ६१ ॥

**प्रतय्येति।** सः किञ्चित् प्रतय्य गृहान्तिकं नयितः दयालुं तमीश्वरं ददर्श इत्यन्वयः। सोऽक्रूरः किञ्चित्प्रतय्य किञ्चिदन्तरं गत्वा गृहस्य भगवन्मन्दिरस्य अन्तिकं समीपं नयितः प्राप्तः सन् दयालुं दयाशीलं ईश्वरं श्रीकृष्णं ददर्श दृष्टवान्। अत्र हेतुमाह—धन्य इति। भाग्यवान् धन्यः, इतरथा कथमीश्वरं पश्येदिति भावः। कीदृशम्। गोदोहदेशे सहाग्रजं रयितम्। गौर्दुह्यते यस्मिन् देशे स गोदोहदेशः। तत्र सहाग्रज-मग्रजेन रामेण सहितं रयितं प्राप्तम्। अपूतिभिर्गुणैरूतसत्कीर्तिं पूतिर्विश-

रणं दुर्गन्धश्च, दोष इति यावत्, अपूतिभिः दोषरहितैः गुणैः ऊताः सम्बद्धाः तन्तुग्रथनवत् सन्तायमानाः सत्कीर्त्तयः शोभनाः तत्तादृश्यो बहुविधाः कीर्त्तयो यस्य। तादृशं दृष्टवान् अहो अस्य पुण्यप्रभावः इति कविः सचमत्कारमुक्तवानित्यवसेयम्। **दय** दानगतिरक्षणहिंसादानेषु। **रय** गतौ। **ऊयी** तन्तुसन्ताने। **पूयी** विशरणे दुर्गन्धे च। अत्र षट् धातवः ॥ ६२ ॥

**प्रक्नोपयन्तमिति।** इतःपरस्तादीश्वरमेव विशेषणैर्विशिनष्टि। मुरलीं प्रक्नोपयन्तम् वेणुं वादयन्तम्। **क्नूयी** शब्दे उन्दे च। अस्माण्णिचि 'अर्त्तिह्री'—[७.३.३६]इत्यादिना पुकि यलोपे 'पुगन्त'—[७.३.८६]इति गुणे क्नोपेः शतरि रूपम्। महीभरक्ष्मायं भूभारं विधून्वन्तं अपनयन्तमित्यर्थः। **क्ष्मायी** विधूनने। अस्मात् कर्मण्यण्। बलस्फीतसुपीनदोर्युगं बलेन वीर्येण स्फीतं प्रवृद्धं सुतरां पीनं स्थूलं दीर्घं च दोर्युगं भुजयुगलं यस्य। **स्फायी ओप्यायी** वृद्धौ। आभ्यां क्तप्रत्यये स्फीभावः पीभावश्च, प्यायो निष्ठानत्वं च। अशेषतां अशेषान् सर्वजनान् तायते पालयतीति अशेषताः, अमि अशेषताम्, सोमपाशब्दवत्। **तायृ** सन्तानपालनयोः। अस्मात् क्विपि यलोपे रूपम्। भ्रूशलनैर्वलद्दृशा प्रियवल्लवीशुचं प्रवल्लमानम्। भ्रुवोः शलनैः चलनैः उपलक्षितया वलन्त्या चलन्त्या दृशा कटाक्षेण प्रियाणां वल्लवीनां गोपीनां शुचं दुःखं प्रवल्लमानं प्रकर्षेण संवृण्वानं निराकुर्वन्तमित्यर्थः। **शल** चलनसंवरणयोः। **वल वल्ल** संवरणे सञ्चरणे च। वलधातुरुभयपदी। तेन वलदिति शत्रन्तः। अत्राष्ट धातवः ॥ ६३ ॥

**मामल्यमानमिति।** स्मितमल्लिकावलीं मामल्यमानम्। स्मितं मन्दहास एव मल्लिकावली मल्लिकाकुसुमसमूहः तां मामल्यमानं पुनः पुनर्धारयन्तं मल्लिकाधवलमन्दहासमित्यर्थः। **मल मल्ल** धारणे।

मलधातोर्यङन्तात् शानच् । मल्लधातोर्मल्लिकाशब्दः । अभाल्यदैत्याधिप-फल्लनोद्धुरं अभाल्यानां भल्लितुं हिंसितुमशक्यानां दैत्याधिपानाम् असुर-प्रधानानां भल्लने वधे उद्धुरम् उद्युक्तं प्रवृद्धशक्तिमिति यावत् । **भल भल्ल** परिभाषणहिंसादानेषु । तयूभिर्बालैस्सह कलैः शब्दैः उरवः पृथवः कल्लोलाः तरङ्गाः यस्मिन् तादृशे कलिन्दजाजले यमुनाजले सलिले यद् देवनं क्रीडा । यस्मिन् उत्सुकं सश्रद्धम् । **कल** शब्दसंख्यानयोः । **कल्ल** अव्यक्ते शब्दे । **तेवृ देवृ** देवने । तयूरिति तेवृधातोः क्विपि 'च्छ्वोश्शूठ्'—[६.४.१९] इति वकारस्य ऊठि अयादेशे च रूपम् । तयूः तय्यौ तय्यः, तय्या तयूभ्यां तयूभिः । अत्राष्ट धातवः ॥ ६४ ॥

**सेव्यमिति ।** सतां सज्जनानां सेव्यं सेवितुं योग्यं शङ्करेण परमेश्वरेण गेव्यं सेव्यमित्येव । अब्जभुवा ब्रह्मणापि ग्लेव्यं सुरैर्देवैर्वेव्यं[1] उन्मदैरुद्वृत्तैः दुर्जनैः अमेव्यं सेवितुमलभ्यम्, आभीरजनैः गोपलोकैः प्रम्लेवितं प्रकर्षेण सेवितम् । कीदृशैः । रेवितवत्समण्डलीं मव्यद्भिः । रेवितानां प्लुतगतीनां नृत्यतामित्यर्थः, वत्सानां तर्णकानां मण्डलीं समूहं मव्यद्भिः । बन्धनं कुर्वद्भिः । असूर्क्ष्यकैः ईर्ष्यारहितैः दुर्ललितेष्वपि वत्सेषु अल्पमपि कोपमकुर्वद्भिरित्यर्थः । **षेवृ गेवृ ग्लेवृ [2]वेवृ मेवृ म्लेवृ** सेवने । **रेवृ** प्लवगतौ । इतःपरं परस्मैपदिनः । **मव्य** बन्धने । **सूर्क्ष्य ईर्क्ष्य ईर्ष्य** ईर्ष्यार्थाः । अत्र नव धातवः ॥ ६५ ॥

**राधाकृतेति ।** राधाकृतेर्क्ष्याकलहावलोकनात् ईर्ष्यां हयन्त्या रमया प्रमोदितम् । राधया कृतस्य ईर्क्ष्याकलहस्य प्रणयकोपस्य अवलोकनाद् दर्शनाद् हेतोः ईर्ष्यां हयन्त्या । स्वयमपि ईर्ष्यां प्रणयकोपं प्राप्तया रमया

---

1 *Kṛṣṇārpaṇa* पेव्यं for वेव्यम्.

2 *Kṛṣṇārpaṇa* पेवृ for वेवृ.

भगवदुरःस्थलवासिन्या श्रिया हेतुना प्रमोदितं सन्तुष्टम्। प्रमोदितमिति आदिकर्मणि क्तः। 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' [१.२.२१] इति क्तस्य कित्त्वाभावपक्षे रूपम्। राधाश्रियोरैकमत्यदर्शनात् श्रीरेव राधेत्यवबोधो हर्षहेतुः। सोमं प्रशुच्य कृतहर्यतैर्नुतं सोमः सोमलता तं प्रशुच्य निपीड्य सोमाहुतिं कृत्वा कृतहर्यतैः विहितयज्ञविधिभिः आहिताग्निभिः नुतं वेदमन्त्रैः स्तुतम्। हर्यतमिति। हर्यधातुरौणादिकातच्प्रत्ययान्तः संज्ञायाम्। फुल्लसरोजमालया समालितम्। फुल्लया विकसितया सरोजमालया समालितं सम्यगालितं भूषितम्। **हय** गतौ। **शुच्य** अभिषवे। अभिषवः अवयवशिथिलीकरणं सुरासन्धानं वा। **हर्य** गतिकान्त्योः। **अल** भूषणपर्याप्तिवारणेषु। **ञि फला** विशरणे। समालित इति समाङ्पूर्वः अलितशब्दः। अलितो भूषितः। फुल्लशब्दस्तु फलधातोर्निष्ठान्तः —'फुल्लक्षीब'—[८.२.५५] इत्यादिनिपातः। सप्त धातवः ॥ ६६ ॥

**उन्मीलनेति।** दृशोरुन्मीलनश्मीलनलीलया [1]अस्मीलितक्ष्मीलितविश्वविष्टपम्। दृशोः नेत्रयोः उन्मीलनम् उन्मेषः श्मीलनं निमेषः तद्रूपया लीलया क्रीडया अस्मीलितो विस्तारितः क्ष्मीलितः संकोचितो विश्वविष्टपः सर्वलोको येन। दृशोरुन्मीलने विश्वं विकसति निमीलने संकुचतीत्यर्थः। अनेनास्य विश्वोदयोपसंहारकारणत्वमुक्तम्। आह च—'यौ स्वप्नबोधौ तावेव विश्वेषां प्रलयोदयौ' इति। पिञ्छस्रजा मायूरबर्हमालया पीलिताः प्रतिबद्धाः नीला मेचकाः कुन्तलाः शिरोरुहा यस्य। शीलेन स्वभावेन संकीलितानि सुग्रथितानि यन्त्रितानीत्यर्थः, लोकानां जनानां मानसानि येन। तादृशमिति सम्बन्धः। **मील श्मील स्मील**

---

1 *Kṛṣṇārpaṇa* has उत्स्मीलित.

**द्मील** निमेषणे। **पील** प्रतिष्टम्भे। **णील** वर्णे। **शील** समाधौ। समाधिः स्वभावः। **कील** बन्धने। अष्ट धातवः॥ ६७॥

**सन्मार्गेति।** सन्मार्गसंकूलिषु शूलदायिनम्। सन्मार्गः सदाचारः तं संकूलितुं आच्छादयितुं शीलमेषामिति सन्मार्गसंकूलिनः। आचारत्यागिनो दुर्जना इत्यर्थः। तेषु शूलं रुजां दातुं शीलं अस्येति। तादृशमीश्वरं दुष्टानामतिव्यथां कुर्वन्तमित्यर्थः। प्रफुल्लभक्त्युन्नतिचिल्लचेतसां एनांसि तूलपूलवद्दहन्तं प्रफुल्लायाः प्रकर्षेण विकसितायाः प्रवृद्धाया भक्तेर्भावनाया उन्नत्या उत्कर्षेण चिल्लचेतसाम् आर्द्रमनसां विषयान्तरेषु शिथिलधियामित्यर्थः। तथाविधानां जनानाम् एनांसि दुरितानि तूलपूलवत् कार्पाससमूहानिव दहन्तं भस्मीकुर्वन्तम्। कीदृशानाम्। मूलं फलं वापि अदतां मूलफलाशनमात्रेण तीव्रं तपश्चरताम्। किञ्च। अचुल्लताम् अनभिप्रायाणां अकामनया भगवत्प्रसादमात्रमभिलषतामित्यर्थः। पुत्रकलत्रधनधान्याद्यभिप्रायरहितानामिति यावत्। अचुल्लतामिति शत्रन्तषष्ठीबहुवचनम्। **कूल** आवरणे। **शूल** रुजायाम्। **तूल** निष्कर्षे। **पूल** सङ्घाते। **मूल** प्रतिष्ठायाम्। **फल** निष्पत्तौ। **चुल्ल** भावकरणे। **फुल्ल** विकसने। **चिल्ल** शैथिल्ये। अत्र नव धातवः॥ ६८॥

**अवेलितानामिति।** अवेलितानां अचञ्चलमनसां स्थिरधियामित्यर्थः। व्रतिचेलं व्रतिनां तपस्विनां चेलो वासः वल्कलमित्यर्थः, तद्धर्तुं शीलमेषामिति तादृशानां तपोधनानाम् अकेलिलोले केलिषु वैषयिकसुखानुभवक्रीडासु लोलं सतृष्णं न भवतीत्यकेलिलोलं तथाभूते हृदि बद्धखेलनं कृतक्रीडनं तेषां मनसि स्फुरन्तमित्यर्थः। फणीश्वरक्ष्वेलरुधं फणीश्वरस्य कालियस्य सर्पस्य क्ष्वेलं विषं रुणद्धीति तादृशप्रभावम्। पेलववातफेलनात् मुहुः प्रवेल्लितस्रजम्। पेलवो मृदुः स चासौ वातश्चेति पेलववातो मन्दमारुतः

तस्य फेलनात् गत्या वीजनाद्धेतोः मुहुः प्रवेल्लिताः प्रचलिताः स्रजो वनमालाकु[सु]ममालादयो यस्य तादृशमीश्वरमिति सम्बन्धः । वेलृ चेलृ केलृ खेलृ क्ष्वेलृ वेल्ल चलने । पेलृ फेलृ शेलृ गतौ । अष्ट धातवः ॥ ६९ ॥

सुमार्गेति । खलात्मनां गलच्छिदार्थं महीतलं सलितं खलात्मनां दुष्टमनसां कंसशिशुपालनरकमुरादीनां गलच्छिदार्थं कण्ठच्छेदं प्रयोजनीकृत्य महीतलं भूतलं सलितं संप्राप्तं धरणौ कृतावतारम् । कीदृशानाम् । सुमार्गशैलात् स्खलतां शोभनमार्गगमनात् भ्रश्यतां दुर्मार्गसञ्चारिणामित्यर्थः । दलत्तनुप्रश्वलितान् परान् प्रति प्रश्वल्लिताखोलसुदर्शनायुधम् दलत्तनून् विदीर्यमाणगात्रान् प्रश्वलितान् प्रधावितान् परान् शत्रून् प्रति तथाविधविमतजनानुद्दिश्य पश्वलितं प्रकृष्टवेगगतियुक्तं अखोलं च अप्रतिहतगमनं च सत् सुदर्शनं नामायुधं यस्य तादृशम् । स्खल सञ्चलने । खल सञ्चये । गल अदने । गलति भक्षयतीति गलशब्दः । षल गतौ । दल विदारणे । श्वल श्वल्ल आशुगमने । खोलृ खोर्ऋ गतिप्रतिघाते । नव धातवः[1] ॥ ७० ॥

अखोरेति । अखोरधोरत्पतगेन्द्रवाहनम् । अखोरम् अप्रतिघातं यथा भवति तथा [2]धोरन् चातुर्येण गच्छन् पतगेन्द्रो गरुडो वाहनं यस्य । त्सरिषानिरासिनं स्वम् आत्मानं सेवितुं शीलं येषां स्वभक्तानामित्यर्थः, तित्सरिषा त्सरितुमिच्छा त्सरणं छद्मगमनं व्याजमार्गसञ्चारः तद्विषयामिच्छां निरसितुं निराकर्तुं शीलमस्येति तथा स्वभक्तान् दुर्मार्गान्निवारयन्तमित्यर्थः । क्मरन्मनसां कुटिलहृदयानां दुर्गमं दुष्प्रापम् ।

---

1 Of the nine dhātus mentioned here only eight (स्खल to खोलृ) are illustrated in this verse.

2 *Kṛṣṇārpaṇa* धौरन्.

अभ्रमेचकं घनश्यामम् । वभ्रद्वधूविभ्रमदृष्टिमभ्रितं वभ्रन्तीनां सहसञ्चरन्तीनां वधूनां गोपस्त्रीणां विभ्रमदृष्ट्या विलासवता कटाक्षेण मभ्रितं प्राप्तं सविलासापाङ्गविषयीकृतमित्यर्थः । धोऋ॑ गतिचातुर्ये । त्सर छद्म-गतौ । क्मर हूर्च्छने । हूर्च्छनं कौटिल्यम् । अभ्र वभ्र मभ्र चर गत्यर्थाः । तित्सरिषेति । त्सरधातोस्सन्नन्तात् 'अ प्रत्ययात्' [३.३.१०२] इत्यकारः स्त्रीप्रत्ययः । सप्त धातवः[1] ॥ ७१ ॥

सञ्चारेति । सञ्चारनिष्ठ्यूतनखेन्दुचन्द्रिकं सञ्चारे सति निष्ठ्यूता निस्सृता नखेन्दूनाम् इन्दुतुल्यानां नखानां चन्द्रिका ज्योत्स्नातुल्या द्युतिर्यस्य । लोके जयन्तं उत्कर्षेण वर्तमानम् सकलैकजीवनं सकलानां चराचरभुवनानाम् एकजीवनम् । प्रधानमाधारभूतं जीवम् । जीवयतीति जीवनम् जीवात्मना सर्वत्रावस्थितमित्यर्थः । अपीविता अस्थूला न भवति नापि अतिमीवित अतिस्थूला च भवतीति नापीविता नाप्यतिमीविता नातिकृशा नातिस्थूला चेत्यर्थः । तथाभूतां तनुं श्रितं धारयन्तम् । किञ्च । सुतीवोरुं सुतरां तीवौ पृथू ऊरू यस्याः । अनीवम् अस्थूलमतिकृशं मध्यमम् उदरं यस्याः । तथाभूतां च तनुं शरीरं श्रितमिति सर्वाङ्गसौन्दर्यातिशय उक्तः । ष्ठिवु निरसने । जि जये । जीव प्राणधारणे । पीव मीव तीव नीव स्थौल्ये । अष्ट धातवः[2] ॥ ७२ ॥

प्रक्ष्यूतेति । प्रक्ष्यूतगोपीशुचं प्रक्ष्यूता प्रकर्षेण निरस्ता गोपीनां शुक् आत्मविरहदुःखं येन । क्षिवु निरसने । अस्मात् क्तप्रत्यये 'च्छ्वोः शूठ्'—[६.४. १९] इत्यूठि च रूपम् । ऊर्णपूतनं ऊर्णा हिंसिता पूतना

---

1 In addition to the seven dhātus enumerated here we find खोऋ॑ also given in the commentary on the previous verse illustrated here.

2 Only seven dhātus are illustrated.

येन। **उर्वी तुर्वी थुर्वी दुर्वी धुर्वी** हिंसार्थाः। उर्वधातोः 'राल्लोपः' [६.४.२१] इति वकारलोपे रेफान्तात् निष्ठानस्य णत्वे 'उपधायां च' [८.२.७८] इत्युकारस्य दीर्घे च सति ऊर्णशब्दः। एवं तूर्णथूर्णशब्दौ। तूर्णानसं तूर्णं हिंसितं, शकलीकृतमित्यर्थः, अनः शकटं येन। थूर्णबकादिदानवं थूर्णा हिंसिता बकादयः, आदिशब्देन अघन[र]कादयश्च, दानवा असुरा येन। दुदूर्विषून् धूर्वितुमेव गूर्वणं मूर्वन्तम्। दूर्वितुं हिंसितुं इच्छून् निजशत्रून् धूर्वितुं हिंसितुमेव केवलं गूर्वणम् उद्यमं मूर्वन्तं बध्नन्तम्, उद्योगं कुर्वन्तमित्यर्थः। आपूर्वितपर्वताध्वरम्। आपूर्वितः साधु पूरितः पर्वताध्वरो गोवर्धनयागो येन। **गुर्वी** उद्यमने। [1]**मुर्व** बन्धने। **पुर्व पर्व फर्व मर्व** पूरणे। पर्वधातोरतच्प्रत्ययान्तः पर्वतशब्दः। दश धातव उदाहृताः ॥ ७३ ॥

**अफर्वितेति।** सतामफर्विताकांक्षितमर्वकं सतां सज्जनानाम् अफर्वितस्य असम्पूर्णस्य आकांक्षितस्य अभिलषितस्य वस्तुनो मर्वकं पूरकं दातारमित्यर्थः। मांसादिसञ्चर्वकदुष्टभर्वकं मांसादीनामभक्ष्यद्रव्याणां सञ्चर्वकाः सम्यग् भक्षकाः ये दुष्टा रक्षोदानवादयः तेषां भर्वकं हिंसितारम् कर्वद्वधूकेलिरसेन खर्वितं कर्वन्तीनां दृप्यन्तीनां मदनोन्मत्तानामित्यर्थः, वधूनां स्त्रीणां केलिरसेन क्रीडासुखेन खर्वितं दृप्तं मदयुक्तमित्यर्थः, शर्वपरेण सर्वतां गर्वस्य दर्पस्य अर्वकं हिंसकं विनाशयितारमित्यर्थः। **चर्व** अदने। **भर्व** हिंसायाम्। **कर्व खर्व गर्व** दर्पे। **अर्व शर्व षर्व** हिंसायाम्। अत्र दश धातव उदाहृताः ॥ ७४ ॥

**विश्वेन्वितमिति।** विश्वेन्वितं विश्वव्याप्तं स्रङ्मधुभिः कुसुममालामकरन्दैः पिन्वितानि सिक्तानि अङ्गानि यस्य। निन्वकान् कृपयैव

1 *Kṛṣṇārpaṇa* has मुर्वी.

उच्चैर्मिन्वन्तम् । निन्वन्ति सेवन्ते इति निन्वकाः तान् सेवकान् भक्तजनान् कृपया दययैव उच्चैः अतिशयेन मिन्वन्तं सिञ्चन्तं कृपामृतेन शिशिरयन्तमित्यर्थः । आभीरकुलं पशुपालवंशं हिन्वन्तं प्रीणयन्तम् । विलासिनीः गोपसुन्दरीः दिन्वन्तं सन्तोषयन्तम् । आधिन्वितदेवमण्डलं आधिन्वितं साधु प्रीणितं देवमण्डलम् अमरकुलं येन । तादृशमिति सम्बन्धः । इवि व्याप्तौ । पिवि मिवि णिवि सेचने सेवने च । हिवि दिवि धिवि जिवि प्रीणनार्थाः । एषाम् 'इदितो नुम् धातोः' [७.१.५८] इति नुम् । सप्त धातवः ॥ ७५ ॥

जिन्वन्तमिति । निजरिण्वनैः उर्वीं जिन्वन्तं निजैः आत्मीयैः रिण्वनैः सञ्चारैः उर्वीं भूतलं जिन्वन्तं प्रीणयन्तम् । उर्वीशब्देनोर्वीवासिजना लक्ष्यन्ते । सतां सज्जनानाम् अन्तः हृदयं रण्वन्तं गच्छन्तं, मनसि वर्तमानमित्यर्थः । भवधन्वपादपं भवः संसारः स एव धन्वा मरुभूमिः तत्र पादपं छायाद्रुमं भवप्रतप्तानामाश्रयभूतमित्यर्थः । आश्चर्यगतीः कृण्वन्तं अद्भुतव्यापारान् कुर्वन्तम् । अमूतिदं मूतिः बन्धनं ततोऽन्या अमूतिः मोक्षः,ताममूतिं ददातीत्यमूतिदः तादृशम् । जगन्ति लोकान् अवन्तं रक्षन्तं प्रीणयन्तं तर्पयन्तमित्याद्यनेकधर्माश्रयम् । त्रिदशैः देवैः उपधावितम् आश्रितं शरणं प्राप्तमित्यर्थः । रिवि रवि धवि गत्यर्थाः । धविधातोः धन्वशब्दः । कृवि हिंसाकरणयोश्च । चात् गतौ । मव बन्धने । अस्मात् क्तिन्प्रत्यये 'ज्वरत्वर'—[६.४.२०] इत्यादिना ऊठि मूतिशब्दः । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । धावु गतिशुद्ध्योः । अयमुभयपदी । अत्राष्ट धातवः । अथोष्मान्ता आत्मनेपदिनः । उत्तरश्लोके उष्मशब्देनोष्मान्तत्वं सूचयिष्यति ॥ ७६ ॥

**सन्धुक्षमाणमिति ।** महात्मा एष तं प्रेक्ष्य जन्मफलमीषितवान् इत्यन्वयः । महात्मा महानुभावः एषोऽक्रूरो तं तथावर्णितस्वरूपमीश्वरं प्रेक्ष्य दृष्ट्वा जन्मफलमात्मनो जननप्रयोजनं ईषितवान् प्राप्तवान् । कीदृशं तम् । अरिधिक्षकमूष्मजालं सन्धुक्षमाणं अरीणां शत्रूणां धिक्षकं क्लेशकरं ऊष्मजालं प्रतापसञ्चयं सन्धुक्षमाणं दीपयन्तम् । संवृक्ष्यवेदमतशिक्षक-भिक्षुगम्यं संवृक्ष्यस्य सम्यग्वरणीयस्य ग्राह्यस्येत्यर्थः, वेदमतस्य उपनिष-त्सिद्धान्तस्य शिक्षकैः अभ्यसनकर्तृभिः.... परिचयपरैरित्यर्थः । तादृशैः भिक्षुभिः योगिभिः गम्यम् आसाद्यम् अवगम्यतत्त्वमित्यर्थः । संक्लेशितस्व-कथदक्षणदीक्षितं संक्लेशिता सम्यक्कीर्त्तिता व्यक्तमभिहिता स्वकथा भगवतः कथा यैः तेषां जनानां दक्षणे वर्धने विषये दीक्षितं व्रतधरं तद्वर्धनैकप्रवृत्ति-मित्यर्थः । **धुक्ष धिक्ष** सन्दीपनक्लेशनजीवनेषु । **वृक्ष** वरणे । **शिक्ष** विद्योपादाने । **भिक्ष** याच्ञायामलाभे लाभे च । **क्लेश** व्यक्तायां वाचि । **दक्ष** वृद्धौ शीघ्रार्थे च । **दीक्ष** मौण्ड्येज्योपनयननियमव्रतादेशेषु । **ईक्ष** दर्शने । **ईष** गतिहिंसादर्शनेषु । अत्र दश धातवः ॥ ७७ ॥

**भाषितुमिति !** स खलु हर्षवर्षितो भाषितुं समुचितं गेषितुं च नाशकद् इत्यन्वयः । सोऽक्रूरस्तावत हर्षेण हरिदर्शनजन्मना सन्तोषातिशयेन वर्षितः स्निग्धमानसः आर्द्रचित्त इत्यर्थः, तथा सन् भाषितुं किमपि वक्तुं समुचितं तत्कालयोग्यं कृत्यं गेषितुम् अन्वेष्टुं च नाशकत् न समर्थोऽभूत् । किंकर्त्तव्यतामूढत्वात् समुदाचारमपि नाचरितवानित्यर्थः । अत्र हेतुमाह येषणाप्तहरिजेषसम्भ्रमादिति । येषणेन प्रयत्नेन आप्तस्य द्रष्टुं लब्धस्य हरेः जेषेण अभिगमनेन यः सम्भ्रमः संवेगः अस्वास्थ्यमिति यावत् , तस्माद्धेतोः नेषितस्मृतिः अपगतस्मरणः, आत्मानमपि विस्मृतवानित्यर्थः, रथादपेषितोऽव-तीर्णः भूतलं प्राप्त इत्यर्थः । अप एषितः अपेषितः । 'एङि पररूपम्' [६.१.९४] । **भाष** व्यक्तायां वाचि । **वर्ष** स्नेहने । **गेषृ** अन्विच्छायाम् । **येषृ** प्रयत्ने । **जेषृ णेषृ एषृ प्रेषृ** गतौ । सप्त धातवः ॥ ७८ ॥

**सुप्रेषितानिति** । सूतो नसितेन दाम्ना तुरङ्गान् ययामेत्यन्वयः । सूतः सारथिः नसितेन कुटिलेन दाम्ना पाशेन तुरङ्गान् अश्वान् ययाम नियन्त्रितवान् । सरेषवृके पथि सहेषं सुप्रेषितान् सरेषाः सशब्दाः वृकाः मृगविशेषाः यस्मिन् तादृशे पथि वनमार्गे सहेषं, हेषा तुरगशब्दः तेन सह सुप्रेषितान् सुखेन गतान् । ह्रेषास्तकासरमदान् ह्रेषया स्वशब्देन अस्तः दूरनिरस्तः कासराणां महिषाणां मदो गर्वो यैः । महिषास्तुरङ्गान् बिभ्यतीति प्रसिद्धिः । अतिभासुरांगान् अत्यर्थं शोभमानावयवान् नासोत्थरासलसितान् । नासोत्थैः घोणारन्ध्रादुद्गतैः रासैः शब्दैः लसितान् शोभितान् । समराभ्यसितान् समरे युद्धे अभ्यसितान् भयरहितान्, भ्यसितं भयं तदेषां नास्तीति तथाभूतान् । **रेषृ हेषृ ह्रेषृ** अव्यक्ते शब्दे । आद्यो वृकशब्दे द्वितीयतृतीयावश्वशब्दे । **कासृ** शब्दकुत्सायाम् । अस्मात् कासरशब्दः । **भासृ** दीप्तौ । **णासृ रासृ** शब्दे । **णस** कौटिल्ये । **भ्यस** भये । अत्र दश धातवः ॥ ९७ ॥

**आशंसितेति** । अक्रूरस्तमेनं विष्णुमेत्य पदाब्जे बहुधापतद् इत्यन्वयः । तथाभूतगुणविशिष्टमेनं विष्णुं श्रीकृष्णनाम्ना गोकुले प्रवर्धमानमादिपुरुषमेत्य प्राप्य पदाब्जे तस्य भगवतः पादारविन्दे बहुधा अनेकवारम् अपतत् नमस्कृतवान्, तत्पादान्तिकभूमौ साष्टाङ्गपातं पतितवानित्यर्थः । कीदृशोऽक्रूरः । आशंसितात्तिमुदितः आशंसितस्य चिरकालप्रार्थितस्य भगवत्पादवन्दनस्येत्यर्थः, आस्या प्राप्त्या हेतुना मुदितः सन्तुष्टः । गतमंहितांहाः गतं नष्टं मंहितं प्रवृद्धम् अंहो दुरितं यस्य, पूर्वं प्रवृद्धमपि तदानीं तत्क्षणमेवांहः प्रशान्तमित्यर्थः । गर्होज्झितः गर्हया आत्मनिन्दया उज्झितः त्यक्तः । हरिमनभिवन्द्यास्थितं मां धिग्धिगितीतःपूर्वमभूदात्मनि निन्दा, सापि तदानीमपगतेत्यर्थः । विष्णुं विशिनष्टि । भुवनग्रसिष्णुं

भुवनानि सर्वाण्यपि ग्रसिष्णुं ग्रसनशीलम् । अनेन विश्वप्रभवस्थितिप्रलयहेतुरयमेवेत्युक्तं भवति । असताम् असज्जनानां ईहां चेष्टां ग्लसमानं भक्षयन्तं, दुष्टजनव्यापारान् विनाशयन्तमित्यर्थः । पदाब्जं विशिनष्टि । अगल्ह्यतमे अत्यन्तस्तोतव्ये । गल्हितुमयोग्ये इत्यनेन सर्वदा बहुमन्तव्य इत्यर्थः । **आङः शसि** इच्छायाम् । **ग्रसु ग्लसु** अदने । **ईह** चेष्टायाम् । **बहि महि** वृद्धौ । बंहिधातोर्नलोपे उकारप्रत्यये च बहुशब्दः । **अंहि** गतौ । अस्मादंहरशब्दः । **गर्ह गल्ह** कुत्सायाम् । अत्र नव धातवः ॥ ८० ॥

**बर्हप्रबल्हेति** । ईशस्तं निजबाहयैव प्रोत्थाप्यालिलिङ्ग इत्यन्वयः । ईशः श्रीकृष्णः तम् अक्रूरं निजया आत्मीयया बाहयैव करेणैव न त्वन्यस्य कस्यचित् करेण, अत्रादरे स्नेहातिशयो हेतुः, प्रोत्थाप्य आलिलिङ्ग आश्लिष्टवान् । कीदृशः । बर्हप्रबल्हसमलंकृतिः बर्हाणि मयूरपिञ्छानि प्रबल्हा प्रधाना समलंकृतिः साध्वलंकारो [1]यस्य । कीदृशं तम् । वर्हकनिवल्हदुतं वर्हकाः हिंसकाः कंसप्रभृतयो दुष्टाः तेषां निवल्हेन परिभाषणेन परिहासपूर्वकहरिनिन्दाप्रकथनेन अथवा छादनेन हरिगुणतिरस्कारेण हेतुना दुतं एतावन्तं कालं परितप्तम् । बाहां विशिनष्टि । प्लीहायितेन प्लीहां नाम व्याधिमिवाचरितेन असुरभरेणैव क्षत्या पीडया वेहिताया आयासं प्रापितायाः उर्व्याः भैषज्यं चिकित्सा तद्रूपे जेहे प्रयत्ने परया तत्परया । **बर्ह बल्ह** प्राधान्ये । **वर्ह वल्ह** परिभाषणहिंसाच्छादनेषु । **प्लिह** गतौ । **वेहृ जेहृ बाहृ** प्रयत्ने । अष्ट धातवः ॥ ८१ ॥

**द्राहित इति** । अथ बलस्तं सस्वजे तदनन्तरं बलः श्रीबलभद्रः तम् अक्रूरं सस्वजे आलिङ्गितवान् । कीदृशः । शुभपथप्रकाशने द्राहितः

---

1 *MS.* यैः.

शुभपथस्य सन्मार्गस्य प्रकाशने प्रकटने विषये द्राहितो जागरूकः उन्निद्रः । द्राहृ निद्राक्षये । काशृ दीप्तौ । अनूह्यवैभवः ऊहितुं तर्कयितुं अशक्यः वैभवः माहात्म्यं यस्य । ऊहृ वितर्के । गाढमैत्ररसगृह्यमाणधीः गाढेन दृढतरेण मैत्ररसेन मित्रत्वरसेन बन्धुत्वतात्पर्येण गृह्यमाणा स्वीकृता वशीकृता धीः बुद्धिः यस्य । भूषणग्लहनघुंषितः । भूषणानाम् अलङ्काराणां ग्लहनेन परिग्रहणेन धारणेन घुंषितः कान्तिं कुर्वाणः स्वाङ्गशोभां उपजनयन्नित्यर्थः । गाहू विलोडने अस्मात् क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु गाढशब्दः । गृहू ग्रहणे । ग्लहू च । घुषि कान्तिकरणे । सप्त धातवः । इतःपरं परस्मैपदिनः ॥ ८२ ॥

**घोषद्भूष** इति । पङ्कजाक्षस्तमूचे इत्यन्वयः । पङ्कजाक्षः श्रीकृष्णः तम् अक्रूरम् ऊचे कथितवान् । कीदृशः । एनं मन्दहासेन उक्षन् एनमक्रूरं मन्दहासेन मन्दस्मितेन उक्षन् सेचयन् आर्द्रीकुर्वन्नित्यर्थः । घोषन्त्यः शब्दायमानाः भूषाः वलयतुलाकोटिकाञ्चीकिङ्किणीप्रभृतयोऽलंकारा यस्य । पापश्रेणीतक्षणे त्वष्टृधर्मा । पापश्रेण्याः दुरितसमूहस्य तक्षणे तनूकरणे क्षपणे इत्यर्थः, त्वष्टुः तक्षकशिल्पिन इव धर्मो व्यापारो यस्य । विश्वं रक्षन् भुवनानि पालयन् । तृक्षिताघाः वल्लवीः निक्षन् । तृक्षितानि अपगतानि अघानि पापानि यासां तादृशीः वल्लवीः गोपीः निक्षन् चुम्बन् । हरिकर्तृकचुम्बनमेवासामघापगमहेतुः । घुषिर् विशब्दने[1] । शब्दमात्र[2] इत्येके । अक्षू व्याप्तौ । अस्मादक्षिशब्दः । पङ्कजाक्ष इति । तक्षू त्वक्षू तनूकरणे । त्वक्षूधातोस्तृचि 'स्कोः'—[८.२.२९] इति कलोपे ष्टुत्वे

1 *Kṛṣṇārpaṇa* following *MDV* gives the meaning as अविशब्दनार्थः and explains its sense as शब्दमात्रम्.

2 It is used here in this sense.

च त्वष्टृशब्दः । **उक्ष** सेचने । **रक्ष** पालने । **णिक्ष** चुम्बने । **तृक्ष** **ष्टृक्ष** **णक्ष** गतौ । अष्ट धातवः ॥ ८३ ॥

**आस्तृक्षित** इति । त्वमास्तृक्षितोऽसि[1] आगतोऽसि आङ्पूर्वस्तृक्षिधातुरत्र स्वागते वर्तते, अपि स्वागतमिति प्रश्नोऽयम् । परं विकलङ्कवक्षाः नक्षत्रराडिव त्वं नः महत्सुखं वितनोषि । केवलं विकलङ्कवक्षा विगतकलङ्कमध्यभागो नक्षत्रराट् चन्द्र इव नोऽस्माकं महत् प्रभूतं सुखं तनोषि विस्तारयसि । कलङ्कराहित्यं चन्द्रात्तव व्यतिरेक इति भावः । अत्रार्थान्तरन्यासमाह—इष्टतरास्सपक्षाश्शुचं तक्षन्ति नामेति । इष्टतराः अतिशयेन प्रियाः सपक्षाः बन्धुजनाः शुचं दुःखं तक्षन्ति संवृण्वन्ति संहरन्तीत्यर्थः । नामेति प्रसिद्धौ । कीदृशाः । संमृक्षितोरुगुल्माक्षिकहृद्यवाचः संमृक्षितं सम्यग्योजितम् उरु प्रभूतं गुलं यस्मिंस्तादृशं माक्षिकं मध्विव हृद्या हृदयस्य प्रिया मनोज्ञा इत्यर्थः, वाचो येषां तथाभूताः सपक्षाः इति सम्बन्धः । **वक्ष** रोषे । अस्मादसुन्प्रत्ययान्तो[2] वक्षश्शब्द औणादिकः संज्ञावचनः । **मृक्ष** सङ्घाते । **मक्ष** इत्येके, अस्मान्माक्षिकशब्दः । **तक्ष** त्वचने, त्वचनं संवरणम् । **पक्ष** इत्येके । सप्त धातवः ॥ ८४ ॥

**सूक्ष्र्येति** । हे सूक्ष्र्य, त्वदीक्षा नश्चिरकांक्षिता । सूक्ष्र्य आदरणीय, त्वदीक्षा त्वद्दर्शनं नोऽस्माकं चिरकांक्षिता बहुकालमागृहीता चिरकालवाञ्छिता । स इदानीं दैवादधिगतेति वाक्यशेषः । अमाङ्क्ष्यान् नीचलोकान् न वाङ्क्षामि । अमाङ्क्ष्यान् माङ्क्षितुं वाञ्छितुमयोग्यान् नीचलोकान् दुर्जनान् न वाङ्क्षामि न द्रष्टुमिच्छामि । मधुरापुरवास्तव्येषु भवद्विधाः साधुजना एव मया चिरं दिदृक्षिताः न तु कंसादयो दुर्जना इति भावः ।

---

1 *Kṛṣṇārpaṇa* has अद्य for असि.

2 MS. अदम् for असुन्.

उक्तं समर्थयते—जनो द्राक्षांवाञ्छति ध्राङ्क्षद्बहुध्वाङ्क्षविचूषितानि फलानि नो। जनः सर्वलोको द्राक्षां मृद्वीकां मधुरतरस्वादुत्वात् भक्षितुमिच्छत्येव ध्राङ्क्षद्भिः घोरवाशितं कुर्वद्भिः बहुभिः ध्वाङ्क्षैः वायसैः विचूषितानि आस्वादितरसानि निम्बकारस्करबिम्बादिफलानि नो वाञ्छति। तद्वद् दुष्टामात्यसेवितान् दुष्प्रभूनहं द्रष्टुं कदाचिदपि नेच्छामीत्यभिप्रायः। **सूर्क्ष** आदरे। **काक्षि वाक्षि माक्षि** काङ्क्षायाम्। **द्राक्षि ध्राक्षि ध्वाक्षि** घोरवाशिते च। **चूष** पाने। द्राक्षिधातोः द्राक्षाशब्दः। बाहुलकान्नलोपः। अष्ट धातवः॥ ८५॥

**तूषमिति।** हे कृपारसरूषितात्मन्, त्वं यथा पूषा कमलस्य तथैव तूषं तनोषि खेदं मूषसि च इत्यन्वयः। कृपारसेन करुणाम्भसा रूषितः सम्पृक्तः शिशिरितः आत्मा मनो यस्य तादृशस्त्वं यथा येन प्रकारेण पूषा सूर्यः कमलस्य तूषं सन्तोषं तनोति तेन प्रकारेणैव मे तूषं तनोषि प्रविस्तारयसि। कमलस्य रूषो विकासः मम तु मनःप्रीतिरिति विवेकः। खेदं युष्मददर्शनशोकं मूषसि च मुष्णासि अपनयसीत्यर्थः। कीदृशस्त्वम्। दृशोरमृतयूषं शूषन् दृशोः मदक्ष्णोः अमृतयूषं सुधारसं, यूषो रसपर्यायः, शूषन् प्रसुवानः। नेत्रयोरमृतमिवानन्दमुपपादयन्नित्यर्थः। अजूषकः अहिंसकः परोपद्रवरहित इत्यर्थः। अनूषमतिः ऊषा रुजा तद्रहिता मतिर्यस्य दुराशादिदोषरहितबुद्धिरित्यर्थः। ईषभुजां प्रियः, ईषः उञ्छः तं भुञ्जत इतीषभुजः तपस्विनः तेषां प्रियः, शमदमादिगुणयुक्तत्वादिति भावः। तादृशस्त्वं क्ष्मां भूषसि भूतलमलंकरोषि। तादृशसज्जनसम्भव एव हि भूमेरलङ्कारः। तदुक्तम्—

"कटकादिभूषणगणैर्न भूतलं समलंकृतं भवति सागराम्बरम्।
विदुषा परोपकृतिशीलशालिना पुरुषेण शान्तमनसैव केवलम्॥"

इति । **तूष** तुष्टौ । **पूष** वृद्धौ । अस्मात् पूषञ्छब्दः । **मूष** स्तेये । **रूष** रूक्षायाम् । **शूष** प्रसवे । **यूष** हिंसायाम् । **जूष** च । **भूष** अलंकारे । **ऊष** रुजायाम् । **ईष** उञ्छे । अत्र दश धातवः ॥ ८६ ॥

**इत्युक्त इति ।** इत्युक्तोऽसौ सुरकाषिखाषिणमूचे इति सम्बन्धः । इति एवंप्रकारम् उक्तो भगवताभिहितः असावक्रूरः सुरकाषिखाषिणं सुरान् कषितुं हिंसितुं शीलमेषामिति [1]सुरकाषिणो दैत्याः तान् खषितुं हिंसितुं शीलमस्येति तत्खाषी हरिः तमूचे उक्तवान् । किमिति । कमलाकोषणस्तनं जेषते ते नमोऽस्तु । हे भगवन्, कमलाया श्रीदेव्याः कोषणम् ईषदुष्णं कुचयुगलं जेषते सेवमानाय तदाश्लेषणतत्पराय ते नमोऽस्तु । किमन्यद् ब्रूम इति भावः । कीदृशाय । नित्यं जगच्छेषकान् जषते । नित्यं सदा नानावतारेण जगतां लोकानां शेषकान् हिंसकान् जषते हिंसते हयग्रीव-हिरण्याक्षहिरण्यकशिपुप्रभृतीन् निगृहीतवत इत्यर्थः । तदेवाह—झषादि-वपुषे इति । झषो मत्स्यः तदादि मत्स्यकूर्मवराहनृसिंहादि वपुर्यस्य तस्मै । रक्षश्चमूशाषिणे । रक्षसां रावणादीनां चमूं सेनां शषितुं हिंसितुं शीलमस्येति तथाभूताय । वषणोत्सुकान् केश्यादीन् प्रमषते । वषणं हिंसा तत्रोत्सुकान् तत्परान् केश्यादीन् केशिव्योमारिष्टप्रमुखानसुरान् प्रमषते प्रकर्षेण निगृह्णते । भूयोऽपि इतःपरमपि अन्यान् रेषः रोषिष्यते । उक्तेभ्यः परान् मुरनरकादीन् रेषः हिंसाशीलान् रोषितुं हिंसितुं प्रवृत्ताय । कीदृशान् रेषः । भषतो दुर्भाषणादिमहदपकारकारिणः श्वशब्द[व]च्छब्द-मुद्घोषयतः इत्यर्थः । इत्थमनेकप्रकारमरिनिग्रहपूर्वकं जगद्रक्षणजागरूकाय तुभ्यं नमोऽस्त्वि[ति] सोऽक्रूर ऊचे इति सम्बन्धः । **कष खष शिष जष झष शष वष मष रुष रिष** हिंसार्थाः । रिषधातोः

---

1 MS. सुरकाषिखाषिणो.

'अन्येभ्योऽपि दृश्यन्ते' [३.२.७५] इति सूत्रेण विच्प्रत्यये 'वेरपृक्तस्य' [६.१.६७] इति तस्य लोपे च सति चर्त्वजश्त्वाभ्यां रेट् रेड् रेषौ रेषः इति रूपम्। अत्र रेष इति शसन्तः। भष भर्त्सने। उष दाहे। अस्मादौणादिकनप्रत्ययान्तः उष्णशब्दः। जिषु विषु मिषु सेवने। अत्र त्रयोदश धातवः ॥ ८७ ॥

वेषैरिति। कृपामृतपृषद्वर्षी भवान् प्रपोषदशुभप्रश्रेषिभिः मेष्यतमैर्वेषैः दानवान् श्लेषतीत्यन्वयः। कृपामृतस्य करुणापीयूषस्य पृषन्ति विन्दून् वर्षितुं शीलमस्येति तथाभूतो भवान् कारुणिकाग्रेसर इत्यर्थः। प्रपोषन्ति प्रवृद्धमानानि अशुभानि पापानि प्रश्रेषितुं प्रदग्धुं शीलमेषामिति। तादृशैः मेष्यतमैः अवश्यं मेषितुं सेवितुं योग्यैः मत्स्यकूर्मादिविग्रहविशेषैरुपलक्षितः सन् दानवान् हयग्रीवादीनसुरान् श्लेषति दहति संहरतीत्यर्थः। अवताराणामनादित्वानन्त्यत्वेन वर्तमानत्वाद्वर्तमाननिर्देशः। कीदृशान्। प्लुष्टजनान् प्लुष्टाः दग्धाः हिंसिताः जनाः सर्वलोकाः यैः। अत एव प्रोष्यान् प्रोषितुं दग्धुं अर्हान्। दीनजनदयाशालित्वमत्र हेतुः। ते दानवास्तु सामर्षं परघर्षिणोऽपि हृषिताः त्वामाहवे नोपयान्ति। सामर्षं सक्रोधं परान् शत्रून् घर्षन्ति अभिभवन्तीति परघर्षिणः सन्तोऽपि हृषिताः भयजनितरोमहर्षणयुक्ताः। 'हृषेर्लोमसु' [७.२.१९] इतीट्। भयविस्मयमन्दीभूता इति यावत्। त्वां युद्धे नोपयान्ति योद्धुं नागच्छन्ति। तत् किं कारणमिति चेदत्राह तोसहासविहीनशङ्खजनितह्रासाद्रसद्दिक्तटमिति। [त्वा]मित्यस्य विशेषणमेतत्। तोसः शब्दः तस्य ह्रासोऽल्पत्वं तेन विहीनस्य वर्णितस्य शङ्खस्य पाञ्चजन्यस्य जनितात् त्वत्कर्तृकपूरणेनोत्पातात् ह्रासाद् गम्भीरघुमघुमितशब्दघोषाद्धेतोः रसन्ति शब्दायमानानि प्रतिशब्दपूर्णानि दिक्तटानि आशावकाशाः येन, अनल्पशब्दशङ्खध्वनिबधिरितदिगन्ताः।

भीताः के नामाभिमुखमापतेयुरिति भावः। **पुष** पुष्टौ। **श्रिषु श्लिषु प्रुषु प्लुषु** दाहे। **पृषु वृषु मृषु** सेचने। मृषु सहने च। सहनार्थोऽत्र विवक्षितः सामर्षमिति। **घृषु** सङ्घर्षे। **हृषु** अलीके। अलीकं मन्दत्वम्। **तुस ह्रस ह्लस रस** शब्दे। ह्लसिरल्पीभावे च। अयमर्थोऽत्र विवक्षितः ह्रास इति, ह्रासत्वे प्रसिद्धत्वात्। अत्र चतुर्दश धातव उदाहृताः॥ ८८॥

**इत्यादीति।** अजः इत्यादिवादिनं तं संवार्य तेनानुविसित[1] एव निलयं [2]विवेस च इत्यन्वयः। अजः श्रीकृष्णः इत्यादि एवंप्रकारं वादिनं तमक्रूरं संवार्य सङ्गृह्य सम्यक् परिगृह्य, वरणमत्र स्वीकारः, तेन अक्रूरेण अनुविसितोऽनुगत एव निलयं स्ववासभवनं विवेस प्रविष्टवान्। कीदृशोऽजः। लसितस्मितः लसितं श्लिष्टं स्मितं मन्दहासो येन। स्मितयुक्त इत्यर्थः। धर्मपथघस्मरदुर्जनोज्जर्क् धर्मपथस्य धर्माचारस्य घस्मरान् भक्षकान्, नाशकारिण इत्यर्थः, तादृशान् दुर्जनान् खलान् उज्जर्जति हिनस्ति। उत्पूर्वात् जर्जधातोः क्विपि 'रात्सस्य' [८.२.२४] इति नियमेन संयोगान्तलोपाभावात्[3] जकारस्य कुत्वं चर्त्वञ्च। जर्क् जर्जौ जर्जः। उत्पूर्वः उज्जर्क्[4]। धर्मद्वेषिजनविध्वंसीत्यर्थः। कीदृशं निलयम्। जीमूतचर्चिरवझर्झरवाद्यहृद्यम्। जीमूतशब्देन तद्गर्जितं लक्ष्यते। जीमूतं मेघगर्जितं चर्चितुं तर्जयितुं, भर्त्सयितुमित्यर्थः, शीलमस्येति जीमूतचर्ची रवो यस्य। तादृशेन झर्झराख्येन वाद्यविशेषेण हृद्यं मनोहरम्। **लस** श्लेषणे क्रीडायाञ्च। **घस्लृ** अदने। अस्मात् 'सृघस्यद'—[३.२.१६०] इति क्मरच्।

1 *Kṛṣṇārpaṇa* पिसित.
2 *Kṛṣṇārpaṇa* विपेस.
3 रात्सस्यैव लोपो भवति नान्यस्येत्यर्थग्रहणात्.
4 *Kṛṣṇārpaṇa* takes the root as जर्स and the illustration is accordingly उज्जः.

[1]जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु । [2]विसृ वेसृ गतौ । सप्त धातवः ॥ ८९ ॥

भूषेति । स नन्दः आत्ममित्रमक्रूरमागतमवेक्ष्य हसन् ससुतः साधु सम्भाव्य निशि नृपस्य वृत्तं पर्यपृच्छद् इत्यन्वयः । स इति पूर्वमप्रस्तुतोऽपि प्रसिद्धत्वात् सर्वनाम्ना परामृश्यते । स तथा प्रसिद्धो नन्दो नन्दगोपः आत्मनो मित्रं बन्धुम् अक्रूरं आगतं सम्प्राप्तम् अवेक्ष्य दृष्ट्वा हसन् सन्तुष्टहृदयः । अन्तस्सम्भृतस्य हर्षस्यानुभावो हासः । ससुतः सुतेन कृष्णेन सहितः साधु सम्यक् सम्भाव्य सम्मान्य भोजनताम्बूलादिप्रदानेनार्हयित्वा निशि रात्रौ नृपस्य कंसस्य वृत्तं वृत्तान्तं पर्यपृच्छत् परिपृष्टवान् । निशीति रहस्याभिप्रायम् । कीदृशमक्रूरम् । भूषापिशङ्गरुचिपेशलं भूषाणां स्वर्णाभरणानां पिशङ्ग्या पिङ्गलवर्णया रुच्या प्रभया पेशलं सुन्दरम् । कीदृशस्य नृपस्य । मेशोद्धुतारिमशकस्य । मेशः कोपकृतशब्दः अद्यैवाहमरिमशकान् संहरामीत्यादिवीरवादः, तेन उद्धुताः प्रकम्पिताः अरयः शत्रवः एव मशकाः मशकवद्दुर्बलाः येन । बिभीषिकाश्रवणाद्धि दुर्बला एव प्रकम्पेरन्निति भावः । पिशधातोः पेशलशब्दः । मिश मश शब्दे कोपकृते । मशधातोर्मशकः । षट् धातवः[3] ॥ ९० ॥

सोऽपीतीति । सोऽपि शवतां गतस्य शशिवंशोत्थस्य भोजेशितुः वृत्तमूचे । सोऽक्रूरोऽपि शवतां शवत्वं गतस्य मृतप्रायस्येत्यर्थः । शशिवंशादुत्थस्य उद्भूतस्य । शशी तावदमृतमयः तद्वंशोत्थस्तु मृतमय इति महद्वैषम्यमिति सपरिहासेयमुक्तिः । भोजेशितुः कंसस्य वृत्तं सुखमास्ते

---

1 *Kṛṣṇārpaṇa* जर्स.

2 *Kṛṣṇārpaṇa* पिसृ पेसृ.

3 The roots पिश्रृ पेश्रृ गतौ, हसे हसने and णिश समाधौ illustrated in this verse are not separately enumerated.

इत्यादि सामान्येन वर्त्तमानम् ऊचे कथितवान्। विशेषमप्याह—अत्र शस्त्रनिलये प्रस्तुतं शस्तं चापोत्सवञ्च, ऊचे इत्येव। अत्रेति मथुरापुरं परामृश्यते। शस्त्रनिलये धनुश्शालायां प्रस्तुतम् आरब्धं शस्तं शोभनं चापोत्सवं धनुर्यागमहोत्सवं च ऊचे विज्ञापितवान्। किञ्च चाहेन अमहितस्यास्य निधनोद्योगञ्च रहसि ऊचिवान्। चाहः परिकल्कनं, तच्च शाठ्यं व्याजमिति यावत्, तेन हेतुना अमहितस्य निन्द्यस्य सर्वेषामुपालम्भविषयस्यास्य कंसस्य निधनोद्योगं युष्मन्निग्रहे उत्साहं चापयज्ञच्छलाद्युवामत्रानीय निग्रहीतुं प्रवृत्तमस्य दुष्प्रयत्नं च ऊचिवान् निवेदितवान्। रहसीति मन्त्रस्रावपरिहारार्थमुक्तम्। अपि च रंहसा गन्तव्यं खलु इति प्रभोर्दृढामाज्ञां चाभ्यधात्। रंहसा वेगेन गन्तव्यं भवद्भ्यामितः प्रस्थातव्यमेवेति प्रभोः कंसस्य दृढां स्थिराम् आज्ञां नियोगं च अभ्यधाद् अभिहितवान्। आज्ञा न लङ्घनीयेति प्रभुशब्दार्थः। **शव** गतौ। **शश** प्लुतगतौ। **शसु** हिंसायाम्। अस्मात् शस्त्रशब्दः। **शन्सु** स्तुतौ। अस्मात् शस्तशब्दः। **चह** परिकल्कने। **मह** पूजायाम्। **रह** त्यागे। अस्माद् रहश्शब्दः। **रहि** गतौ। अस्माद् रंहश्शब्दः। **दृह दृहि बृह बृहि** वृद्धौ। दृहधातोः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपैः दृढशब्दः। 'दृढ स्थूलबलयोः'—इति निपातनात् ढत्वम्। अत्र नव धातवः॥ ९१॥

**तच्छ्रुत्वेति।** असौ नन्दोऽपि परिदृंहितादरं तच्छ्रुत्वा बृहद्भाजनैर्यानैरुपबृंहितः प्रातः प्रयातुं मनो विहितवान् इति सम्बन्धः। नन्दगोपोऽपि, अपिशब्देन रामादयस्समुच्चीयन्ते, परिदृंहितो वर्धितः आदरः आस्था यथा भवति तथा तच्छ्रुत्वा तद्वृत्तान्तमाकर्ण्य। धनुरुत्सवदर्शनौत्सुक्यमादरहेतुः। तद्गतन्तु व्याजमसौ न विदितवान्, अक्रूरस्य कृष्णेन सह मन्त्रस्यातिगुप्तत्वात्। बृहद्भाजनैः बृहन्ति प्रभूतानि भाजनानि घटकटाहादीनि पात्राणि

येषु तादृशैः यानैः शकटैः उपबृंहितः प्रवृद्धपरिकरः। प्रातः उषसि प्रयातुं मधुरापुरं गन्तुं मनो विहितवान् धृतवान्, मनसि निश्चितवानित्यर्थः। गोविन्दो जगद्दोहिनं कंसं प्रोहिष्यन् मोदेन निशां निन्ये। श्रीकृष्णस्तु जगतां लोकानां दोहिनं अर्दनशीलं लोकपीडाकारिणमित्यर्थः। तथाभूतं कंसं प्रोहिष्यन् हिंसितुमुपक्रममाणः श्वस्तावदेनं हन्तास्मीति निश्चिन्वान इत्यर्थः। मोदेन तन्निधनप्रयुक्तजगत्पीडाप्रशमनसुखचिन्ताजनितेन प्रहर्षेणेत्यर्थः। निशां निन्ये रात्रिशेषं गमयामास। प्रमोदद्योतकं विशेषणमाह तुहिनांशुरम्यवदन इति। चन्द्र इव मनोज्ञमुखः। प्रसादोऽत्र चन्द्रेण साधर्म्यम्। हृदयस्थितं प्रमोदादिकं मुखे प्रकाशते। जगदर्हणीयमहिमा जगता लोकेन अर्हणीयः पूजनीयः महिमा माहात्म्यं यस्य। जगत्पूज्यस्य जगद्बाधकनिधनमवश्यमभ्युपगन्तव्यमिति भावः। तुहिर् दुहिर् उहिर् अर्दने। तुहिधातोस्तुहिनं, दुहिधातोर्दोहः, उहिधातोः प्रपूर्वात् प्रोहिष्यन्निति रूपम्। अर्ह पूजायाम्। अत्र सप्त धातवः॥ ९२॥

इति श्रीनारायणभट्टपादमहाकविविरचिते धातुकाव्ये प्रथमः सर्गः।

श्रीनारायणनामकोपरिनवग्रामस्वधामाधिप-
क्षोणीदेवकविप्रकाण्डकलितं यद्धातुकाव्यं शुभम्।
व्याख्या तस्य तु पाणिवादकलिता संक्षेपरूपैव या
तस्यां प्राथमिको निकामगुरुतादुर्गोऽपि सर्गो गतः॥

श्रीगुरुपादेभ्यो नमः। शुभमस्तु।

## [ द्वितीयः सर्गः ]

प्रद्योतनस्येति । इतः परमात्मनेपदिनः । गोपाः प्रद्योतनस्योदयमाप्य जवेन निरीयुः इत्यन्वयः । गोपाः नन्दगोपादयः प्रद्योतनस्य सूर्यस्योदयमाप्य प्राप्य प्रभातकाल एवेत्यर्थः, जवेन वेगेन निरीयुः प्रस्थिताः । कीदृशाः । श्वेतांशुकोन्मेदुरचारुवेषाः श्वेतांशुकैः सितदुकूलैः उन्मेदुरा उच्चैः प्रवर्धमानस्निग्धप्रभाः चारवः सुन्दराः वेषाः अलङ्काराः येषाम् । अस्विन्नरुग्घोटकरुट्यमानमार्गाः अस्विन्ना स्वेदरहिता अम्लाना रुक् शोभा येषां तादृशैः घोटकैः अश्वैः रुट्यमानाः प्रतिहताः निरन्तरेण प्रतिरुद्धा व्याप्ता इत्यर्थः, मार्गाः पन्थानो येषाम् । अनेन अश्वानां बाहुल्यमुक्तम् । अश्वानां स्वेदो रोग इत्याहुः । अलुटिता लुटितेन प्रतिघातेन रहिताः अप्रतिबद्धगतय इत्यर्थः । **द्युत** दीप्तौ । अस्मात् प्रद्योतनशब्दः । प्रद्योतत इति प्रद्योतनशब्दः । **श्विता** वर्णे । **ञिमिदा** स्नेहने । अस्मान्मेदुरशब्दः । **ञिष्विदा** स्नेहनमोहनयोः । अस्मान्निष्ठानत्वे स्विन्नशब्दः । **रुच** दीप्तौ अभिप्रीत्तौ च । **घुट** परिवर्त्तने । अस्मात् घोटकशब्दः । **रुट लुट रुठ**[1] प्रतिघाते । अत्राष्ट धातवः ॥ १ ॥

कृष्णोऽपीति । अयं कृष्णेऽपि महेला आश्वास्य अनभ्यसन्तोभककंसजीवस्रंसाय प्रतस्थे इत्यन्वयः । कृष्णोऽपि महेलाः गोपाङ्गनाः अनुनयवचनैराश्वासं शोकप्रशान्तिं लम्भयित्वा अनभ्यानां नभितुं हिंसितुं अयोग्यानां अवध्यानामित्यर्थः, सज्जनानां तोभकस्य हिंसकस्य साधुजनहिंसापरस्य कंसस्य जीवस्रंसनाय प्राणविनाशनार्थं प्रतस्थे प्रस्थितवान् । *कीदृशः । पापध्वत् पापान् दुष्टान् ध्वंसते विनाशयतीति पापध्वत् ।* ‘वसु-

---

1 The root illustrated (in the next verse) is लुठ.

स्रसु'—[८.२.६२] इत्यादिना सस्य दः दस्य चर्त्वम्। दुरितविनाशन इत्यपि व्याख्येयम्। कीदृशीर्महेलाः। तापोल्लुठिताङ्गशोभाः तापेन स्वविरहदुःखेन उल्लुठिता प्रतिहता अङ्गशोभा शरीरसौन्दर्यं यासाम्, सन्ताप-संशोषितशरीरा इत्यर्थः। मारक्षुभिताः मारेण मन्मथेन क्षुभिताः सञ्चलिताः परवशीकृता इत्यर्थः। तादृशीर्गोपसुन्दरीः सरसानुसरणवचनैरपगतशोका विधाय प्रस्थितवानिति सम्बन्धः। **शुभ** दीप्तौ। **क्षुभ** सञ्चलने। **णभ तुभ** हिंसायाम्। **स्रन्सु ध्वन्सु भ्रन्सु** अवस्रंसने। ध्वन्सु गतौ च। सप्त धातवः ॥ २ ॥

**अभ्रस्तेति।** असौ गोपकुलैस्सह ययौ। असौ श्रीकृष्णो गोपकुलैः पशुपालसमूहैः सह ययौ गतवान्। कीदृशः। अभ्रस्तविस्रम्भ-जुषा बलेन समं भुवनाभिवृद्ध्यै प्रवृत्तः। अभ्रस्तम् अनवस्रस्तं अक्षतमित्यर्थः। तादृशं विस्रम्भं विश्वासं जुषते अधिगच्छतीति तथाभूतेन बलेन श्रीबलभद्रेण समं सहैव भुवनानां लोकानाम् अभिवृद्ध्यै सम्पद्वर्धनाय परिपालनार्थ-मित्यर्थः, प्रवृत्तः प्रकर्षेणोद्युक्तः। भुवनपरित्राणार्थमेवेदं प्रस्थानमिति भावः। कीदृशैर्गोपकुलैः। अशर्धनैः कुत्सितशब्दरहितैः साधुभाषिभिरित्यर्थः। कृपास्यन्दसुक्लृप्तमोदैः कृपास्यन्देन भगवतः कारुण्यप्रवाहेण हेतुना सुक्लृप्तः साधु समर्थितः सम्यक्सम्पादित इत्यर्थः, मोदः सन्तोषो येषाम्। तादृशैः सम्पन्नसन्तोषैर्गोपकुलैः सह सबलो भगवान् श्रीवासुदेवो भुवनसम्पद्वर्धनाय प्रस्थितवानिति सकलमवदातं मङ्गलम्। **स्रन्भु** विश्वासे। **वृतु** वर्तने। **वृधु** वृद्धौ। **शृधु** शब्दकुत्सायाम्। **स्यन्दू** प्रस्रवणे। **कृपू** सामर्थ्ये। वृत्। द्युतादिर्वृतादिश्च वृत्तः। अत्र सप्त धातवः ॥ ३ ॥

॥ शुभमस्तु ॥

# NOTES ON READINGS

The reasons for preferring particular readings with regard to some of the more important instances in *DhK* and *K* are given below.

P. 1, l. 6. The word भवान्याः is not essential when there is महिषारेः. In the reading तदस्याः, तद् indicates the greatness of the पदयुगल and अस्याः is in keeping with the view that the commentary was written at Mukkola. (see Introduction).

P. 1, l. 8. योजनाः conveys the sense more clearly than लोचनाः.

P. 2, l. 5. एतावतिथः alone is correct because when a word indicating number and ending in वत् gets डट् by तस्य पूरणे डट् (Pāṇ. 5. 2. 48), इथुक् comes as an āgama by वतोरिथुक् (Pāṇ. 5. 2. 53).

P. 3, l. 6. द्युत is the form of the root found in all versions of *DhP*. In our work also in II. 1 the root is illustrated by द्योतन and the form is given as द्युत in *K*.

P. 5, l. 9. वा is retained because आप्लवनम् and उत्प्लुत्य गमनम् are given as alternative meanings of आप्रवणम् by all while उद्धरणम् is the sense according to Bhoja alone.

P. 6, l. 9. The majority of Mss. read छिदि and this is the reading in *PS* also.

P. 7, l.5. ष्वद is preferred because if the reading is स्वद the citation of the rule धात्वादेः षः सः and the subsequent statements become irrelevant.

P. 8, l.12. हृषि is accepted against हृदि seen in the majority of manuscripts because we don't get a root हृदि, and *SKĀ* from which the sūtra is cited reads only

हृषि. The citation from *SKĀ* occurs in *PS* also and there too the reading is हृषि.

P. 16, l. 15. दैर्घ्यक्रिया कदर्थनं वा. This is in keeping with the statements in *MDV* and. *Kṣ*.

P. 22, l. 18. आर्जकैः is the correct form and not अर्जकैः because it is made clear that the root is used with the upasarga आ.

P. 35, l.1. बिन्दि is accepted because the example given in *PS* under this is बिन्दु.

P. 35, l.2. उन् is the correct reading here because the Bhoja sūtra from which the citation is made, makes it clear that the suffix is उ and for the particular words cited it is नित्.

P. 37, ll.4,8,16. The form मुटित and, in keeping with it, the root मुट are preferred to मुडित and मुड, although the MS. evidence is more or less equally divided between the two, in view of the reading in *MDV*. The additional root मुडि found here in a few Mss is not taken because it is not illustrated.

P. 37, l.6. The expression पुनः पुनः is retained against the majority of MSS. because of the explanation that णिनि is applied to the root किट here in the sense of आभीक्ष्ण्य.

P. 61, l.21. क्तिनि is adopted in preference to the majority reading क्विनि because the form मूर्ति is got by क्तिन्.

P. 63, l.8. The reading is emended as वर्णी as the other readings do not make proper sense in the context.

P. 67, l.16. समासान्तः षच् is adopted because पङ्कजाक्ष being a Bahuvrīhi compound, it is the sūtra बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (Pāṇ. 5.4.113) that applies, and not अक्ष्णोऽदर्शनात् which relates to instances like गवाक्ष where the meaning is not 'eye'.

